**प्रकाशक :**
श्रीवल्लभाचार्य ट्रस्ट,
कंसारा बजार, माण्डवी, कच्छ, गुजरात ३७० ४६५.
☎ : (02834) 31463, 21306.
Email : gosharadad1@sancharnet.in
gosharad@rediffmail.com
Website : http://www.pushtimarg.net

Vidvatsaṅgoṣṭhī : Papers And Proceedings on Anyakhātivāda during the Seminar on the Vāllabha theory of error.

**प्रथम संस्करण :** वि. सं. २०५८. वल्लभाब्द : ५२५.

**प्रति :** १०००.

**ग्रन्थप्रकाशन सहाय :** Rs. 150/-



**मुद्रक : श्रीवल्लभ बुक मेन्युफेक्चरिंग् कं., ५५/४६ सिटिमील कम्पाउंड,
कांकरीआ रोड़, अमदावाद, गुजरात.**

# PREFACE

Śrī Vallabhācārya Trust, Māndvī-Kutch was established in 1996 with various aims and objectives such as educational, social, cultural, environmental etc. in general; and with a long-term project for setting up a research institution and education centre in the interest of Śuddhādvaita-Puṣṭibhakti Sampradāya in particular.

At present, following activities have been undertaken by the trust:

- Seminar : Internal and External.
- Refresher Courses : For Ācāryas and for Followers.
- Publication
- Encyclopedic CD Rom of Vallabha Vedant
- Catalogues Catalogorum of the Manuscripts of Vallabha Vedant
- Website : www.pushtimarg.net
- Library of : Cassettes, CDs, Books.
- Book Stall
- Conservation : Manuscripts etc.

- Educational Aid
- School Boarding for the Students studying Saṁskṛt
- Gauśālā

In 1999 Śrī Vallabhācārya Trust, Mandvi decided to start a series of national seminars on various topics of the Śuddhādvaita-Puṣṭibhakti Sampradāya with design to resume genuine and rigorous discussion on thought-provoking philosophical issues, to bring about awareness concerning the distinctive features of the Śuddhādvaita-Puṣṭibhakti Sampradāya and to reestablish dialogue ofŚuddhādvaita-Puṣṭibhakti Sampradāya with other Indian and foreign schools of thought.

Accordingly, the first three-day national seminar was arranged at Gandhinagar, capital city of Gujarat, in the month of November 1999 on the Linguistic Philosophy of Vāllabha Vedānta with special reference to an encyclopedic treatise 'Prasthānaratnākara' by Goswāmī Śrī Puruṣottamacaraṇa (Vikrama Samvat 1724), an eminent scholar of this system. The second national seminar was organized on the Theory of Causation at Vadodara, Gujarat from 22 to 25 November 2000.

Subsequently the seminar on the Theory of Error took place at Pune in the month of January 2002.

This volume is comprised of the verbatim report of the

same. Entire proceedings of the seminar had been taped for documentation. On the base of the recorded tapes proceedings of the seminar was composed and dispatched to the respective participants to ensure its legitimacy and to provide opportunity for further addition and alteration in their papers and discussions in the light of the discussion, which was held in the course of seminar. Addition, alteration and deletion are made in papers and discussions according to the written instruction of the very presenters. Internal discussions, inaudible and un-understandable wordings caused by noise etc., narration which was given by the scholars at the time of presentation of their papers and unrecorded portion of the discussion while changing the sides of the cassettes could not be incorporated in the report. Such portions are indicated by '...' three dots wherever the case is. Except such cases wordings are kept as it were spoken.

After all the very objective of the seminar is to keep continue dialogue of Śuddhādvaita Puṣṭibhakti Sampradāya with other systems, therefore, unanswered questions, intended but unexpressed or partially expressed thoughts for the clarification of the stand of the Śuddhādvaita Puṣṭibhakti Sampradāya during seminar are being added in footnote as a postscript by respected Gosvāmī Śrī Śyāma manohara.

To give the seminar an encyclopedic touch and to put forward the stand point of Vāllabha Vedānta in the most comprehensive and comparative manner, we earnestly invited

papers on al most all leading philosophical schools including Ācārya Śrīkar, Bhāskarācārya and Mīmāṁsā schools of Ācārya Kumāril Bhatt and Ācārya Prabhākar etc. Unfortunately we could not get papers on any of above significant philosophical schools. However, we are very much thankful to Dr. K. E. Devnathan for an excellent extempore presentation on : the possible reply of Prabhākara to Naiyāyika's arguments against Akhyātivāda. In spite of our request, untoward death of his father did not allow Dr. Devnathan to give his presentation the shape of a research paper. Therefore, as the presentation does not suit to the format of this report, we are regretfully unable to publish the same. We are very thankful to all the participants for the success of the seminar by presenting scholarly papers and active participation in discussion.

We also express our gratitude to revered Gosvāmī Śrī Śyāma Manoharajī, who has furnished this volume with the scholarly comparative and critical essay on the western approach on Error and because of whose generous and relentless support up to the present moment we are going to publish this report.

We are very much thankful to Prof. Vashishtanarayana Jha, Dir. CASS, JNU, Delhi for inviting us to organise seminar in the pleasant and erudite atmosphere of the University of Pune.

We are grateful to the trustees of Śrī

Vallabha-Vidyāpītha-Viṭṭhaleś-prabhucaraṇa Āśrama Trust, Kolhapur (VVA Trust) for making available valuable Sanskrit books of Śuddhādvaita Puṣṭibhakti Sampradāya for the presentation of the participants of the seminar.

It is not possible to forget persistent assistance of Sri Madhubhai Bhatiya, Sri Janakbhai Shah, Sri Rasikbhai Shah, Sri Dahrmendrsinh Jhala, Sri Pankaj Gor, Sri Pravinabhai Dadhaniya, Sri Bipinbhai, Sri Mathuradas Bhatiya in various arrangements of the seminar.

On behalf of Śrī Vallabhācārya Trust

2002/10/2 Goswami Sharad

---

Śrī Vallabhācārya Trust

Kansara Bazar, Mandvi-Kutch, Gujarat, 370 465.

☎ : (02834) 31463, 21306.

Email : gosharadad1@sancharnet.in

gosharad@rediffmail.com

Website : http://www.pushtimarg.net.

# अनुक्रमणिका

## १९।१।२००२ तृतीयदिवसीय प्रात:कालीन सत्र



## १९।१।२००२ तृतीयदिवसीय मध्याह्न सत्र



## संगोष्ठ्याम् अचर्चिताः सम्प्राप्ताः निबन्धाः

॥श्रीगिरिधारी तनोतु मङ्गलानि॥

# ।। ख्यातिविवेकः ।।

(प्रमेयरत्नार्णवोत्तरार्धान्तर्गतः)

(मङ्गलाचरणम्)

श्रीमद्गोवर्धनाधीशं गोपिकाप्राणवल्लभम्॥
रासक्रीडारतं वन्दे भजनानन्दलब्धये॥१॥
घोषसीमन्तिनीनेत्रचकोरचयचन्दिरम्॥
वन्दे श्रीबालकृष्णाख्यं प्रभुमानन्दमन्दिरम्॥२॥
वन्दे श्रीवल्लभाचार्यान् पुष्टिमार्गप्रवर्तकान्।
श्रीविट्ठलेशचरणान् आश्रये कृष्णतुष्टये॥३॥
ये सङ्क्षेपेण पूर्वार्धे पदार्था विनिरूपिताः।
तद्व्यासं कर्तुमारब्धम् उत्तरार्धं मयाधुना॥४॥

(प्रकरणोपक्रमः)

तत्र पूर्वार्धे पूर्वं प्रपञ्चविवेकः* उक्तः, तद्दाढ्र्याय ख्यातिस्वरूपनिरूपणम् आवश्यकम्, ख्यातिबोधं विना प्रपञ्चस्वरूपस्य आकलयितुम् अशक्यत्वात्. अतः तृतीयस्कन्ध-सुबोधिनीप्रदर्शित-पद्धत्या पूर्वं ख्यातिः विचार्यते.

---

* पूर्वार्धोक्तप्रकृतोपयोगी विषयताविवेकांशो यद्विस्तारोऽत्र चिकीर्षितः :

(विषयरूपप्रपञ्चस्य, ब्रह्मात्मकत्वेऽपि, तद्विषयतायाः मायिकत्वम्)

...व्यामोहिका माया जीवं व्यामोहयित्वा तदीयबुद्धौ प्रापञ्चिकपदार्थ-सद्वस्तु-सदृशं मायिकं पदार्थम् उत्पाद्य पुरःस्थितविषये प्रक्षिपति. तदा पदार्थग्रहणे तस्यापि ग्रहणात् तद्विशिष्टज्ञानं भ्रमात्मकं भवति. तथा सति वस्तुग्रहे मायिकधर्माणामपि ग्रहणाद्, "**यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिर्नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयम्**" (भाग.पुरा.११।७।७), "**देहं मनोमात्रमिमं गृहीत्वा**" (भाग.पुरा.१-१।२३।५०), "**त्वय्युद्भवाश्रयति यस्त्रिविधो विकारो मायान्तरापतति नाद्यपवर्गयोर्यत्**" (भाग.पुरा.११।१९।७), "**स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्**" (भाग.पुरा.१०।१४।

२२ ) इत्यादिवाक्यानि सावकाशानि भवन्ति. इमानि तादृक्प्रतीतिमूलकानि प्रमाणानि अवलम्ब्य विवर्तादिवादानां प्रवृत्तिः. पुराणादौ तादृशवादमूलमायिकत्वोक्तिः वैराग्यार्थम् उपयुज्यते इति व्यवस्थापितं तत्त्वदीपे. अतः प्रतीतिरेव मुग्धानां मायिकी, न वस्तुनि कश्चिद् दोषः स्वाभाविकः. अतएव ब्रह्माणं प्रति भगवता उक्तम् **''ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि तद् विद्यादात्मनो मायां यथाभासो यथा तमः''** ( भाग.पुरा.२।९।२३ ) इति. एतद्व्याख्याने सुबोधिन्याम् उक्तं, **''तया व्यामोहिता बुद्धिः पदार्थान् अन्यथा मन्यते नतु पदार्थाः अन्यथा भवन्ति''** ( सुबो.२।९।३३ ) इति. अग्रेच उक्तम् **''प्रमाणभूतो वेदः 'सर्वं खलु इदं ब्रह्म' ( छान्दो.उप.३।१४।१ ) इति आह. ब्रह्मविदां प्रतीतिरपि तथा. भ्रान्तप्रतीतेस्तु न अर्थनियामकत्वम्, अन्यथा भ्रमदृष्ट्या गृहीतं जगद् भ्रमरूपमेव स्यत्. अतो विषये विषयता काचित् स्वीकर्तव्या, यया दृष्टिः सविषया भवति. अन्यथा पदार्थानां स्थिरत्वाद् भ्रमदृष्टिः निर्विषया स्याद्''** ( सुबो.२।९।३३ ) इति. एवम् उपपाद्य स्पष्टीकर्तुं पुनः फलितम् उक्तम् **''विषयता मायाजन्या विषयो भगवान्''** ( सुबो.२।९।३३ ) इति.

**( विषयजनितज्ञानं प्रमा विषयताजनितज्ञानं तु भ्रमः )**

एवं सति अब्रह्मविदां विषये विषयता च प्रतीयते इति उक्तं भवति. यथा — भ्राम्यतः पुरुषस्य, ''घटो भ्राम्यति'' इति प्रत्यक्षे घटगताकृत्यादिः वस्तुभूता, प्रतीयते, भ्रमणन्तु विषयतारूपं, विषयरूपं भगवदात्मकं वस्तुभूतम्. यत् पुनः तत्रैव, उत्पत्ति-विनाश-कुत्सितत्वान्योन्याभावादि प्रतीयते, तद् विषयतारूपं भ्रमणवद् मायिकं भासते. तथा घटपटादिरूपं जगत् प्रतीयते, नतु(!?) मायिकं बोध्यम्. इदमेव विविच्य सुबोधिन्याम् **''ऋतेऽर्थं यत् प्रतीयेत''** ( भाग.पुरा.२।९।३३ ) इत्यस्यैव व्याख्याने उक्तम् — **''अतो विषयताजनितं ज्ञानं भ्रान्तं विषयजनितं प्रमा इति.''** ( सुबो.२।९।३३ ).

**( विषयताद्वैविध्यम् )**

विषयताच द्विधा सुबोधिन्यां विवृता **''साच विषयता द्विधा आच्छादिका, अन्यथाप्रतीतिहेतुः च अपरा''** ( सुबो.२।९।३३ ) इत्यारभ्य **''तस्माद् दर्पणे मुखजननवत्, तेजोऽभावे अन्धकारजननवत् माया मोहितपुरुषबुद्धावपि विषयताद्वयं**

जनयति इति अर्थ:'' (सुबो.२।९।३३) इत्यन्तेन ग्रन्थेन. विषयताद्वयं कर्मभूतं माया जनयति इति फक्किकार्थ:. पुनः विषयताद्वयस्यापि स्वरूपं निगमयितुम् अग्रे भणितं : ''**तत्र एका ब्रह्मतारूपतां न प्रकाशयति; एकातु जगद्रूपा विषयता**'' इति. इह ''**ब्रह्मतारूपतां न प्रकाशयति**'' इति उक्त्या, ''**ऋतेऽर्थं यत् प्रतीयेत**'' इति यद् उक्तं तद् उपपादितम्. ''**एकातु जगद्रूपा विषयता**'' इति उक्त्या ''**अर्थम् ऋते यत् प्रतीयेत**'' इति पूर्वं यद् उक्तं तत् समर्थितम्. ''**जगद्रूपा विषयता**'' = जगदिव सत्यमिव रूपं यस्याः सा जगद्रूपा इति समासो ज्ञेय:. एतदेव ''**यथाऽऽभासो यथा तम:**'' इति दृष्टान्तेन मूले विवेचितम्. नच '' '**जगद्रूपा विषयता**' इति उक्त्या दृश्यमानस्य जगतो विषयत्वं स्वीक्रियताम्'' इति वाच्यं, ''**विषयो भगवान्—विषयता मायाजन्या**'' इत्यनेन विषयतारूपस्य जगतो विषयतायाः पृथक्त्वस्वीकारात्. अन्यथा ब्रह्मणो विषयत्वस्य वक्तुम् अशक्यत्वात्, जगतः च विषयतारूपत्वाङ्गीकाराद्, ''**विषयो भगवान्**'' इति उक्तिरेव बाधिता स्यात्. अतो ''**जगद्रूपा विषता**'' इत्यस्य अस्मदुक्तएव अर्थो ज्ञेय:. प्रापञ्चिकनीलस्तुसदृशं विषतारूपं नीलं तमः प्रतीयते, इयमेव जगद्रूपा विषयता.

**(द्विविधायाअपि विषयतायाः पुनः धर्मधर्मिरूपद्वैविध्यम्*)**

इदन्तु विशिष्य ज्ञेयं : मायाहि कुत्रचिद् विषयतारूपं धर्मं सृजति, कुत्रचिद् धर्मिणं विषयतारूपम्. भ्रमरिकादृष्ट्यचा गृहीते घटे भ्रमणं विषयतारूपम्, तेजोऽभावेतु धर्मी विषयतारूपो अन्धकार:. एवम् उभयविधा विषयता जगत्समानाकारा. अतएव '**जगद्रूपा**' इति उच्यते.

एवञ्च विषयतया पदार्थानाम् अन्यथाभानम् नतु पदार्था अन्यथा इति निष्कर्ष:.

यतो विषयताद्वयम् आच्छादक-अन्यथाप्रतीतिहेतुरूपम् ब्रह्मज्ञानेन नाश्यते. तद् उक्तं सुबोधिन्याम् अत्रैव ''**तदुभयव्यावृत्त्यर्थं सर्वाणि प्रमाणानि इतिभाव:**'' इति.

*एवं हि विषयतायाः चातुर्विध्यं भवति. तथाहि— [१]धर्माच्छादिका, [२]धर्म्याच्छादिका, [३]अन्यथाधर्मप्रतीतिहेतुभूता, [४]अन्यथाधर्मिप्रतीतिहेतुभूता च इति(सम्पा.).

( अपरोक्षज्ञानजननप्रक्रियानिरूपणम् )

तत्र मनःसंयुक्तचक्षुः इन्द्रियेण शुक्तेः संयोगे तज्जन्यं सामान्यज्ञानम् उत्पद्यते. इदं सामान्यज्ञानम् इन्द्रियार्थसंयोगजन्यं संशयादीनां सर्वेषां ज्ञानानां पूर्वं सम्भवति. ततः उद्भूतसत्त्वगुणस्य बुद्ध्या साहित्ये प्रमात्मकं ज्ञानं 'निश्चय' शब्दवाच्यम् उद्भवति. अतएव निबन्धे सर्वनिर्णये उक्तम् "**सत्त्वसहिता बुद्धिः प्रमाणम्**" ( त.दी.नि.२।१४७ ) इति.

( प्रत्यक्षादिज्ञानप्रकाराणां पञ्चविधबुद्धिवृत्तिरूपता )

**संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च।**
**स्वाप इत्युच्यते बुद्धेर् लक्षणं वृत्तितः पृथक्॥**

( भाग.पुरा.३।२६।३० ) इति,

कपिलवाक्येन संशयादिज्ञानानां बुद्धिवृत्तित्वेन गणनाद् भागवतमते बुद्धेरेव विशिष्टज्ञानजनकत्वं, "**द्रव्यस्फुरणविज्ञानम् इन्द्रियाणामनुग्रहः**" ( भाग.पुरा.३।२६।२९ ) इति बुद्धिलक्षणात्. अतो मनःसंयुक्तचक्षुषा सामान्यज्ञाने जनिते पश्चात् सत्त्वादिगुणसहितया बुद्ध्या तारतम्येन अनेकप्रकारकं जायमानं

---

( एतादृशस्य प्रपञ्चस्य भाने अधिकारभेदः )

अयं प्रपञ्चो अधिकारिभेदेन त्रिधा भासते : [१]तत्र ब्रह्मभूतानां ब्रह्मात्मकएव शुद्धो भासते; यथा, यस्मिन् क्षणे सएव शुक्लो गृह्यते तद्वत्. [२]शास्त्रोत्पन्नज्ञानिनान्तु ब्रह्मधर्म-मायाधर्म-युक्तः तत्तद्धर्म-सत्यत्व-मिथ्यात्व-विवेकपूर्वं भासते; यथा, पटस्वरूपौपाधिहरितत्वयुक्तपटे गृहीतेऽपि पटगताकृत्यादीनां सत्यत्वं — हरिततायाः मायिकत्वं बुध्यते, तद्वत्. [३]अविवेकिनान्तु ब्रह्मधर्म-मायाधर्म-युक्तः तत्तद्धर्माणाम् एकरूपज्ञानपुरःसरं भासते; यथा, हरितकाचोपनेत्रयुतचक्षुषा बालेन गृहीतः पटः तद्गताकृत्यादेः औपाधिकहरितत्वादेः च सत्यत्वावबोधपूर्वकं भासते तथा. एवं सति भानएव भेदो न स्वरूपे. अतः प्रपञ्चस्य ब्रह्माभिन्नत्वात् सत्वत्वम् अङ्गीकार्यं श्रुतिशरणैः. ये पुनः उत्पत्ति-विनाश-कुत्सितत्व-भेदादयो धर्माः प्रतीयन्ते ते मायिकाः इति सुधिभिः आकलनीयम्.

**( इति प्रकृतोपयोगी प्रमेयरत्नार्णवीयपूर्वार्धगतप्रपञ्चविवेकांशः )**

ज्ञानं 'संशया'दि उच्यते. अतएव सुबोधिन्याम् उक्तम् "**द्रव्यस्य घटादेः स्फुरणे सति संस्कारेण आलोकेन वा यद् विशिष्टज्ञानं, यस्मात् केवलं चक्षुषा ज्ञाने तारतम्यं न स्याद्**" (सुबो.३।२६।२९) इति. अतएव लक्ष्मीतन्त्रे त्रयोदशाध्याये उक्तं "**चक्षुषालोच्य वस्तूनि विकल्प्य मनसा तथा, अहम्मत्याप्यहङ्काराद् बुद्ध्यैव ह्यध्यवस्यति**" (ल.तं.१३।३४) इति.

अन्येतु "प्रत्यक्षज्ञानमात्रं प्रति मनइन्द्रियविषयाणां कारणता, न तत्र बुद्धेः निवेशः" इति आहुः. अस्मन्मतेतु भागवत-तृतीयस्कन्धीय-वाक्यात् संशयादीनि ज्ञानानि बुद्धिः उत्पादयति; अतः, प्रत्यक्षज्ञाने मनइन्द्रियविषयाणां सामान्यज्ञानोत्पादकत्वं, बुद्धिस्तु विशेषाकारेण 'संशया'दि शब्दवाच्यानि ज्ञानानि जनयतीति तेभ्यः अयम् इतरो अस्माकं पन्थाः.

**(विपर्यासरूपायाः बुद्धिवृत्तेः प्राकट्यप्रक्रिया)**

तत्र चक्षुःशुक्तिसंयोगे सामान्यज्ञानोत्तरं माया भगवतः शक्तिः तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदा 'इयं शुक्तिः' इति बोधो न जन्यते, "**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च**" (भग.गीता.१४।१७) इति भगवद्वाक्यात् तमसाहि अज्ञानस्य उत्पादकत्वात्. तथाच पदार्थ-याथात्म्य-स्फुरणाभावात् मायामोहिता बुद्धिः, रजत-संत्कार-प्राबल्यात् चाकचक्यादि-धर्मसादृश्यम् आदाय, रजतं तत्र निर्माति. तद् इदं बौद्धमेव रजतं बुद्ध्या विषयीक्रियते, नतु सामान्यज्ञाने चक्षुविषयीभूतम् इति विवेकः, तदानीं रजतस्य अभावात्, सामान्यज्ञानानन्तरं बुद्ध्या रजतोत्पादनात्. विशेषज्ञानेतु रजतस्य कल्पितत्वेन आन्तरत्वाद् बुद्ध्यैव ग्रहणं, नतु इन्द्रियैः. अतः सामान्यज्ञानेतु शुक्तिरेव विषयीभूता, तस्यैव सामान्यज्ञानं, विशेषज्ञानन्तु बुद्धिकृतम् इति तत्र बौद्धमेव रजतं विषयीभवति इति निष्कर्षः. तद् उक्तम् "**अनुमितमन्तरा त्वयि विभाति मृषैकरसे**" (भाग.पुरा.१०।८७।३७) इति. अस्य सुबोधिन्याम् "**रजतन्तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च, तत्र सा बुद्धिरेव कारणम्. ...इन्द्रियार्थयोः मध्ये भाति तद् मृषा**" इति निरूपितम्. अतएव प्रथमस्कन्धे "**तेजोवारिमृदां यथा विनिमयः**"

(भाग.पुरा.१।१।१) इत्यस्य सुबोधिन्याम् ''**तेजसि वारिबुद्धिः मरीचितोये**'' इत्यारभ्य ''**शुक्तिरजतादिषु**'' इत्यन्तेन नानाभ्रमान् उक्त्वा भ्रमविषयाणां बुद्धिजन्यता उक्ता, ''**यथा जीवानां बुद्धिकल्पिता**'' इत्यनेन. निश्चयात्मके ज्ञानेतु इन्द्रियार्थएव बुद्ध्या गृह्यते, न तत्र बुद्धिकल्पितो विषयः. इन्द्रिय-तदर्थयोः मध्ये यद् बुद्धौ अन्यदेव भाति तत् मृषा, तादृशं ज्ञानं भ्रमात्मकम्.

एवं सति **इन्द्रियेण गृह्यमाणाद् विषयात् शुक्त्यादिरूपाद् अन्यस्य रजतादेः ख्यातिः अन्यख्यातिः** इति उच्यते. तद् इदं भ्रमात्मकं ज्ञानं बुद्धिवृत्तिरूपं 'विपर्यास'शब्दवाच्यम्. अतएव ''**विपर्यासो भिन्नार्थप्रतिपादकः**'' (सुबो.३।२६।३०) इति उक्तं, सुबोधिन्यां, **भिन्नार्थः** इत्यत्र ''इन्द्रियसंयुक्तार्थाद् भिन्नो अर्थः'' इति ऊह्यम्. एतावता निरुपाधिभ्रमे इन्द्रियाणि सन्तमेव अर्थं विषयीकुर्वन्ति, नतु असन्तम्. अतएव उद्धवं प्रति उक्तं भगवता ''**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः, अहमेव न मत्तोऽन्यद् इति बुध्यध्वमञ्जसा**'' (भाग.पुरा.११।१३।२४) इति. बुद्धिस्तु प्रमात्मके 'निश्चया'परपर्याये ज्ञाने सन्तं विषयीकरोति, विपर्यासज्ञानेतु स्वकल्पितं रजतादिकं मायिकमेव विषयीकरोति. अतः इन्द्रियविषयो बाह्यएव. अतएव ''**सर्वं पुरुष एवेदम्**'' (भाग.पुरा.२।६।१५) इति द्वितीयस्कन्धश्लोकव्याख्याने उक्तम् ''**इदमपि परिदृश्यमानं जडात्मकं सर्वं पुरुषएव**'' इति. इन्द्रियतद्विषययोः मध्ये मायादूषितबुद्ध्या यो विषयीक्रियते सतु अवास्तवएव बुद्धिकल्पितः इति ज्ञेयम्.

### (अनिर्वचनीयख्यातिवादविमर्शः)

मायावादिनस्तु ''शुक्तिरूपाधिष्ठाने उत्पन्नेन अनिर्वचनीयेन रजतेन चक्षुःसन्निकर्षे 'रजतम् इदम्' इति भ्रमो भवेत्. न तत्र शुक्तिसामान्यज्ञानस्य हेतुत्वं, प्रयोजनाभावाद्'' इति आहुः. तत् मन्दं, शुक्तेः चाकचक्याद् इति बुद्धेः उत्पादितत्वात्, शुक्तिसामान्यज्ञानकारणतायाः निर्वचनीयत्वात्.

केचित्तु ''मायया अनिर्वचनीयम् उत्पादितं रजतं चक्षुषा उपलभ्यते

अतो न रजतभ्रमे अधिष्ठानसामान्यज्ञानस्य हेतुत्वम्'' इति वदन्ति. तदपि अयुक्तं, मायोत्पादितरजतस्य विद्यमानत्वे तत्कृत-शुक्तिज्ञान-प्रतिबन्धात् कदापि शुक्तिज्ञानं न भवेत्, रजतनाशहेतोः अन्यस्य अभावात्, कदापि रजतध्वंसाभावात्. रजतज्ञाने सत्यपि शुक्तिज्ञानम् इतितु अनुभवविरुद्धत्वात् न आद्रियते विद्वद्भिः. तथाच अधिष्ठानरूप-शुक्तिविषयक-विशेषज्ञानाभावात् कदापि रजतध्वंसो न स्यात्. एवं सति सदैव रजतप्रत्ययः आपद्यते. यदितु ''मायया विरचितं माययैव ध्वंस्यते'' इति उररीक्रियते तदातु दार्ष्टान्तिके प्रपञ्चे तथैव स्वीकार्यत्वात् मायाघटितः प्रपञ्चो माययैव नष्टो भविष्यतीति व्यर्थो ज्ञानप्रयासो वेदान्तशास्त्रवैयर्थ्यं च. ''ज्ञाननाश्यः प्रपञ्चः'' इति भवत्सिद्धान्तोऽपि नाशं प्राप इति आकलनीयम्.

**( भ्रमभातपदार्थानाम् 'आन्तरालिक'त्वोक्तेः तात्पर्यम् )**

अतएव ''**आत्ममायायनं हरेः**'' ( भाग.पुरा.३।७।१६ ) इत्यस्य व्याख्याने ''**मायया कृतो यो अन्तरासर्गः सतु अपार्थएव आभाति... अन्तराभानात् तलस्पर्शे च ब्रह्मभानात् तदैव गच्छतीति निर्मूलत्वम्**'' इत्यादि उक्तम्. ''**मध्यस्थमात्रानुवादो वा मायावादिवद्**'' इत्यपि उक्तम्. अतो ज्ञायते इन्द्रियविषययोः सम्बन्धे सामान्यज्ञानानन्तरं यद् बुद्धौ माया मायिकं पदार्थं निर्माय बुद्धिविषयीकारयति तद् बौद्धं ज्ञानं भ्रमात्मकं तद्विषयः च मायिको बौद्धो घटादिः. अयमेव बुद्धौ भातः पदार्थः ''आन्तरालिकी सृष्टिः'' इति उच्यते, तस्यैव मिथ्यात्वं, नतु भगवत्कृत-प्रापञ्चिक-घटपटादेः. अतो महता यत्नेन परिदृश्यमानप्रपञ्चस्य मिथ्यात्वं दूरीकृतवान् भगवान् भाष्यकारः.

**( औपाधिकभ्रमप्रक्रियायां ततः ईषद्भेदः )**

औपाधिके ''घटो भ्राम्यति''—''शङ्खः पीतः'' इत्यादि भ्रमेतु चक्षुर्ग्राह्ये घटशङ्खादौ भ्रमरिका-कामलाद्युपाधिं पुरस्कृत्य भ्रमणपीतत्वादिरूपो मायिको धर्मो विषयतारूपो मायया सृज्यते. सच धर्मो धर्मिणां घटशङ्खादीनां चाक्षुषे चक्षुषा गृह्यते. अतएव उक्तं सुबोधिन्याम् ''**विषयता मायाजन्या विषयो भगवान्**'' ( सुबो.२।९।३३ ) इति. ''**विषये विषयता काचित् स्वीकर्तव्या...**

**अन्यथा... भ्रमदृष्टिः निर्विषया स्याद्**'' इति. ''**विषयताजनितं ज्ञानं भ्रमात्मकं, विषयजनितं प्रमा इति**'' ( सुबो.२।९।३३ ) च. तथाच तं भ्रमणपीतत्वादिरूपं मायिकं धर्मम् अवलोक्य, मायया मोहिता बुद्धिः, धर्मिणं शङ्खादिमिव पीतत्वादिकमपि वस्तुभूतं निर्धार्य, तद्विशिष्टं शङ्खं स्वीकरोति. तदा तद्भ्रमात्मकं ज्ञानं भवति. एवं सति बुद्ध्या पीतत्ववैशिष्ट्यचेन कल्पितएव शङ्खो मायिको नतु चक्षुर्गृहीतः.

**( चक्षुर्ग्राह्यस्य विषयस्य ब्रह्मत्वोपपत्तिः )**

नच ''चक्षुषा गृहीतस्य घटस्य भगवत्त्वं न सम्भवति, भगवतः इन्द्रियाग्राह्यत्वाद्'' इति वाच्यं, ''**न चक्षुषा गृह्यते**'' ( मुण्ड.उप.३।१।८ ) इत्यादिश्रुतीनां मूलरूपपरत्वाद्, गृह्यमाणघटस्य भगवतः सदंशत्वाद्, ग्राहकस्य इन्द्रियस्यापि भगवत्सदंशत्वेन अदोषात् च, ग्राह्यस्य घटस्य विषयतावैशिष्ट्यचेन शुद्धत्वाभाववद् ग्राहकस्य इन्द्रियस्यापि विषयतावैशिष्टेन तुल्यत्वाच्च.

सो अयम् औपाधिकधर्मो रजतादिभ्रमवत् न अधिष्ठाननाश्यः. कामलोदिदोषो भ्रमरिकादोषः च यदा नश्यति तदैव नश्यति. भ्रमरिकादशायां ''घटे भ्रमणं नास्ति'' इति ज्ञानवतोऽपि 'भ्राम्यति' इति प्रतीतेः सार्वजनीनत्वात्.

**( औपाधिक-निरुपाधिक-भ्रमयोः प्रक्रियापार्थक्यम् )**

एवञ्च निरुपाधिके रज्जुभुजङ्गादिभ्रमे चक्षुषा सद्रूपैव रज्जुः गृह्यते, भुजङ्गस्तु बुद्धिकल्पितो बुद्ध्या विषयीक्रियते, न चक्षुषा, बुद्धिकल्पितस्य भुजङ्गस्य बाह्यत्वाभावात्, दशमस्कन्ध-जन्मप्रकरण-चतुर्थाध्याय-सुबोधिन्याम् ''**यथानेवंविदो भेदः**'' ( भाग.पुरा.१०।४।२० ) इत्यस्य विवरणे ''**बुद्ध्या बहिर्विषयोत्पादनासम्भवाद्**'' इति उक्तत्वात्. औपाधिकभ्रमेतु चक्षुषा, सद्रूपो घटो मिथ्याभूतो—विषयतारूपो भ्रमणधर्मः च इति, उभयं विषयीक्रियते. तदनन्तरं सदोषबुद्ध्या ''घटो भ्रमणवान्'' इति स्थाप्यते इति विशेषः.

इमामेव विषयतां भ्रमणादिरूपां विषयेण सह गृह्यमाणाम् अवमृश्य

इन्द्रियग्राह्यस्यापि मिथ्यात्वं क्वचिद् भागवते सुबोधिन्यां च उक्तम्, विषयेण घटेन सह विषयतारूपभ्रमणस्यापि चक्षुर्ग्रह्यत्वात्. अत्रापि बौद्धएव घटो मिथ्या नतु प्रपञ्चान्तर्वर्ती इति निष्कर्ष:.

**(प्रापञ्चिक-विषय-विषयतयोः स्वरूपे सोपाधिकभ्रान्तिसदृशे)**

इदम् अत्र ज्ञेयं : प्रपञ्चविचारे भ्रमणवद्घटएव दृष्टान्त:. तत्र यथा घटस्य सत्यत्वं भ्रमणस्य मायिकत्वम्, एवं प्रपञ्चस्यापि सत्यत्वं तद्गतानां भेदकुत्सितत्वोत्पत्तिनाशादीनां मायिकत्वम्. अतएव उद्धवं प्रति उक्तं भगवता — "**यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभि:, नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयाम्**" (भाग.पुरा.११।७।७) इति. 'नश्वरम्' इति पदात्, "**यत् नश्वरं गृह्यते तदेव मायामयम् इतस्तु परं सत्यमेव**" इति अर्थ: स्फुटति. एतच्च औपाधिकभ्रमे स्फुटम्. अतएव "**नाशोत्पत्तिप्रतीति: भ्रान्ता**" (विद्व.मण्ड.            ) इति विद्वन्मण्डने प्रभुचरणै: निरूपितम्. अतो न प्रपञ्चस्य शुक्तिरजतादि: दृष्टान्त:. अतएव शास्त्रार्थप्रकरणे, "**वाचारम्भणवाक्यानि**" (त.दी.नि.१।८३) इति कारिकाव्याख्याने "**नतु मिथ्यात्वं शुक्तिरजतवत्, अन्यथा शुक्तिरजतादिकमेव दृष्टान्तीक्रियेत**" इति श्रीमदाचार्यै: उक्तम्.

**(विषयताविशिष्ट-तद्रहितजडवस्तुनोः संसारिताविशिष्ट-तद्रहितजीवयोः च औपाधिको भेदो नतु वास्तविकः)**

अन्यच्च यथा घटावच्छिन्नगगन-महाकाशयो: वस्तुतो भेदाभावेऽपि घटोपाधिकृतोहि अवास्तवो भेद:; तथा, विषयताविशिष्ट-तद्रहितजगतोः इति ज्ञेयम्. दृष्टान्ते "घटाकाशः चलति" इति प्रतीतावपि चलनं वस्तुतो घटधर्मो, नतु तदवच्छिन्नस्य. एवं विषयताविशिष्टे जगति उत्पत्त्यादिप्रतीतावपि उत्पत्त्यादि विषयतायाएव धर्मो, नतु तदवच्छिन्नस्य. घटाकाशमहाकाशयो: अभेदवद् विषयताविशिष्ट-तद्रहितयो: अभेदेन वस्तुत: तदवच्छिन्नजगतोऽपि ब्रह्मरूपत्वात्. अतएव श्रीमदाचार्यै: द्वितीयस्कन्धसुबोधिन्याम्, "**वस्तुतो मूलभूतं जगत्, प्रतीतितो मायिकम्**" (२।९।३२) इति अवादि.

एवं संसारिजीव-शुद्धजीवयोरपि अवास्तयो भेदः संसाररूपोपाधिकृतएव, शुद्धजीवस्य भगवदंशत्वेन संसारिजीवस्यापि तदभेदेन शुद्धब्रह्मरूपत्वात्. मिथ्यात्वन्तु संसाररूपोपाधिपर्यवसन्नम्. अतएव निबन्धे उक्तम्, "**जीवसंसार उच्यते**" ( त.दी.नि.१।२३ ) इति, "**उच्यते नतु जायते**" इति "**असत्त्वेन अस्य गणनाद्**" इति व्याख्यातं च. अतएव यएव बद्धः तस्यैव साधनसम्पत्तौ मुक्तिः इति बन्धमोक्षव्यवस्था च सम्यग् उपपद्यते.

**( ब्रह्मण्यपि सोपाधिकत्व-निरुपाधिकत्व-प्रयुक्तभेदो भवतु इति शङ्कायाः निरासः )**

नच "एवं जगत्कर्तृत्वादिविशिष्टतद्रहितब्रह्मणोरपि औपाधिकभेदाङ्गीकारे स्वसिद्धान्ताविरोधः" इति वाच्यं, "**यतो वा इमानि भूतानि जायन्ते**" ( तैत्ति.उप.३।१ ) "**तस्माद् वा एतस्माद् आत्मनः आकाशः सम्भूतः**" ( तैत्ति.उप.३।१ ) "**एतस्माद् जायते प्राणो मनः सर्वेन्द्रियाणि च**" ( मुण्ड.उप.२।१।३ ) "**तद् आत्मानं स्वयम् अकुरुत**" ( तैत्ति.उप.२।७ ) इत्यादिश्रुतिसिद्धस्य जगत्कर्तृत्वादेः नित्यसिद्धस्य धर्मस्य उपाधित्वाभावात्. अतो जगत्कर्तृत्वादिश्रौतधर्मविशिष्टं निरुपाधिकमेव, नतु सोपाधिकमिति न ब्रह्मणि सोपाधिकत्व-निरुपाधिकत्व-कल्पना इति अन्यत्र विस्तरः.

**( प्रकृतविषयानुसन्धानम् )**

तथाच सिद्धं विषयतावैशिष्ट्यचेन प्रपञ्चस्य सत्यत्वं मिथ्यात्वं च. एवं स्वमते प्रपञ्चस्य पारमार्थिकविचारे ब्रह्मात्मकत्वेन सत्यत्वम्. परमतेतु व्यवहारे सत्वत्वं पारमार्थिके मृषात्वम् इति भेदो ज्ञेयः.

ननु "निरुपाधिके शुक्तौ 'इदं रजतम्' इति भ्रमे पूर्वम् उत्पन्नसामान्यज्ञानानन्तरं बुद्ध्या रजतम् उत्पाद्य विषयीक्रियते; तथा, दार्ष्टान्तिके भगवदात्मकप्रपञ्चः चक्षुषा गृह्यते, मायामोहितबुद्धिकल्पितो अन्तरासर्गो विषयीक्रियते" इति यद् उक्तं, तत् न सम्भवति, रजतसंस्कारवद् आन्तरालिक-पदार्थ-संस्कारोपलब्ध्यभावाद्! इति चेत् , न, पूर्वकल्पम् आरभ्य आन्तरालिक-पदार्थानुभव-सत्त्वेन तत् संस्कारस्य सुवचत्वात्. अतः सुखेन

रजतवद् आन्तरालिको बौद्धो घटादिः उत्पद्यते.

किञ्च दृष्टान्ते यथा रजतभ्रमानन्तरं धर्मविशेषज्ञाने शुक्तिरूपाधिष्ठाने ज्ञाने रजतं बौद्धं विलयम् एति; तथा, अत्र चक्षुःसंयुक्त-प्रपञ्चविषयके ब्रह्मज्ञाने उत्पन्ने बौद्धएव प्रपञ्चो नश्यति नतु चक्षुर्गृहीतो अयम् इति अर्थो, दशमस्कन्धप्रक्षिप्ताध्याये **''रज्ज्वाम् अहेर्भोगभवाभवौ यथा''** (भाग.पुरा.१०।१४।२५) इत्यस्य सुबोधिन्यां **'''भवाभवौ' उत्पत्तिनाशौ, 'सर्पो अयं'–'नायं सर्पः' इति स्वबुद्धिकल्पितस्यैव नाशो न अन्यस्य''** इति उक्तत्वात्. अतएव **''अयं प्रपञ्चो न प्राकृतो, नापि परमाणुजन्यो, नापि विवर्तात्मा... किन्तु परमकाष्ठापन्न-वस्तु-कृतिसाध्यः, तादृशोऽपि भगवद्रूपः''** (त.दी.नि.१।२३) इति निबन्धोक्तिः युज्यते, **''विषयो भगवान्''** (सुबो.२।९।३३) इति उक्तेः च.

**(आधिदैविकप्रपञ्चएव पारमार्थिकः आधिभौतिकस्तु मृषैव इति शङ्का-समाधाने)**

यत्तु ''आधिदैविकः प्रपञ्चो भिन्नः स भगवद्रूपो, अयं प्रतीयमानस्तु ततो भिन्नो मृषैव'' इति आहुः, तत् न, आधिदैविकस्य अतीन्द्रियत्वेन चक्षुरादिग्राह्यत्वाभावाद्. अधिष्ठान-चाक्षुष-सामान्य-ज्ञानाभावेन चाक्षुषभ्रमएव न स्यात्, चाक्षुषभ्रमं प्रति चाक्षुष-सामान्य-ज्ञानस्य कारणत्वात्. तस्माद् अयमेव अस्मदादीन्द्रियैः ग्रह्यमाणः प्रपञ्चो ब्रह्मात्मकः. अस्मिन्नेव प्रपञ्चे मायामोहितबुद्ध्या मायिकः प्रपञ्चः कल्प्यते. तस्यैव मिथ्यात्वं— सहि आन्तरो न बाह्यो—नतु अस्य. अन्यथा सिद्धान्तमुक्तावल्याम् **''अपरं तत्र पूर्वस्मिन् वादिनो बहुधा जगुः''** (सि.मु.४) इति उक्त्वा **''मायिकं सगुणम्''** (सि.मु.४) इत्यादिना परमतानि उपन्यस्य **''तदेवैतत् प्रकारेण भवति''** (सि.मु.५) इत्यन्तोक्तिरपि विरुद्ध्येत. एवं तस्य मिथ्यात्वाङ्गीकारे आधिदैविकस्य चक्षुराद्यविषयीभूतस्य सत्यत्वाङ्गीकारेण परमत-स्वमतयोः भिन्नविषयत्वेन निराकरणानर्हत्वात्. नहि परे आधिदैविकं प्रपञ्चं मृषा वदन्ति, यदुपरि दूषणानि स्युः. अपिच परिदृश्यमानस्य आविर्भाव-तिरोभावौ स्वीकृत्य भावविकारप्रतीतेः मिथ्यात्वम् अङ्गीकृत्य एतस्य प्रपञ्चस्य ब्रह्माभिन्नत्वं

भाष्य-निबन्ध-विद्वन्मण्डनादौ सर्वत्र स्वीकृतं तदपि विरुद्ध्येत, प्रतीयमानप्रपञ्चस्य मृषात्वाङ्गीकारेण तादृक्प्रपञ्चे जायमानानां नोशोत्पत्त्यादिप्रतीतीनाम् अभ्रान्तत्वेन 'भ्रान्तत्व'कथनस्यैव दूष्यत्वापत्तेः, परिदृश्यमानस्य मिथ्यात्वाङ्गीकारे दूष्यग्रन्थ-स्वग्रन्थयोः ऐक्यापत्तेः च. अन्यच्च ''**मुक्तिः कल्पितवाक्यतः**'' (त.दी.नि.१।७९) इत्यादि निबन्धवाक्यैः ''**गुर्वादीनां कल्पितत्वञ्च आपद्येत**'' इत्यादिदूषणपुञ्जानां परमते आपादितानां स्वमते आपत्तिः. अतो अस्य परिदृश्यमानजगतो मायिकत्वं न आदर्तव्यम् सुधीभिः.

### (पुराणेषु प्रपञ्चमिथ्यात्वोक्तेः तात्पर्यनिरूपणम्)

पुराणेषु क्वचिद् आन्तरालिकीं सृष्टिं, क्वचिद् विषयतां, क्वचिद् अहन्ताममतात्मकं संसारम् अवलम्ब्य मायिकत्वोक्तिः, क्वचिद् वैराग्यार्थञ्च, न वस्तुस्वरूपनिरूपणाय इति स्थितम् आकरे. अतो अयं प्रपञ्चो ब्रह्मात्मकः इति सिद्धान्तो निर्दुष्टएव.

### (बुद्धिकल्पितस्य बाह्यप्रत्यक्षो न सम्भवति इति निरूपणम्)

नच ''बुद्धिकल्पितमेव रजतं मायादोषादिवशाद् बहिः निःसृतं चक्षुषा गृह्यते ततः चक्षुर्ग्राह्यस्यापि रजतस्य मिथ्यात्वं कुतो न?'' इति वाच्यं, भुजङ्गाधिष्ठानक-रज्जुस्पार्शनभ्रमे व्यभिचारात्. तथाहि, तमःसङ्घाते हस्तेन भुजङ्गस्पर्शे स्पार्शनसामान्यज्ञानानन्तरं तमोगुणोद्रेकेण माया जीवबुद्धिं व्यामोहयति, तदा भुजङ्ग इति बोधो न उत्पद्यते. ततो रज्जुसंस्कारेण बुद्धी रज्जुं निर्माति; तद् बौद्धी रज्जुः बहिः चेत् निस्सरेत् तर्हि करेण गृह्यतैव, भुजङ्गस्यतु हस्तस्पर्शो न स्याद्, रज्ज्वा व्यवधानात्. तथा सति को वा दशेत्? लोकेतु तादृशस्थले भुजङ्गस्पर्शः तत्कृतो दंशश्च श्रूयते. अतो बुद्धिकल्पितायाः रज्जोः अन्तःस्थितायाः बुद्धिविषयत्वमेव, न इन्द्रियविषयत्वम्. इन्द्रियविषयस्तु अधिष्ठानरूपो भुजङ्गएव इति ज्ञेयम्. अतएव दशमषष्ठाध्याये ''**यथोरगं सुप्तम् अबुद्धिरज्जुधीः**'' (भाग.पुरा.१०।६।८) इत्यस्य व्याख्याने ''**रज्जुबुद्ध्या गृहीतः सर्पः स्वस्पर्शेऽपि न ज्ञानं जनयति**'' इति उक्त्या अधिष्ठानरूपसर्पस्पर्शः उक्तः. एवं शुक्तिरजतादिस्थलेऽपि बोध्यम्. एतेन

''शुक्त्याद्यधिष्ठाने मायया उत्पादितम् अनिर्वचनीयं रजतादिकं चक्षुरादि इन्द्रियग्राह्यम्'' इति वदन्तोऽपि प्रत्युक्ताः, भुजङ्गाधिष्ठानक-रज्जुस्पार्शन-भ्रमेहि अनिर्वचनीयायाः रज्जोः त्वगिन्द्रियेण ग्रहणाद्, अधिष्ठानरूपेण व्यालेन त्वक्सम्बन्धाभावाद् भुजङ्गकृतदंशाभावनियमापत्तेः. त्वगिन्द्रियगोलकयोः एकवस्तुसम्बन्धनियमात् त्वगिन्द्रियगोलकाभ्यां रज्जोः सम्बन्धात् तस्याः व्यावहारिकसत्तास्वीकारेण अर्थक्रियाकारितया तद्रज्जुकृताधिष्ठान-व्यवधानाद् इति दिक्. नच ''सर्पस्पर्शे स्पार्शनरज्जुभ्रमे यावद्भ्रमम् अनिर्वचनीयया रज्ज्वा सह पुरुषहस्तादिसम्बन्धेऽपि भ्रमनिवृत्त्युत्तरं सर्पस्पर्शात् तत्कृतदंशे को दोषः ?'' इति वाच्यं, रज्जुज्ञानोत्पत्त्यव्यवहितसमये भ्रमनिवृत्तेः असम्भवाद्, अन्यथा भ्रमनिवृत्तिः अनुभूयते. नच ''सूक्ष्मकाले जायमाना भ्रमनिवृत्तिः न अनुभवायोग्या, तत्कालस्य शतपत्रवेधवद् दुर्लक्ष्यत्वाद्'' इति वाच्यं, भ्रमनिवृत्तेः अधिष्ठानज्ञानसाध्यत्वेन तद्विरहे तस्याएव सम्भवात्. नच ''दंशातिरिक्तकारणेन अधिष्ठाने ज्ञाते भ्रमनिवृत्तौ रज्जोः नाशाद् अधिष्ठानसंयोगे दंशः सुवचः'' इति वाच्यं, यत्र दंशहेतुकम् अधिष्ठानं तत्र दंशात् पूर्वं भ्रमनिवृत्तेः वक्तुम् अशक्यत्वेन भ्रमसमयएव दंशस्वीकार्यत्वाद्. दंशस्यतु अधिष्ठानसम्बन्धहेतुकत्वाद् भ्रमावसरएव इन्द्रियाधिष्ठानयोः सम्बन्धप्राप्तेः भवद्राद्धान्तविरोधात्. एवं मायामोहित-बुद्धिकल्पितो मिथ्याभूतः प्रपञ्चोऽपि तादृशबुद्धेरेव विषयो न इन्द्रियविषयः इति विद्वद्भिः विभावनीयम्.

**( श्रीमद्भागवतैकादशस्कन्धीय-नवयोगि-प्रश्नोत्तरयोः शङ्कासमाधाने )**

एवं साधितेऽपि स्वसिद्धान्ते एकादशस्कन्धोदित-नवयोगि-प्रसङ्गीय-प्रश्नोत्तर-वाक्येषु पदार्थशोधनाभावाद् भ्रमः सम्भवति. तथा सति साधितोऽपि राद्धान्तः शिथिलइव प्रतिभायाद्. अतः साधितराद्धान्तदार्ढ्याय नवयोगि-प्रसङ्गीय-प्रश्नोत्तर-वाक्यानां तत्रत्य-सुबोधिनी-वाक्यानां च अर्थः पूर्वपक्षोत्तरपक्ष-निरूपणपूर्वकं विमृश्यते :

तथाहि एकादशे निमिनवयोगिप्रसङ्गे **''परस्य विष्णोरीशस्य मायिनामपि मोहिनीम्, मायां वेदितुमिच्छामः''** (भाग.पुरा.११।३।१) इति निमिना

मायास्वरूपे पृष्टे अन्तरीक्षेण ''**एभिर्भूतानि भूतात्मा** (भाग.पुरा.११।३।३) इत्यादिना सृष्टिः निरूपिता. तेन मायायाः स्वरूपप्रश्नात् तदनुरूपमेव उत्तरेण भाव्यम्. इहतु प्रपञ्चोत्पत्तिः उत्तरे निरूपिता. अतो ज्ञायते प्रपञ्चो मायाकार्यः. अन्यथा मायाप्रश्ने कृते प्रपञ्चम् उत्तरे न वदेत्. तथाच प्रपञ्चनिरूपणे माया निरूपिता भवतीति मायायाः कार्यलक्षणं सिद्ध्यति. एवं सति प्रपञ्चस्य मायिकत्वम् आयाति न ब्रह्मता इति पूर्वपक्षे, स्वसिद्धान्तं वक्तुं प्रपञ्चस्य भगवदात्मकत्वसाधनाय श्रीमदाचार्यचरणा अन्तरिक्षदत्तोत्तराशयं विशदयितुं 'माया' शब्दस्य शक्तिं निरूपयन्ति ''**मायाशब्दः शास्त्रेषु**'' (सुबो.११।३।३) इत्यारभ्य ''**तथा प्रयुक्तः शब्दः**'' (सुबो.११।३।३) इत्यन्तेन.

तथाच भगवतः :—

(१)सर्वभवनसामर्थ्यरूपा माया.
(२)व्यामोहिका माया.
(३)ऐन्द्रजालिकविद्या.
(४)कापट्याादि.

च इति चत्वारो 'माया' शब्दार्थाः. ''ननु अत्र भगवतः सर्वभवनसामर्थ्यरूपा माया व्यामोहिका माया च पृथग् गणिता. व्यासः समाधौतु, ''**अपश्यत् पुरुषं पूर्णं मायां च तदुपाश्रयां यया सम्मोहितो जीव**'' (भाग.पुरा.१।७।४-५) इति वाक्याद् व्यामोहिकां मायां दृष्टवान्. समाधेश्च मुख्यं प्रामाण्यम्. तथाच मायायाः व्यामोहकत्वमेव, न सर्वभवनसामर्थ्यरूपता!'' इति आशङ्क्य समादधते, ''**समाधावपि...**'' (सुबो.११।३।३) इत्यादिना. सर्वभवनसामर्थ्यरूपायाः मायायाएव रूपान्तरं व्यामोहिका माया अतो व्याससमाधौ एकस्याएव उक्तिः, तयैव द्वितीयापि आयातीति न कश्चिद् दोषः. ''ननु अत्रतु प्रपञ्चसृष्टिः उत्तरे निरूपिता, नतु पूर्वोक्तेषु चतुर्षु अन्यतरद्!'' इति आशङ्क्य आहुः 'प्रवाहस्तु' इति, 'तु'शब्दः प्रकारान्तरबोधकः. तथाच अत्र 'माया' शब्देन सर्वभवन-सामर्थ्यरूप-मायाकरणकः सृष्टिप्रवाहः उच्यते इति अर्थः. अतः चतुर्ष्वेष्व अन्तर्भावः

इति भावः. तस्य प्रवाहस्य स्वरूपम् आहुः, "**सच भगवत्कृतो भगवद्रूपः च**" (तत्रैव) इति. "**आत्मानं स्वयम् अकुरुत**" (तैत्ति.उप.२।७) इत्यादिश्रुतिः. अतएव निबन्धे उक्तम् "**प्रपञ्चो भगवत्कार्यः तद्रूपः**" (त.दी.नि.१।२३) इति. "ननु एवं प्रपञ्चस्य भगवद्रूपत्वे तत्र 'माया' शब्दप्रयोगो न उचितः!" इति आशङ्क्य आहुः "**विषयैश्च व्यामुग्धाः सर्वे भवन्ति**" (सुबो.११।३।३) इति. तथाच विषयरूपस्य प्रपञ्चस्य विचित्रत्वेन व्यामोहकत्वात् प्रपञ्चे 'माया' शब्दः प्रयुक्तो नतु मायिकत्वम् अभिप्रेत्य इति अर्थः. एवं (१)सर्वभवनसामर्थ्यं (२)व्यामोहिका माया (३)ऐन्द्रजालिकविद्या, (४)कापट्यं, (५)मायाकरणको भगवदात्मकः प्रपञ्चः च इति पञ्चसु पदार्थेषु 'माया'शब्दं शिष्टाः प्रयुञ्जन्ते, तेषु अत्र को अर्थः वाच्यत्वेन युक्तः? इति आहुः "**अतो अत्र**" (सुबो.११।३।३) इति. सिद्धान्तम् आहुः "**माया शक्तिः भगवतः**" इति. "**मम माया दुरत्यया**" (भग.गीता ७।१४) इति गीतोपनिषद्भ्यः. अतएव आहुः "**नात्र कार्या**" (सुबो.का.११।३।३।१) इति. तर्हि विचारस्य क्व उपयोगः? इति आशङ्क्य आहुः "**समाधौ तु**" (सुबो.का.११।३।३।१) इत्यादि, व्यासकृतसमाधौतु व्यामोहकत्वेन मायायाः दर्शनात्, तत्र तादृश्यां व्यामोहिकायां शक्त्यां 'माया' शब्दप्रयोगः उचितः. अत्रतु सृष्टिप्रवाहे 'माया' शब्दप्रयोगः किम्प्रयोजकः किन्निबन्धनः इति विमृश्यते इति अर्थः. 'विचारे'(सुबो.का.११।३।३।२) इति, विचारे क्रियमाणे 'भगवद्वाक्यम्' (सुबो.का.११।३।३।२) "**ऋतेऽर्थं यत् प्रतीयेत**"**(भाग.पुरा.२-।९।३३) इति वाक्यम् इति अर्थः.** "**लक्षणम्**" (सुबो.का.११।३।३।२) इति. व्यामोहिका(याः!)मायायाः ज्ञापकम् इति अर्थः. लक्षणस्य स्वरूपम् आहुः "**कार्यगोचरम्**" (सुबो.का.११।३।३।२) इति कार्यलक्षणम् इति अर्थः. एवं व्यामोहिका(याः!)मायायाः कार्यलक्षणम् उक्तम्. "ननु एतस्याः व्यामोहिकायाएव कार्यं जगद् इत्येव मन्तव्यम्, बहुभिः आदृतत्वात्; ततश्च एतस्य विश्वस्य मिथ्यात्वमेव उररीकार्यम्!" इति आशङ्क्य न इदं जगद् व्यमोहिकायाः कार्यम् अपितु स्वसर्वभवन-सामर्थ्यरूप-मायया भगवानेव स्वात्मस्वरूपं जगद् निर्मिमीते इति आहुः "**सुवर्णजलवत् कार्ये**" (सुबो.का.११।३।३।३) इति. यथा सञ्चायकप्रतिमां मृदा निर्माय तत्र सुवर्णजलं निःक्षिप्यते ततः सञ्चायकप्रतिमाकारा सुवर्णप्रतिमा अनायासेन

सिद्ध्यति, तथा सर्वप्रतिकृतिरूपां मायां सञ्चायकस्थानापन्नां कृत्वा स्वात्मरूपं जगद् भगवान् विरचयति. अतो न मायिकं किन्तु ब्रह्मात्मकमेव इति अर्थः. एवं सति त्वत्(भागवत!)पुराणेऽपि जगतो भगवत्त्वम् उक्तं परन्तु प्रकारभेदेन इति आचार्यवर्याणाम् आशयः. तत्र पुराणे यः प्रकारः सो अयं सञ्चायकदृष्टान्तेन "**सुवर्णजलवत्**" (सुबो.का.११।३।३।३) इति कारिकया स्फुटीकृतः. तथाच मायायाः सञ्चायकत्वेन सृष्टौ भगवता अङ्गीकृतत्वात् सृष्टिप्रवाहे 'माया'शब्दः प्रयुज्यते. तथा सति इह निमिनवयोगीश्वरप्रसङ्गे 'माया'शब्देन 'सृष्टिप्रवाह' उच्यते इति निष्कर्षः. एवञ्च सुबोधिन्याम् "**अतो अत्र किं युक्तम्**" (सुबो.का.११।३।३।३) इति पूर्वम् उक्तया फक्किकया कृतस्य प्रश्नस्य सृष्टिप्रवाहो 'माया' शब्दवाच्यत्वेन अस्मिन् प्रसङ्गे युक्तः इति उत्तरं सम्पन्नम्. इत्थं 'माया'शब्दवाच्यस्य सृष्टिप्रवाहस्य सञ्चायकरीत्या निर्माणाद् भगवत्त्वम्. एतद् अभिसन्धायैव पूर्वम् उक्तम्. "**सच भगवत्कृतो भगवद्रूपश्च**" (सुबो.का.११।३।३।३) इति. वेदेतु मायारूपसाधननैरपेक्ष्येण भगवान् स्वात्मस्वरूपं जगत् करोति इति विभेदः. एतदेव प्रथमस्कन्धे "**सदसद्रूपया चासौ**" (भाग.पुरा.१।२।३०) इत्यस्य सुबोधिन्यां स्फुटम् अकारि "**घटित-पूरण-पात्र-भेदवद् वैदिक-पौराणिक-जगतोः भेदः**" (सुबो.१।२।३०) इत्यनेन. तत्रैव सुबोधिन्यां सर्वप्रतिकृतिरूपत्वं मायायाः निरूपितम्. तथाच घटितसुवर्णप्रतिमा यथा सुवर्णात्मिका तथा पूरितप्रतिमापि सुवर्णात्मिकैव. सञ्चायकरीत्या जगन्निर्माणप्रयोजनम् अत्रैव सुबोधिन्याम् उक्तम् "**एवं सति सृष्टिः सुगमा भवति**" (सुबो.१।२।३०) इति. सञ्चायकरीत्या प्रतिमानिर्माणे सौकर्यं लोके स्फुटम्. एवं मायासाधननिरपेक्षतया वेदे निरूपितं जगत्, मायासञ्चायकत्वेन पुराणे निरूपितं जगत् च भगवदात्मकमेव.

एवं श्रुति-पुराण-सिद्धो अस्मत्सिद्धान्तः इति मञ्जुलम् अखिलम्.

**इति श्रीमद्गोवर्धनधर-श्रीवल्लभाचार्य-श्रीविट्ठलेश्वर-चरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णभट्टेन विरचिते प्रमेयरत्नार्णवे उत्तरार्धे ख्यातिविवेकः समाप्तः**

## ।। ख्यातिवादः ।।

( मङ्गलाचरणेन उपक्रमः )

**यन्मायया[१] बहिःक्षिप्ता ख्यायते बुद्धिरर्थवत्[२] ।।**
**निवर्तते[३] च यद्बोधात् तं नमामि जनार्दनम्[४] ।।१।।**

**( बुद्धेः त्रिक्षणावस्थाननियमवादेन आक्षेपः )**

*ननु[५] किम् इदम् अपूर्वम् उच्यते बुद्धेः ख्यानम्? तस्याः त्रिक्षणावस्थायित्वनियमेन अमूर्तत्वेन च बहिःक्षेपनिवृत्त्योः[६] अशक्यवचनत्वेन तत्ख्यानस्य सुतरां तथात्वात्[७]. नच सा स्थिरा इति वाच्यं, मानाभावात्.

---

**ख्यातिवादटिप्पणी**

अस्य वादस्य **'ख'** संकेतिते आदर्शे पत्राणां परितो रिक्तभागे ग्रन्थकर्तुः हस्ताक्षरसदृशैरेव केषाञ्चिद् हस्ताक्षरैः लिखिताः काश्चन टिप्पण्यः समुपलभ्यन्ते. एवं **'ग'** संकेतिते आदर्शेऽपि कतिचन टिप्पण्यो अन्येन केनचिद्वा विदुषा लिखिताः सन्ति. तदुभाभ्यां सह कतिचन टिप्पण्यः आद्यसम्पादकेनापि स्वपरादिभेदोल्लेखं विनैव प्रकाशिताः आसन्. अस्माभिस्तु इह साकल्येन तत्तत्संकेतभेदोल्लेखपुरस्सरं ताः प्रकाश्यन्ते. यास्तु अस्मदीयाः टिप्पण्यः तासां (श्या) इति सङ्केतः(सम्पादकीयम्).

१.**यन्मायया** इति द्वितीयस्कन्धनवमाध्यायीय **''ऋते अर्थं यत् प्रतीयेत''**( भाग.पुरा.२।९।३३ )इतिश्लोकसुबोधिनीस्वारस्यात् **'मायया'** इत्यस्य समानीतविषयया इति अर्थः(ख). २.**अर्थवद्** इति अर्थाभावेऽपि अर्थवद् भासते इति अर्थः(ग). ३.**निवर्तते च यद् बोधाद्** इत्येतेन सिद्धान्ते अख्यातिरपि अङ्गीकृता बोध्या. तत्प्रकारस्तु अग्रे स्फुटीभविष्यति. ४.**जनार्दनम्** इति जनां मायाम् अर्दयतीति जनार्दनः इति व्युत्पत्तेः(ग). ५.अत्र बुद्धिस्थैर्यादिख्यानम् असहमानो नैयायिकः शङ्कते **ननु** इत्यादिना(ग). ६.**बहिःक्षेपनिवृत्त्योः** इति निवृत्त्यभावे त्रिक्षणावस्थायित्वम् अमूर्तत्वम् उभयत्र(ग). ७.**तथात्वाद्** इति अशक्यवचनत्वाद्

नच ज्ञानधारायाअपि दर्शनात् तस्याः स्थैर्यं शङ्कनीयम्, उपेक्षाबुद्ध्यादौ[८] व्यभिचारात्. धारावाहिकस्थले सजातीयज्ञानान्तरोदयेन तथाबुद्धेः[९] सूपपादत्वात्. अन्यथा शब्द-बुद्धि-कर्मणां त्रिक्षणावस्थायित्व-नियम-भङ्गप्रसङ्गात्. नच * अनन्त-बुद्धि-तत्प्रागभाव-ध्वंसादि-कल्पनागौरवम् अप्रामाणिकम् * इति वाच्यं, धारावाहिक-व्यतिरिक्त-स्थले तथात्वस्य निश्चयात्. अन्यथा सर्वत्र ज्ञानधारापत्तेः[१०]. मायायाः आमोक्षम् अनुवर्तमानत्वेन स्थिरत्वपक्षे तवापि सर्वदा भ्रमापत्तेः, आत्मनो ज्ञानरूपत्वाङ्गीकाराद् ज्ञानस्य ख्याने आत्मख्यात्यापत्तौ बाह्यमतप्रवेशात् च. अतो बुद्धिस्थैर्य-मायाकृतव्यत्यास-सर्वदातदभावकारणादि-कल्पनापेक्षया युक्त्यन्तराणामेव ज्यायस्त्वात् ख्यात्यन्तरमेव[११] आदरणीयम्. नतु कल्पनागौरवग्रस्ता विक्षिप्तबुद्धिरूपा अन्यख्यातिः * इति प्राप्ते —

**( अन्यख्यातिवादोपपादनाय मतान्तरीयख्यातिवादनिरासाय च संग्रहकारिकाः )**

उच्यते —

**यथार्थतान्यथाख्यातौ मुष्टतत्तास्मृतावपि ।।**
**स्मरणानुव्यवसितिः स्याद् ग्रहणस्मरणात्मके ।।२।।**
**ज्ञानद्वये चैकज्ञानतुल्यत्वस्य विरोधनम् ।।**
**संस्कारादेः[१२] बलिष्ठत्वाद् नापेक्षा रजतस्य च ।।३।।**
**अनिर्वाच्यस्यातएव[१३] नासत्ख्यातिः सदादृता ।।**
**सर्वदा तत्प्रसङ्गाच्च[१४] सदसत्ख्यातिरप्यतः ।।४।।**

---

इति अर्थः[(ग)]. ८.**उपेक्षाबुद्ध्यादौ व्यभिचाराद्** इति उपेक्षात्मकानुभवात् संस्कारस्य अनुत्पन्नत्वेन स्मृत्येकतन्त्रस्थैर्यस्य व्यभिचाराद् इति अर्थः. **आदि** पदेन उ...कर्तृत्वकल्पानां ..त्यम्[(ग)]. ९.**तथाबुद्धेः** इति एकधाराबुद्धेः इति अर्थः[(ग)]. १०.**अन्यथा सर्वत्र ज्ञानधारापत्तेः** इत्यत्र 'अन्यथा' इत्यस्य ज्ञानस्थैर्याङ्गीकारे इति अर्थः. ...तदभावेन ज्ञानस्य त्रिक्षणावस्थायित्वमेव अङ्गीकार्यम् इति भावः[(ग)]. ११.**ख्यात्यन्तरमेव** इति अन्यथाख्यातिरेव आदरणीया इति अर्थः[(ग)]. १२.**संस्कारादेः** 'आदि'पदेन मायापि संग्रहीता ज्ञेया[(ग)]. १३.**अनिर्वाच्यस्यातएव** इति संस्कारप्राबल्यादेव सर्वदा तत्प्रसङ्गादेव एवं स्यात् नतु प्रमाबुद्धिः...[(ग)]. १४.**सर्वदा तत्प्रसङ्गाच्च** इति सर्वदा तत्प्रसङ्गादेव इति अर्थः[(ग)].

अतएव चाभिनवा[१५]न्यथाख्यातिर्न युज्यते।।
बुद्धिस्तत्त्वान्तरं तेन नात्रात्मख्यातिसंशयः।।५।।
कार्यः सर्वजनीनत्वात् तत आद्रियतामियम्[१६]।।

आत्माहि निर्विषयज्ञानात्मको, बुद्धिस्तु विशिष्टज्ञानाकारा तत्त्वान्तरं, ''बुद्धिर् विज्ञानरूपिणी''[१७] (भाग.पुरा.२।१०।३३) इति वाक्यात्. अतो न आत्मख्यातिवादापत्तिः. साच न ज्ञानं[१८] ''यो बुद्धिमान् तस्य पदार्थज्ञानं भवति'' ''सुबुद्धिः अयं पदार्थान् जानाति'' इति ज्ञानकरणत्वेन लोके व्यपदेशात्. बुद्ध्यभावे बालस्य सम्यक्पदार्थज्ञानाभावदर्शनात् च. किन्तु ज्ञानजनिका यस्य शक्तिः तादृशो अहंकारभेदः सा. ''**ज्ञानशक्तिः क्रियाशक्तिर् बुद्धिः प्राणस्तु तैजस**[१९]:'' (भाग.पुरा.२।५।३१) इति द्वितीयस्कन्धे अहंकारभेदेषु गणनात्. अतएव च[२०] स्थिरा. तेन मूर्तायाः तद्वृत्तेः[२१] मायया बहिःक्षेपादिकं न दुर्घटम्. एवं ज्ञानमेव बहिः क्षिप्यते इति पक्षेऽपि न दोषः, त्रिक्षणावस्थायित्व-नियममात्रैकशरणानां तज्ज्ञान-तत्प्रागभाव-ध्वंस-कल्पना-पेक्षया ज्ञानस्थैर्यकल्पनस्य, विरुद्ध-वृत्ति-तिरोभाव्यत्व-कल्पनस्यैव च लघुत्वात्. उपेक्षाबुद्ध्यादौ शीघ्रं विरुद्धवृत्त्युदयेन पूर्वज्ञानतिरोभावेऽपि अन्यत्र तिरोभावादर्शनेन, त्रिक्षणावस्थायित्वनियमस्य अप्रयोजकत्वात् च. नच मूर्तत्वाभावो, अर्थदर्शनोत्तरं नेत्रनिमीलनेन तदर्थाकारस्य अनुभवेन अविवादत्वात्. अतः शुक्तिरजतादिस्थले मायया बहिःक्षिप्त-बुद्धिवृत्तिरूपं ज्ञानमेव अर्थाकारेण ख्यायते इति मन्तव्यम्. नच इदानीं मायायाः सर्वदा सत्त्वात् सर्वदा भ्रमापत्तिः, संस्कारप्राबल्यस्यापि सहकारित्वात्. अतिरिक्त-संस्कारानङ्गीकारपक्षेतु उद्बोधकैरेव अन्तःशयानायाः बुद्धिवृत्तेः तादृशज्ञानस्य उद्बोधइति तदा सदृशादृष्टचिन्तादि-रूपोद्बोधकसामग्री- प्राबल्यस्यैव सहकारित्वात्. अतः

१५.**अतएव च अभिनवा** इति संस्कारादेः बलिष्ठत्वादेव(ख). १६.**ततः आद्रियताम् इयम्** इति अन्यख्यातिः(ख). १७.**बुद्धिर्विज्ञान**...इति विशेषेण ज्ञानं विज्ञानं तदात्मिका इति अर्थः(ग). १८.**साच न ज्ञानम्** इति नैयायिकं परिहरति(ख). १९.**प्राणस्तु तैजसः** इति राजसाहंकारः इति अर्थः(ग). २०.**अतएवच** इति अहंकारभेदादेव(ख). २१.**तद्वृतेः** इति जन्यज्ञानरूपायाः इति(ख).

प्रबलसंस्कारेण प्रबलोद्बोधकसामग्र्या वा सहकृता माया बुद्धिं बहिः क्षिपति न इतरथेति, न सर्वदा तदापत्तिरिति, आत्मनः ख्यानन्तु असङ्गतमेव. तस्य अहंवित्तिवेद्यत्वाद् "गौरो अहम्" इतिवद् "अहं रजतम्" इति प्रतीत्यापत्तेः. तदभावे आत्मनः ख्यानएव मानाभावात च. तस्माद् अन्यख्यातिरेव सर्वजनीना.

**( अन्यथाख्यातिवादः )**

अत्र **नैयायिकाः** * मायाकृत-बुद्धिव्यत्यास-कल्पनापेक्षया चाकचक्या-द्युद्बुद्ध-संस्कार-सहकृतेन दोषोपहतेन्द्रियेण संप्रयुक्तं शुक्त्यादिकमेव रजताद्यात्मना गृह्यते इति कल्पनस्य लघुत्वात् संप्रयुक्तस्य अन्यथाभानेन अन्यथाख्यातिरेव आदरणीया * इति **आहुः**.

**( विषयस्य अन्यथात्वनिरुक्तेः खण्डनेन अन्यथाख्यातिवादनिरासः )**

तद् न अन्यथात्वे यथार्थतापत्तेः. तथाहि किम् इदम् अन्यथात्वं नाम (क)आरम्भो ? (ख)विपरिणामः ? (ग)तादात्म्यविशेषो[२२] वा ? सोऽपि (१)विशिष्टस्य वा ? (२)विशेषणस्य वा ? (३)विशेष्यस्य वा ? इति.

तत्र न (कखग)आद्याः (क)संप्रयुक्तस्य शुक्त्यादेः मृदः घटस्येव रजतस्य आरम्भे, (ख)दुग्धस्य दधिरूपेणेव रजताद्याकारेण परिणामे वा, (ग)लोहादीनां स्पर्शमणिस्पर्शे सुवर्णाद्यात्मकत्ववद् रजतात्मकत्वे वा, घटदधिवत् सुवर्णवत् च अर्थानतिक्रमाद् रजतमेव स्यात्, तज्ज्ञानस्य च यथार्थत्वं स्यात्. तथा सति भ्रमएव उच्छिद्येत. अर्थक्रियापि तेन सिद्ध्येत्.

न (१-२-३)अन्ये (क-ख/१)विशेषणस्य आरम्भे परिणामे च, शुक्तित्वस्य द्रव्यरूपतापत्तिः जातिताहानिः च इति अधिकदूषणद्वयापत्तेः. (ग/१)तादात्म्यपक्षे च तादात्म्यकारणानिर्वाच्यतापत्तेरेव अधिकत्वात्.

न (१-२-३)इतरे (क-ख-ग/२-३)विशेष्यस्यैव पूर्वोक्तरीतिकान्यथात्वपक्षेऽपि

---

२२. **तादात्म्यविशेष** इति भेदसहिष्णुः अभेदः तादात्म्यम् इति तल्लक्षणम् (ग)

दग्धपटन्यायेन यथार्थत्वापत्तेरेव दूषणत्वाद्, विशेषदर्शनोत्तरमपि दुष्टरजतप्रतीत्यापत्तेः च.

अथ अन्यत्र सतः तत्र अलब्धसत्ताकत्वेऽपि प्रकारीभावो अन्यथात्वम् इति उच्यते इति चेद्, न, तत्र अलब्धसत्ताकेन तेन लब्धसत्ताक-शुक्तित्वादि-तिरस्कारस्य अशक्यवचनत्वाद्, अतिप्रसङ्गात्[२३]. "अर्थस्मृत्या उपनयोत्तरं लब्धसत्ताकस्य"[२४] इति विशेष्यते इति चेद्, न, अन्यतरेण अन्यतरतिरस्कारात् पुरुषभेदेन तत्र[२५] युगपद्भ्रमप्रमानुपपत्तेः. अतिरस्कारेतु उभयोः दण्डकुण्डलवान् इतिवद् उभय-शबल-ज्ञानापत्तेः. अथ गुणदोषयोः तत्र नियामकत्वमिति न एवं ज्ञानम् इति चेद्, न, गुणदोषयोः विषयनिष्ठत्वे तयोः उभयं प्रति साधारणत्वेन उक्तदोषतादवस्थ्यापत्तेः. तयोः तत्तत्करणनिष्ठत्वे च एकस्य रजतशकलयोः[२६] रङ्ग-रजत-भ्रम-प्रमा-समूहालम्बनानुपपत्तेः. आत्मनिष्ठत्वेऽपि तदनुपपत्तेः दुर्वारत्वाद् न किञ्चिद् एतत्. अथ "इदं रजतम्" इत्यत्र "रजताभिन्नः पुरोवर्ती" इति प्रतीत्या रजतभेदाभावएव प्रकारीभूय भासते. सच व्यापकइति[२७] न कोऽपि दोषः इति[२८] यदि विभाव्यते तदपि न मञ्जुलं, रजतभेदाभावस्य अभावप्रतियोगिकाभावतया भावरूपप्रतियोग्यात्मकत्वेन अतिरिक्तपक्षेऽपि प्रतियोगिमात्रनिष्ठत्वेन प्रतियोगिव्यतिरिक्ते तस्य प्रकारीभवितुम् अनर्हत्वात्[२९]. तादृशाभावस्य व्यापकत्वएव मानाभावात्, प्रतियोगिनः रजतभेदस्य व्यापकत्वे तदभावस्यैव असम्भवात् च. अव्यापकत्वेऽपि प्रतियोगिमात्रव्यावृत्तत्वेन तदितरत्र[३०] सत्त्वात् प्रतियोग्यभावयोः सहानवस्थानविरो-

---

२३.**अतिप्रसङ्गाद्** इति अलब्धसत्ताकेन पटत्वादिना घटत्वतिरस्कारापत्त्या पटत्वप्रकारकं ज्ञानं स्यात्[(ख)]. २४.**अर्थस्मृत्या उपनयोत्तरं लब्धसत्ताकस्य** इति तथाच अन्यत्र सतः तत्र अर्थस्मृत्या उपनयोत्तरं लब्धसत्ताकस्य प्रकारीभावः अन्यथात्वम् इति अर्थः[(ख)]. २५.**तत्र** भ्रमप्रमयोः इति अर्थः[(ख)]. २६.**एकस्य रजतशकलयोः** रजतस्य शकलयोः इति अर्थः[(ख)]. २७.**सच व्यापकः** इति व्याप्यवृत्तिः इति अर्थः[(ख)]. २८.**इति न कोऽपि दोषः** इति अव्याप्यवृत्तित्वप्रयुक्तभ्रमप्रमासमूहलम्बनात्मकः इति अर्थः[(ख)]. २९.**प्रकारीभवितुम् अनर्हत्वाद्** इति रजतभेदाभावस्य रजतात्मकत्वे रजतभेदप्रकारत्वं रजतातिरिक्तत्वे घटभेदाभावस्येव रजतप्रकारत्वं स्यात् नतु पुरोवर्तिप्रकारत्वेन अर्थः[(ख)]. ३०.**तदितरत्र** इति शुक्त्यादौ

धस्य दुर्वारत्वात्. ग्रहिलतया सहस्थितिकल्पनापक्षेऽपि तत्र तस्य सत्तालाभकल्पनं, सहस्थितिकल्पनं, तेन च रजतभेदाभिभवकल्पनं, कालान्तरे च भेदेन अभिभवादिकल्पनम् इति कल्पनाचतुष्टयगौरवस्य दुष्परिहरत्वात् प्रमाणविरहात् च न इदम् अतिरम्यम्. किञ्च भेदा भावस्य अतिरिक्तत्वपक्षे भेदाभावस्य यो अभावः तदभावः रजतभेदाभावइति ''रजताभिन्न-भिन्न-भिन्नः पुरोवर्ती'' इति प्रतीत्यापत्तिरपि[३१] अधिका ज्ञेया.

(ज्ञानस्य अन्यथात्वे शङ्कासमाधाने)

*ननु मास्तु विषयस्य अन्यथात्वं तथापि ''रजताकारग्रस्तं ज्ञानं शुक्तिम् आलम्बते'' इति आकारके ज्ञानस्य अन्यथात्वपक्षे किं बाधकम्* इति चेद्, न, तादृशज्ञानस्य शुक्त्यालम्बकत्वात् तत्र शुक्त्या स्वाकारसमर्पणे ''रजतम् अहम् अनुभवामि'' इति अनुव्यवसायो न स्यात् ''शुक्तिं रजतत्वेन जानामि'' इति च स्यात्, असमर्पणेतु शुक्त्यालम्बनएव प्रमाणविरहो विरुद्धानुव्यवसायाद् इति. अथ *रजतज्ञानं स्वप्रयुक्तव्यवहारविषयां शुक्तिं करोति इदमेव आलम्बकत्वम्* इति चेद्, न, यत्र रजतज्ञानोत्तरं सद्यएव बाधो विषयान्तरज्ञानं वा तदा शुक्तेः तत्प्रयुक्तव्यवहाराविषयत्वाद् ज्ञानस्य तदनालम्बकत्वे रजताकारग्रस्तस्यापि तस्य प्रमात्वापत्तेः. नच इष्टापत्तिः, संघातात्मज्ञानस्यापि प्रमात्वापत्तेः. आत्मनः संघातात्मज्ञानप्रयुक्त-व्यवहाराविषयत्वात् संघातात्मज्ञानस्य तदनालम्बकत्वेन संघातात्माकारग्रस्तताना-पायात्. नच *इदानीं तस्यापि अस्तु प्रामाण्यम्* इति वाच्यं, तथा सति समर्थप्रवृत्तेः पूर्वं सर्वत्रैव अप्रामाण्याग्रहेण उक्ततुल्यत्वाद् भ्रमोच्छेदापत्तेः.

यदपि *सौरालोकतदभावाभ्यां कमल-विकास-मुकुलीभावाविव दोषतदभावाभ्यां रजतशुक्तिभावौ समर्थितौ* तदपि मतं, प्रतिनियत-समकालिक-विरुद्धप्रतीत्योः दर्शनादेव ग्रन्थान्तरे परास्तमिति अन्यथाख्यातिवादएव असाधुः इति दिक्.

---

इति अर्थः[ख]. ३१....**भिन्नः पुरोवर्ती इति प्रतीत्यापत्तिरपि** इत्यत्र 'अपि'ना आत्माश्रयोऽपि समुच्चीयते[ख].

*ननु पूर्वोत्पन्ने प्रमारूपे रजतादिप्रत्यक्षे देशकालादीनामपि विशेषणत्वेन भानाद् बहिःक्षिप्तेऽपि तस्मिन् तद्विशिष्टमेव रजतं भासताम्* इति चेद्, न, संस्कारादेः शब्दस्य च पदार्थमात्रापेक्षत्वेन तद्वैशिष्ट्यस्य अनियामकत्वात्. स्मृत्युपनीतं संस्कारोपनीतं वा रजतं भासते इति वदतः प्रतिवादिनोऽपि पूर्वोक्तदूषणोद्धाराय सादृश्याद्युद्बुद्धः संस्कारः पदार्थमात्रम् अपेक्ष्यैव स्मृतिं जनयति उपनयति वा तं, नतु देशादिवैशिष्ट्यमपि अपेक्षते इत्यस्य अवश्यंवाच्यत्वेन समाधेः समत्वात् च. अत्र 'शब्द'ग्रहणन्तु श्रुतपदार्थविषयक-स्यापि भ्रमस्य संग्रहाय इति ज्ञेयम्. अतो न कोऽपि दोषः.

(विपरीतख्यातिवादः)

**भाट्टास्तु** *भ्रमस्थलेऽपि रजतादिज्ञानस्य संस्कारम् अन्तरेण असम्भवात् तज्ज्ञानं स्मृतिरूपमेव अङ्गीकार्यम्. नच तत्तास्फुरणापत्तिः, कर्तृगतदोषेण तत्प्रमोषात्. दोषाभावेतु रजतसादृश्यस्फूर्तिः शुक्तिस्फूर्तिः वा स्यात्. दोषाश्च क्वचिद् रागादयः, क्वचित् प्रबलालोकादिना विवेकासामर्थ्यं, क्वचिद् अन्यचित्तता इत्येवमादयो अननुगताः तथा-तथा दर्शनाद् उन्नेयाः. तस्मात् प्रभुष्टतत्ताका स्मृतिरेव अङ्गीकार्या* इति अख्यातिम्[३२] **आहुः.**

३२.यद्यपि कुमारिभट्टानुसारिभिः मीमांसकैः स्वमतत्वेन अख्यातिः न स्वीक्रियते तथापि तदभिमतायाः विपरीतख्यातेः अख्यातौ पर्यवसानं द्योतयितुं कदाचिद् एवम् निरूपणं स्याद्. भाट्टामिमतख्यातिस्वरूपविषये अधोनिर्दिष्टानि वचनानि अवगन्तव्यानि (१)"**सम्बन्धिदर्शनं हि, सदृशदर्शनवत्, संस्कारम् उद्बोधयते. क्लृप्तंहि तस्य कारणत्वं, संस्कारः च उद्बोधितः स्मृतिं जनयति इति अविवादम्. स्मृतेश्च प्रमोषः शुक्तिरजतादिवेदनेषु क्लृप्तएव.**" (शास्त्रदीपिकायाम् अनुमाननिरूपणे प्रभाकरमतविमर्शे). (२)"**सर्वत्र संसर्गमात्रम् असदेव अवभासते. संसर्गिणस्तु सन्तएव. सेयं विपरीतख्यातिः इति उच्यते भीमांसकैः. असत्ख्यातिवादिनस्तु संसर्गिणोऽपि अपलपन्ति इति विशेषः. शुक्तिरजतवेदनेऽपि विद्यमानैव रजतत्वजातिः विद्यमानस्यैव शुक्तिकाशकलस्य अनात्मभूतैव आत्मतयां अवगम्यते.**" (शा.दी.वि-ज्ञानवादखण्डने). (३)"**एकान्तसत्त्वे का भ्रान्तिः? असत्त्वे किं प्रभासताम्? द्वयानुगुण्याद् वृद्धानां सम्मता ख्यातिरन्यथा.**" (विभ्रमविवेके का.४७)(श्या)

( तन्निरासः )

तद् न, ''रजतम् अहम् अनुभवामि'' इति अनुव्यवसायबाधापत्तेः, 'स्मरामि' इति अनुव्यवसायापत्तेः च.

( विवेकाख्यातिवादः )

**प्राभाकरास्तु** *मास्तु केवला स्मृतिः तथा किन्तु ग्रहणस्मरणात्मकं ज्ञानद्वयमेव अत्र अख्यातिरूपम् अङ्गीकार्यं स्मृतिप्रमाणभेदेन ज्ञानस्य द्वैराश्यात्. नच अनुव्यवसायद्वयापत्तिः, स्मरणाभिमानस्य दोषप्रमुषितत्वात्. अतो अविविक्तज्ञानद्वयाङ्गीकारे न कोऽपि दोषः* इति आहुः.

( तन्निरासः )

तद् न, एकज्ञानतुल्यत्वेन ज्ञानद्वयस्य वक्तुम् अशक्यत्वात्. नच न तौल्यम् इति वाच्यं, ''यदि अगृहीतासंसर्गकं ज्ञानद्वयं स्याद् एकज्ञानतुल्यता न स्यात्. यदि सा न स्याद् व्यवसायानुव्यवसाययोः न उपलभ्येत'' इति तर्केण तन्मूलभूतव्यवसायानुव्यवसाभ्यां च एकज्ञानतुल्यत्वनिश्चयात्. किञ्च, ज्ञानद्वैराश्याग्रहेण अत्र ज्ञानद्वयाङ्गीकारे सर्वत्र विशिष्टज्ञानोच्छेदापत्तिः. ''घटो अयम्'' इति प्रमायामपि अगृहीतासंसर्गकवद् गृहीतज्ञानद्वयस्य शक्यवचनत्वाद्, द्वैराश्ये मूलस्य चिन्त्यत्वात् च.

( अनिर्वचनीयख्यातिवादः )

**मायावादिनस्तु** *मास्तु अख्यातिः, अनिर्वचनीयख्यातिरेव अङ्गीकार्या, अन्यथा रजतभानाभावापत्तेः. नच *रजतारम्भकावयवानां शुक्तौ अभावेन आरम्भानुपपत्त्या अनिर्वाच्यमपि रजतं कथं स्वीकर्तुं शक्यम्* इति वाच्यं, विषयचैतन्यनिष्ठाविद्ययैव तदारम्भोपपत्तेः. तथाहि प्रथमं तावद् दोषसहकृतेन इन्द्रियेण पुरोवर्तिद्रव्यसंयोगाद् इदमाकारा चाकचक्याकारा च अन्तःकरणवृत्तिः उत्पाद्यते, तस्यां च वृतौ इदमवच्छिन्नं चैतन्यं प्रतिबिम्बते. तत् चैतन्यं,

सुषिरद्वारनिर्गत-कुल्याप्रवाहवत्[३३] केदारस्थ-वृत्त चतुष्कोणाद्याकारक-भूभाग-भरित-महासरस्सलिलवद् जाता या चक्षुर्द्वारनिर्गतावयवसंयुक्त-घटाद्याकरक-तैजसान्तःकरणवृत्तिः तस्याम् उक्तरीत्या निर्गमनेन प्रमातृवृत्ति-विषयचैतन्याभिन्नं भवति. तच्च विषयचैतन्यं साविद्यमिति विषयचैतन्यनिष्ठा या अविद्या सा करणदोषेण सादृश्योद्बोधितसंस्कारेण च सहकृता रजताकारेण तद्ग्राहकवृत्त्याकारेण च इति द्वेधा विवर्तते परिणमति वा. एवम् आरब्धं तच्च आविद्यकं रजतम् अविद्याधिष्ठाने विषयावच्छिन्नचैतन्ये वर्तते. सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्. एवं विषयचैतन्ये अध्यस्तमपि रजतं चैतन्यैक्यात् साक्षिणि अध्यस्तमिति तदेकग्राह्यमित्येवं मिथ्याज्ञानोपपत्तौ कृतम् अन्यथाख्यात्या * इति आहुः.

( तन्निरासः )

तद् न, संस्कारेण स्मृतिवत् संस्कारप्राबल्येन डद्बोधकादिसामग्रीप्राबल्येन वा मिथ्याख्यानस्यापि उपपत्तौ अप्रयोजकत्वाद् गुरुत्वात् च अनिर्वचनीयरजताङ्गी-कारस्य व्यर्थत्वात्. नच * संस्कारस्य बहिः पदार्थोपस्थापकत्वम् अप्रयोजकम् * इति वाच्यं, स्वप्ने त्वयापि तन्मात्रेणैव पदार्थोपस्थित्यङ्गीकारात्. नच

---

३३.**सुषिरम्** इति **''सुषिरं विवरं बिलम्''** इति कोशात्. **कुल्या** इति **''कुल्या स्यात् कृत्रिमा सरित्''** [ख]. इदम् अत्र अवधेयम् : शाङ्करमते उपाधिरहितस्य चैतन्यस्य परमार्थतः एकत्वेऽपि प्रमातृ-प्रमाण-प्रमेयत्वरूपोपाधिभिः औपाधिकं त्रैविध्यं भवति. तत्र त्रयाणामपि उपहितानाम् स्वस्वोपाधिसम्बन्धद्वारकैक्ये सम्पन्ने प्रमातरि प्रमेयभूतस्य वस्तुनो अपरोक्षं ज्ञानं जन्यते. तत्र प्रमाणवृत्त्युपहितचैतन्यस्य दृष्टान्तः **सुषिरद्वारनिर्गतकुल्याप्रवाहवद्** इति. प्रमेयरूपविषयोपहितचैतन्यस्य दृष्टान्तः **केदारस्थवृत्तचतुष्कोणाद्याकारकभूभागभरितमहासरस्सलिलवद** इति. प्रमात्रुपहित-चैतन्यस्य दृष्टान्तः **महासरस्सलिलवद्** इति. नेत्रद्वारा निर्गता अन्तःकरणवृत्तिरिव सुषिरद्वारनिर्गतः कुल्याप्रवाहः. एवम्भूतया प्रक्रियया महासरस्सलिलं केदाराकारं भवति इति विषयाकाराकारितायां वृत्तौ अवच्छिन्नं चैतन्यं प्रमातृचैतन्यविषयचैतन्याभ्यां अभिन्नं सत् प्रमातरि प्रमेयापारोक्ष्यं जनयति इति तन्मतीया प्रक्रिया[श्या].

न स्वीकर्तुं शक्यम्. एवञ्च ''विमतम् असत्, सत्त्वात्यन्ताभाववत्त्वात्, शशशृङ्गवद्'' इत्याकारकम् अनुमानं तैः उपस्थाप्यते. तत्र वस्तुतः शब्दैकसमधिगम्यत्वम् उपाधिः वर्तते. अतः तद् अनुमानमपि समीचीनं नास्ति. अनया रीत्या आत्मख्यातिपक्षोऽपि न समीचीनः. असत्ख्यातिपक्षोऽपि न समीचीनः.

तदनु अख्यातिपक्षः प्रभाकरस्य आयाति. तत्र ज्ञानद्वयं वर्तते अथच भ्रमत्वं व्यवहारगतं वर्तते, ज्ञानगतं नास्ति इति अनुभवविरुद्धं वर्तते. सर्वेऽपि जानन्ति भ्रमात्मकं ज्ञानं भवति. ज्ञानं द्विविधं. यथार्थम् अयथार्थं च इति. तत्र अयथार्थज्ञाने भ्रमस्य गणना वर्तते. अतः सोऽपि पक्षः विचारार्हो नास्ति.

एवम् अन्यथाख्यातिपक्षेऽपि काचिद् विप्रतिपत्तिः आयाति. यतोहि देशान्तरगतस्य रजतस्य अत्र प्रतीतिः स्वीक्रियते. देशान्तरस्थस्य प्रतीतौ तैः अलौकिकसन्निकर्षो अभ्युपगम्यते. यदि अलौकिकसन्निकर्षो अस्माभिः स्वीक्रियेते तर्हि अनुमानमात्रस्य उच्छेदो भवति. यतोहि अलौकिकसन्निकर्षवशाद् पर्वतादौ वह्नेः प्रत्यक्षमपि भवितुम् अर्हति. अतो अलौकिकसन्निकर्षेण जायमाना या अनुमितिः सा प्रत्यक्षात्मिका स्यात्. अतो अनुमानमात्रस्य उच्छेदापत्त्या अन्यथाख्यातिपक्षोऽपि समीचीनो नास्ति.

अनया रीत्या मया किञ्चिद् उक्तम्. इदानीं भवन्तो विचारयन्तु. किन्तु अस्माकं प्रतिपाद्यं तत्त्वं एकमेव. तदेव अधिष्ठानतत्त्वं भवति. तद्वशाद् अस्या अविद्यायाः निवृत्तिः, तन्निवृत्तौ प्रपञ्चस्य निवृत्तिः, ततः मोक्षाख्ये कैवल्ये पर्यवसानं भवति. आत्मविश्रान्तिरेव मोक्षः.



## चर्चा

### अनिवर्चनीयख्यातिवादः

**डॉ. श्रीसुधांशुशेखर शास्त्री**

**के. ई. देवनाथन् :** भ्रमस्थले अनिर्वचनीयं रजतं जायेत इति अद्वैतिनां प्रक्रिया वर्तते. इदमवच्छिन्नचैतन्यनिष्ठाविद्यया आविद्यकं रजतं... प्रातिभासिकं रजतम् इति उच्यते तदेव अनिर्वचनीयं रजतं जायेत इति स्वीकुर्मः. मम संशयः : ''इदं रजतम्''इति ज्ञाने अनिर्वचनीयं रजतं यदि भासते, ''नेदं रजतम्'' इति ज्ञानेन किं निषिद्धचते? अनिर्वचनीयं रजतं निषिद्धचते वा ?

**सु. शे. शास्त्री :** यादृशं रजतम् आरोप्यते तस्यैव निषेधो भवति. अनिर्वचनीयस्य रजतस्य यदि आरोपो जातः तर्हि अनिर्वचनीयस्यैव रजतस्य निषेधोऽपि भवति.

**के. ई. देवनाथन् :** अनिर्वचनीयन्तु रजतं तत्र अस्त्येव. व्यावहारिकं रजतं तत्र नास्ति. ''नेदं रजतम्'' इत्यनेन अनिर्वचनीयस्य रजतस्य निषेधः कथं शक्यते ?

**सु. शे. शास्त्री :** निषेधम् अनिर्वचनीयस्य रजतस्यैव किन्तु तदेव अनिर्वचनीयं रजतं व्यावहारिकरजततादात्म्येन प्रतीतं वर्तते. अतः तस्य निषेधः क्रियते. यः खलु जानाति ''इदं रजतं'' स इत्थं जानाति यद् इदं रजतं व्यावहारिकम्. अतो व्यावहारिकत्वेन अवगम्यमानस्य रजतस्य निषेधः क्रियते. निषेधप्रतियोगितु अनिर्वचनीयं रजतमेव. किन्तु तस्य व्यावहारिकतादात्म्यपन्नतया प्रतीतिः वर्तते. अतः तस्य निषेधो भवति.

**के. ई. देवनाथन् :** मम संशयो भवति. ''इदं रजतम्''इति ज्ञाने विषयीभूतं

रजतम् अनिर्वचनीयम्. इदानीं ''नेदं रजतम्'' इति यो जानाति तत्र ज्ञानविषयो भवति व्यावहारिकं रजतम्. येन रजतेन कटकादिकं कर्तुं न शक्यते तद् इदं रजतं न इति परन्तु अनिर्वचनीयं रजतं कटकादिकरणा ...

**सु. शे. शास्त्री :** अनिर्वचनीयं रजतं यदि व्यावहारिकतादात्म्यपन्नतया प्रतीतं तर्हि प्रतीतिकाले स इत्थं जानाति यद् ''इदं रजतं वर्तते, कटककुण्डलनिर्माणक्षमं वर्तते''. इदानीं तस्य निषेधः क्रियते - ''यद् न इदं रजतं कटककुण्डलादिनिर्माणक्षमम्.'' अतो अनिर्वचनीयरजतमेव रजतं निषेधप्रतियोगि.

**के. ई. देवनाथन् :** तर्हि व्यावहारिकरजतस्य निषेधः क्रियते.

**सु. शे. शास्त्री :** न हि, तत्तादात्म्यपन्नतया प्रतीतं यद् रजतं वर्तते तस्य निषेधः क्रियते, नतु व्यावहारिकरजतस्य निषेधः क्रियते. व्यावहारिकं रजतन्तु तत्र प्राप्तमेव नास्ति.

**के. ई. देवनाथन् :** प्राप्तमेव नास्ति परन्तु पुरतो विद्यमानातु शुक्तिः, तत्रतु नास्ति संशयः. परन्तु ''न इदं रजतम्'' इत्यनेन अनिर्वचनीयरजतस्य निषेधः कर्तुं न शक्यते, तस्यतु अस्माभिः स्वीकृतत्वात्.

**सु. शे. शास्त्री :** केवलम् अनिर्वचनीयं रजतं तत्र नास्ति, तत्तादात्म्यपन्नतया प्रतीतं रजतं वर्तते.

**बलिराम शुक्ल :** कस्य तादात्म्यं तत्र ?

**सु. शे. शास्त्री :** व्यावहारिकरजतस्य.

**बलिराम शुक्ल :** तादात्म्यस्य भ्रान्तिः वा ?

**सु. शे. शास्त्री :** तादात्म्यापन्नतया रजतस्य भ्रान्तिः वर्तते.

**बलिराम शुक्ल :** एवं न वक्तव्यम्. 'तादात्म्यापन्नतया' इत्यस्य को अर्थः ?

**पारसनाथ द्विवेदी :** लौकिक-व्यावहारिकरजतत्वेन...

**सु. शे. शास्त्री :** अयम् अर्थो : यथा भवता अत्यन्ताभेदे तादात्म्यं स्वीक्रियते नहि तथा अस्माभिः स्वीक्रियते.

**बलिराम शुक्ल :** तत्र तादात्म्यम् अस्ति वा ?

**सु. शे. शास्त्री :** यः खलु जानाति सः इत्थं जानाति. अतएव भ्रान्तिः.

**बलिराम शुक्ल :** अनिर्वचनीयरजत-सत्यरजतयोः तादात्म्यम् अस्ति वा? कुत्रापि प्रसिद्धम् अस्ति वा?

**सु. शे. शास्त्री :** यः खलु ज्ञाता वर्तते, तस्मिन् ज्ञानकाले, सः इत्थं जानाति यद् इदं व्यावहारिकं रजतम् अस्ति.

**बलिराम शुक्ल :** तत्तु कुत्रापि प्रसिद्धं नास्ति. ज्ञानं कथं स्यात्? सत्यरजत-अनिर्वचनीयरजतयोः तादात्म्यं कुत्रापि प्रसिद्धं वा? यस्य प्रसिद्धिरेव नास्ति तस्य प्रतीतिः कथं भवितुम् अर्हति?

**पारसनाथ द्विवेदी :** इत्थम् अस्ति : पुरोवर्तिनम् अनिर्वचनीयं रजतमेव लौकिकरजततादात्म्यापन्नतया जानाति.

**बलिराम शुक्ल :** कथं तादात्म्यम्?

**पारसनाथ द्विवेदी :** भवति.

**के. ई. देवनाथन् :** तेषाम्अभिप्रायःएवंभाति : अनिर्वचनीयरजत-व्यावहारिक-रजततादात्म्यापन्नत्वं नाम "इदं रजतम्" इति यज् ज्ञानं भवति तत्र भासमानम् अनिर्वचनीयं रजतं व्यावहारिकरजत...

**बलिराम शुक्ल :** अनिर्वचनीयरजतत्वेन भासते, रजतत्वेन वा भासते?

**के. ई. देवनाथन् :** रजतत्वेन भासते. व्यावहारिकानिर्वचनीयरजतसाधारणधर्मेण रजतत्वेन भासते.

**बलिराम शुक्ल :** तदा अन्यथाख्यातिः आगता! व्यावहारिकं रजतत्वं तत्र भासते न वा?

**के. ई. देवनाथन् :** व्यावहारिकं न. व्यावहारिकरजतानिर्वचनीयरजतसाधारणं यद् रजतत्वं...

**बलिराम शुक्ल :** तादृशं रजतत्वं न कुत्रापि प्रसिद्धम्. रजतत्वगता जातिः भिन्ना - भिन्नाएव स्वीकरणीया.

**पारसनाथ द्विवेदी :** कुतः? "इदं रजतं"... समानाकारप्रतीतिः...

**बलिराम शुक्ल :** रजतपात्रादिसमवायिकारणतावच्छेदकतया सिद्धा या रजतत्व-जातिः सा तत्र नास्ति.

**सु. शे. शास्त्री :** उभयसाधारणा जातिः वर्तते रजतत्वम्.

**बलिराम शुक्ल :** कथम् उभयसाधारणा स्वीकर्तुं शक्यते, तत्र रजतत्वस्य कारणतायाः न्यूनवृत्तित्वात्. अन्यूनवृत्तिरेव अवच्छेदकं भवति.

**के. ई. देवनाथन् :** सत्यम्. तैः एवम् उच्यते 'रजतं-रजतम्' इति अनुगतप्रतीतिसिद्धं रजतत्वं... साच अनुगतप्रतीतिः

**बलिराम शुक्ल :** ...व्यावहारिकरजतत्वन्तु कारणतावच्छेदकतया सिद्धा जातिः.

**के. ई. देवनाथन् :** तथा नास्ति.

**सु. शे. शास्त्री :** तेनैव रजतत्वेन तस्य प्रतीतिः जायते. यतोहि व्यवहारकाले पश्चाद् बाधो भवति किन्तु यस्मिन् काले भ्रान्तिः जायते तस्मिन् कालेतु स इत्थमेव जानाति ''इदं रजतम्'' इति. रजतत्वेन तस्य ज्ञानं भवति. अथच रजतत्वेन ज्ञाने जाते साधारणधर्मो रजतत्वं वर्तते. अतो रजतत्वेन तस्य ज्ञानं जायतएव. यदि स इत्थं जानाति यद् अयं भ्रमात्मकं ज्ञानं वर्तते, अस्य विषयोऽपि भ्रमात्मकएव, तदा भ्रमएव न स्यात्. निषेधप्रतियोगितु अनिर्वचनीयमेव रजतं वर्तते.

**के. ई. देवनाथन् :** तत्र एवं भाति : यत्र अनुगतप्रतीत्या जातिः न सिद्ध्यति तत्रैव नैयायिकैरपि कारणतावच्छेदकपर्यन्तं... यथा 'द्रव्यं-द्रव्यम्' इति अनुगतप्रतीतिः घृत..जत्वादिषु...

**बलिराम शुक्ल :** कारणतावच्छेदकतया यदि सिद्धा जातिः वर्तते तत्र सर्वत्र अनुगतप्रतीतिः नास्ति. अनुगतप्रतीतिः यत्र सर्वत्र यथा ...प्रभृतिषु... तत्रैव अनुगतप्रतीतिः, सर्वत्र नास्ति. मृगमरीचिकायां यद् रजतं वर्तते तद् ''इदं रजतम्'' इति प्रतीतिः कुत्रापि वर्तते? नास्ति. अतः अनुगतप्रतीत्यभावाद् कारणतावच्छेदकतयैव जातिः तत्र सिद्ध्यति.

(कोलाहलः)

**के. ई. देवनाथन् :** अन्यः कश्चित् संशयो वर्तते. श्रीमद्भिः उपपादितं यद् ''अनिर्वचनीयत्वमपि अनिर्वचनीयमेव'' इति. परन्तु प्रसिद्धः कश्चित् प्रश्नः सर्वैरपि क्रियते, अनिर्वचनीयत्वं यदि अनिर्वचनीयं तर्हि तदपि निर्वचनमेव. एवं तर्हि ब्रह्मव्यतिरिक्तम्

एकं निर्वर्चनीयम् अस्ति इति आयाति. ...मम संशयन्तु पूरयामि. अस्य प्रश्नस्य समाधानं लघुचन्द्रिकायां कृतम् अस्ति. तत्र तावत् समो दोषो भवति इति उक्तम्. ममतु तत्रैव संशयो भवति. समो दोषो वा भवतु परन्तु प्रश्नस्तु अस्ति किल यत् मिथ्यात्वं यदि मिथ्या भवति तर्हि सत्यं भविष्यति.

**पारसनाथ द्विवेदी :** केन अनुमानेन भविष्यति ?

**के. ई. देवनाथन् :** अनुमानस्य आवश्यकतैव नास्ति. मिथ्यात्वं यदि मिथ्या...

**पारसनाथ द्विवेदी :** दृश्यत्वम् उभयत्र समानम्...

**सु. शे. शास्त्री :** तत्र एकस्य निषेधे अपरस्य सत्यत्वम् आयाति, यत्र निषेध्यतावच्छेदकम् उभयवृत्तिः न भवति.

**के. ई. देवनाथन् :** मम संशयस्तु न पूर्णः. लघुचन्द्रिकाकारैः उक्तं यत् पक्षसमः कश्चिद् दोषः इति. तत् त्यजामः. भवतु. मम संशयो न पूर्णः ...

**पारसनाथ द्विवेदी :** ''अनिर्वचनीयत्वं मिथ्या, दृश्यत्वात्'' अस्मिन् अनुमाने को दोषः ?

**के. ई. देवनाथन् :** अत्र... परन्तु ''प्रपञ्चो मिथ्या, दृश्यत्वाद्'' इति अनुमाने प्रपञ्चान्तर्गतस्य मिथ्यात्वस्य अमिथ्यात्वे सामानाधिकरण्यः बाधयोग्य...( कोलहलः )

**पारसनाथ द्विवेदी :** ...अमिथ्यात्वं न केनाऽपि उच्यते.

**बलिराम शुक्ल :** मिथ्यात्वन्तु स्वरूपमेव, भिन्नं नास्ति.

**सु. शे. शास्त्री :** तत्र एकं समाधानं वर्तते : निषेध्यतावच्छेदकं यदि उभयत्र न स्यात् तदातु एकस्य निषेधे अपरस्य सत्यत्वम् आयाति. यत्र निषेध्यतावच्छेदकम् उभयवृत्तिः भवति न तत्र एकस्य निषेधे अपरस्य सत्यत्वम् आयाति. तत्र दृष्टान्तोऽपि, एकस्मिन् गजे यथा. गोत्वस्यापि निषेधो भवति, अश्वत्वस्यापि निषेधो भवति तत् निषेध्यतावच्छेदकं गजत्वात्यन्ताभावव्याप्यत्वम् एकमेव वर्तते इति समाधानं कृतम् वर्तते. तथैव अत्रापि

दृश्यत्वं तावत् निषेध्यतावच्छेदकं वर्तते. तद्धि दृश्यत्वं यथा प्रपञ्चे वर्तते तथा अनिर्वचनीयत्वेऽपि वर्तते. अतो अनिर्वचनीयत्वस्य निषेधे प्रपञ्चस्य सत्यत्वं, मिथ्यात्वस्य निषेधे प्रपञ्चस्य सत्यत्वं न आयाति. नित्यसमा जातिः यः पक्षः भवद्भिः उत्थापितः तत्र लक्षणं वर्तते : स्वपक्षहा-निकरत्वम्. अतः प्रपञ्चमिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पेन अस्मान् प्रति दूषणो नित्यसमा जातिः.

**के. ई. देवनाथन् :** स्वपक्षहानिकरत्वं सर्वासां समाना... जातिसामान्यस्य (कोलाहलः) मम विवक्षा तत्रा नास्ति. चन्द्रिकाकाराणां सिद्धान्तो यः कोऽपि वा भवतु. मम प्रश्नस्तु, मिथ्यात्वं यदि पक्षान्तर्गतं भवति तर्हि अंशतो बाधो भवति. पक्षान्तर्गतं नास्ति चेद् ब्रह्मव्यतिरिक्तं किञ्चिद् अन्यमपि सत्यं स्वीकृतं भवति वा न वा? तस्य समाधानं यद् उक्तं चन्द्रिकाकारैः...

**सु. शे. शास्त्री :** इदमेव समाधानं वर्तते, यत्र-यत्र दृश्यत्वं तत्तद् निषेद्धचम् अस्माकं सिद्धान्ते. इदानीम् अवलोक्यताम् तत्र दृश्यत्वं वर्तते. यदि दृश्यत्वं वर्तते तर्हि मिथ्यात्वम् आयास्यति... एकस्य मिथ्यात्वे अपरस्य सत्यत्वम् इत्यस्य समाधानं मया कृतम्. यदि उद्देश्यतावच्छेदकं उभयवृत्तिः न भवति तत्र तावद् एकस्य निषेधे अपरस्य सत्यत्वं तथा अत्र नास्ति.

**के. ई. देवनाथन् :** तत्रैव विषदीकरणीयम् भवति. यथावा 'सदसद्विलक्षणत्वम्' इत्यत्र ''सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावत्त्वम्' इत्यत्र सत्त्वासत्त्वयोः विरोधो नास्ति इति मिथ्यात्वपरिष्कारे प्रतिपादितम् अस्ति. तद्वद् अत्रापि प्रतिपादनम् अस्ति वा? मिथ्यात्वं द्विविधम्, एकं मिथ्यात्वव्यतिरिक्तप्रपञ्चे समन्वेति. अपरं मिथ्यात्वं...

**सु. शे. शास्त्री :** नास्ति मिथ्यात्वस्य भेदः.

(कोलाहलः)

**बलिराम शुक्ल :** यन् मिथ्यात्वं प्रपञ्चे वर्तते तदेव मिथ्यात्वेऽपि वर्तते. तर्हि अनवस्था भवति.

**सु. शे. शास्त्री :** अनवस्थायाः अवसरएव नास्ति. कुतः ? तत्र यदि भवता मिथ्यात्वावच्छेदेन भिन्नं मिथ्यात्वं स्वीक्रियते तदा अनवस्था भवतुम् अर्हति किन्तु तत्रतु सत्यत्वस्य आपादनं न भवति. यतोहि एकेनैव दृश्यात्वावच्छेदेन मिथ्यात्वम् अङ्गीक्रियते.

**के. ई. देवनाथन् :** नैयायिकानामपि अनवस्था वर्तते. ...इतरभावविषये अनवस्थातु सर्वेषां दार्शनिकानां कथञ्चित् परिहरणीयाएव.

**सु. शे. शास्त्री :** मान्याः ! अनवस्थादिकं यद्धि दूषणं वर्तते तत् सर्वं अनिर्वचनीयत्वं साधयति. तद् अस्माकम् अनुकूलमेव भवति.

**बलिराम शुक्ल :** दोषोऽपि अनुकूलः !

**गो. श्या. म. :** मिथ्यात्वे यद् दृश्यत्वं वर्तते तत् फलव्याप्यत्वरूपं वा वृत्तिव्याप्यत्वरूपं वा ? तद् यदि फलव्याप्यत्वरूपं दृश्यत्वं तदा तादृशी बुद्धिः मिथ्यात्वे कदाचिदपि न भवति. प्रापञ्चिके वस्तुनि फलव्याप्यत्वरूपा दृश्यत्वबुद्धिस्तु जायते, मिथ्यात्वस्य कदाचिदपि तादृक् प्रत्यक्षं न भवति. कुत्रापि वयम् एवं न अनुभवामः...

**सु. शे. शास्त्री :** फलव्याप्यत्वरूपं दृश्यत्वं नैव अङ्गीकृतम्. वृत्तिव्याप्यत्वरूपं दृश्यत्वमेव अङ्गीकृतम्.

**गो. श्या. म. :** फलव्याप्यत्वरूपं दृश्यत्वं शास्त्रकृद्भिः निराकृतम्...

**सु. शे. शास्त्री :** ‘‘फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्य पक्षस्य क्षोदक्षमत्वं’’... ‘‘फलव्याप्यत्वमेवात्र शास्त्रकृद्भिर्निराकृतं’’ ब्रह्मणि तथा वर्तते. अत्रतु दृश्यत्वं तावद् वृत्तिव्याप्यत्वरूपमेव.

**गो. श्या. म. :** तथाच मिथ्यात्वस्य दृश्यत्वम् अन्यादृशं, प्रपञ्चस्य...*

---

**संगोष्ठ्युत्तरलेखनम्**

**गोस्वामी श्याम मनोहर**

*अद्वैतसिद्धौ तावद् दृश्यत्वहेतूपपत्तौ ‘‘**वस्तुतस्तु शब्दाजन्यवृत्तिविषयत्वमेव**

**सु. शे. शास्त्री :** एकेनैव प्रमाणेन सहैव सर्वस्यापि मिथ्यात्वं साधयति शास्त्रम्.

**के. ई. देवनाथन् :** सदृशन्तु न भवति.

**सु. शे. शास्त्री :** सादृश्यमेव वर्तते. यद्धि लक्षणं तत्र संयोज्यते तदेव लक्षणं अत्रापि सङ्गच्छते. अतो मिथ्यात्वस्य लक्षणं भिन्नं नास्ति. अतः पार्थक्येन वक्तुं कथं शक्यते ?

**के.ई.देवनाथन् :** अन्यदपि... 'वृत्तिव्याप्यत्वम्' इत्युक्तौ वृत्तिव्याप्यत्वं च वृत्तिविषयत्वमेव. वृत्तिविषयत्वन्तु अनिर्वचनीये वस्तुनि प्रपञ्चे यदि स्वीक्रियते तर्हि अनिर्वचनीयत्वं कथं सङ्गच्छते ?

**पारसनाथ द्विवेदी :** विरोधः कः ? अनिर्वचनीये यदि...

**बलिराम शुक्ल :** अनिर्वचनीयत्वस्य अर्थः : ''सद्भिन्नत्वे सति असद्भिन्नत्वे सति सदसद्भिन्नत्वं.'' तत्तु तत्र वर्तते.

---

दृश्यत्वम्'' इति अङ्गीकृतम्. तत्र मिथ्यात्वन्तु पुनः ''**सद्भिन्नत्वे सति असद्भिन्नत्वे सति सदसद्भिन्नत्व**'' रूपं पारिभाषिकमेवेति शब्दजन्यवृत्तिविषयतां नातिक्रामति. किञ्च प्रत्यक्षस्य सन्मात्रग्राहित्ववादिनां मते मिथ्यात्वस्य प्रत्यक्षेण गृहीतुम् अशक्यत्वेन ''**नासदासीद् नो सदासीद्**''इति श्रुत्या सिद्धत्वेतु पुनः शब्दजन्यवृत्तिविषयत्वेनैव मिथ्यात्वस्य साध्यत्वे दृश्यत्वस्य असाधकत्वम्. यदितु प्रतीतिबाधान्यथानुपपत्तिमूलकस्य मिथ्यात्वस्य शब्दाजन्यवृत्तिविषयत्वं विवक्षितं चेत् तदा सुस्पष्टं प्रपञ्चस्य दृश्यत्वं न केवलं वृत्तिव्याप्यत्वरूपं किमुत फलव्याप्यत्ववृत्तिव्याप्यत्वोभयसाधारणं मिथ्यात्वस्यतु पुनः शब्दाजन्यवृत्तिविषयत्वरूपमिति अन्यादृशमेवेति कथं निषेध्यतावच्छेदकैक्यं सम्भवदुक्तिकमिह ? यत्र प्रपञ्चे मिथ्यात्वं तत्र शब्दजन्यशब्दाजन्ययोः अन्यतरवृत्त्योः विषयत्वरूपं मिथ्यात्वेतु शब्दाजन्यवृत्तिविषयत्वरूपं दृश्यत्वम् इति न समानयोगक्षेमः. किञ्च ''**सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्. प्रकारश्च सोपाख्यः कश्चिद् धर्मः... उपाख्याच 'अस्ति'इति धीविषयत्वादि इति अन्यत्. एतेन वृत्तिव्याप्यफलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वमपि हेतुः**'' इति अद्वैतसिद्धिकृतां वचनानुरोधाद् व्यावहारिके प्रपञ्चे बाधज्ञानात् पूर्वं 'अस्ति'इति धीविषयत्वसम्भवेऽपि तथाविधधीविषयत्वसम्भवनारहिते मिथ्यात्वे अन्यादृशएव दृश्यत्वस्यापेक्षितत्वेन न एकेनैव 'दृश्यत्व'हेतुना मिथ्याप्रपञ्चतन्मिथ्यात्वयोः मिथ्यात्वं सम्भवति इति. अपरञ्च अनिर्वचनीयख्यातिवादिनां मते शुक्तौ रजतारोपो वा अनिर्वचनीये रजते व्यावहारिकरजतारोपो वा ? यदिच बाधज्ञानेन

के. ई. देवनाथन् : भिन्नत्वघटितं चेत् तत्र दोषो न भवति. अनिर्वचनीयम् इति 'वच्'धातुघटितं चेत् शब्दावाच्यत्वम् इति...

सु. शे. शास्त्री : एवं नास्ति. पारिभाषिकम् अनिर्वचनीयत्वम्.

बलिराम शुक्ल : ब्रह्मसिद्धौ मण्डनमिश्रेण उक्तम् अस्ति यन् मायायाः अवाच्यत्वन्तु नास्ति परन्तु अनिर्वचनीयत्वम् अस्ति.

गो. श्या. म. : तादृग् अनिर्वचनीयत्वन्तु ब्रह्मणो वर्तते.

के. ई. .देवनाथन् : नैयायिकरीत्या कश्चित् प्रश्नो भवति. ज्ञानलक्षणाप्रत्यासत्तिं खण्डयन्ति परिभाषाकाराः "अनुमानमात्रस्य उच्छेदापत्तेः". भवद्भिरपि अनूदितः. तत्र मम संशयो भवति. किं लाघवं नास्ति वा नैयायिकमते? अनिर्वचनीयं किञ्चिद् वस्तु भवद्भिः सम्पाद्यते, तस्य उपादानम् उच्यते, तस्य नाशः उच्यते, प्रागभावः सवोऽपि वक्तव्यो भवति. नैयिकास्तु सिद्धमेव आपणस्थं रजतं...

सु. शे. शास्त्री : लाघवं तत्रैव स्वीक्रियते यत्र सिद्धान्तविरोधो न भवेत्. अत्र लाघवस्वीकारे सिद्धान्तविरोधः.

के. ई. देवनाथन् : श्रुतिः कुत्राऽपि अनिर्वचनीयं रजतम् इति... "इन्द्रो मायाभिः पुरुरूप ईर्यते" इत्यादिकम् अस्ति, मायिकम् इति श्रुतिः वदति किन्तु कुत्रापि अनिर्वचनीयं रजतं जायेत इति श्रुतिः वदति वा? सर्वं वस्तु मायिकम् इति तु...

सु. शे. शास्त्री : अविद्यायाएव अनिर्वचनीयाः तत्परिणामप्रपञ्चोऽपि अनिर्वचनीयः.

---

शुक्तिरूपाधिष्ठाने ह्यनिर्वचनीयस्य रजतस्य निरासः तदा अनिर्वचनीयरजताधिष्ठानक-व्यावहारिकरजतारोपनिवृत्तिः. यदितु व्यावहारिकरजतारोपनिवृत्तिः न तदा शुक्तेः अधिष्ठानत्वम्. यदितु शुक्तावेव व्यावहारिकरजतारोपा शुक्तिरजतभ्रान्तिः इति अभ्युपगम्यते तदा अनिर्वचनीयरजत-व्यावहारिकरजतारोपयोः ऐक्यापत्त्या तयोः तादात्म्यमेवेति न "व्यावहारिकरजततादात्म्यापन्नस्य अनिर्वचनीयस्य रजतस्य "नेदं रजतम्" इति निषेधप्रतीतिविषयत्वम्.

किञ्च **"नासदासीद् नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो**

**के. ई. देवनाथन् :** तत्तु स्वीक्रियते. ब्रह्मव्यतिरिक्तं सर्वम् आविद्यकं मायिकं, बहवो ...विशेषाः भवद्भिः उपदिश्यन्ते. अन्यदपि अन्यार्थाः उच्यन्ते.

**सु. शे. शास्त्री :** अविद्या यदि अनिर्वचनीया तस्य परिणामभूतो प्रपञ्च...

**के. ई. देवनाथन् :** तत्रैव प्रश्नो भवति. अविद्यायाः अनिर्वचनीयत्वं भवद्भिः युक्त्या उच्यते किल ? ''ख्यातिबाधायोगात्...''.

**पारसनाथ द्विवेदी :** ''नासदासीद् नो सदासीद्'' इति श्रुतिरपि वर्तते.



---

यत्, **किमावरीवः... आनीद् अवातं स्वधया तदेकं तस्माद्ध अन्यत् न परः किञ्चनास**'' (ऋक्संहि.१०।११।१२९।१-२) इति श्रुतौ निषेध्ये सदसती न तावद् 'बाधानर्हत्व'-'क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्व'रूपे अङ्गीकर्तुं शक्ये, ''**आनीद् अवातं...तस्माद्ध अन्यत् न परः किञ्चन आस**''इति उत्तरवाक्यांशसिद्धस्य मायावरणविक्षेपादिसकलद्वैतरहितस्य ब्रह्मणोऽपि सृष्टेः पूर्वं निषेध्यत्वप्रसक्त्या शून्यवादएव किल मायावादस्य पर्यवसानापत्तेः. नच बाधानर्हत्वरूपसत्त्वानिषेधे मिथ्यात्वसिद्धिरिति उभयतःपाशोऽत्र प्रतीयते. यत्तु अद्वैतसिद्धिकाराः *श्रुत्यर्थापत्त्युपत्तौ* अस्याः श्रुतेः पारमार्थिकापारमार्थिकत्वाभ्याम् अन्यार्थानाम् अप्रसिद्धार्थकत्वेन सदसद्विलक्षणत्वएव पर्यवसानं साधयन्ति तदपि ''**असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितं भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद् विष्णो बहुधा वीर्याणि त्वं नः पृणीहि पशुभिः विश्वरूपैः सुधायां मा धेहि परमे व्योमन्**'' (अथर्वसंहि.१७।१।१९) इति श्रुतेः सदसतोः इतरेतरप्रतिष्ठत्वबोधनाद् '' '**सदसच्च**', '**सन्**'=**मूर्तम्** '**असद्**'=**अमूर्तम्**'' (प्रश्नोप.शांक.भा.२।५), ''**यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्**'' (भाग.पुरा.३।२८।९-१०) इत्येवमादिषु बहुषु वचनेषु स्थूलसूक्ष्ममूर्तामूर्तकार्यकारणार्थकत्वाद्यर्थेषु प्रसिद्धिसद्भाच्चैव तदितरेतराभ्यां विलक्षणस्य स्वप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपस्य मिथ्यात्वस्य श्रुतार्थापत्तिम् अन्यथैवोपपादयति इति न प्रामाणिकम्. इत्येतादृशी विवक्षा ममासीत् तदानीं किन्तु विचारसंगोष्ठ्यां समागतानां विद्वदग्रगण्यानां वादप्रतिवादपराणां स्वस्वविवक्षितार्थनिरूपणौत्सुक्यत्वरां स्वस्वविषयेषु प्रकाण्डवैदुष्यवतां च तेषां मिथः चर्चया ममैव ज्ञानाभिवृद्धिलौल्यसन्तुष्ट्यै नाशकं तदा वक्तुमिति अधुना आवेद्यते.

# Anyakhyāti in Comparison with Vijñānabhikṣu's View In Yogavārtika

Dr. Mrs. Sunanda Y. Shastri

In the classic example of shell and silver, one mistakes silver for shell. It is a case of error or illusion. This form of non-valid cognition is known as 'viparyaya'. Many theories have come forth in order to find the cause of this error in Indian philosophical systems.

Yogasūtra defines yoga as 'stopping of activities of Citta[1]. Vṛtti is activity of Citta. These Vṛttis are five[2], and 'Viparyaya' is one of them[3] ''प्रमाणविपर्ययविकल्पनिद्रा-स्मृतयः'' Yogasūtra defines 'Viparyaya' as false knowledge without foundation in form. ''विपर्ययो मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम्''[4].

According to Vyāsabháṣya also error is not authentic knowledge, because it is contradicted by valid knowledge. Valid knowledge is knowledge of a real object existing before us. ''**सः कस्मान् न प्रमाणम्? यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य**''[5] It is seen that false knowledge of two moon's is contradicted by perception of one moon, actually existent.

The famous author of Yogavārtika Vijñānabhikṣu (V.B.) says, Viparyaya is wrong knowledge (Mithyā jñānam), which is not established on true form of object "'मिथ्या' इति अस्य विवरणम् अतद्रूपप्रतिष्ठम् इति"[6]. The form of object falsely perceived is not like real object and not similar to itself. Though, there is no correct knowledge in misapprehension. There is superimposition of it on the object. One thinks it as correct knowledge, which in fact is false knowledge. "**न तद्रूपो न स्वसमानाकारो यो विषयः तत्प्रतिष्ठं तद्विशेष्यकम् इति अर्थः**"[7]. V.B. explains it "superimposition of form of knowledge on the object e.g. in the rope-snake example, misapprehension is superimposition of form of knowledge of snake on the rope" (**भ्रमस्थले ज्ञानाकारस्यैव विषये समारोपः**)[8].

This Kind of Knowledge is not considered as valid knowledge, because it is contradicted by valid knowledge. Since, rope is known through valid source of knowledge, the knowledge of snake is contradicted or disappears later.

According to V.B., theory of error in Yoga system is called 'Anyathākhyāti' and it is just not nondiscrimination (Aviveka) as in the Sāṅkhya system. "**अत्र च शास्त्रे अन्यथाख्यातिः सिद्धान्तो, नतु साङ्ख्यवद् अविवेकमात्रम्.**" This theory of error is 'Anyathākhyāti', since it is positive mistaking of one thing for other, as in the case of shell-silver illusion. Silver is perceived in the place of

shell. 'Aviveka' according to Sāṅkhya is 'lack of sufficient knowledge' or nondiscrimination between self and not self. It leads to the confusion between 'Buddhi' and 'Puruṣa' (self), and characteristics of each other are ascribed to each other. 'Knowing' is ascribed to Buddhi and activity to Puruṣa (self). Sāṅkhya's chief goal is to remove this 'Aviveka' through 'Viveka'. Anyathākhyāti is seeing non-eternal as eternal, impure as pure, dissatisfaction as pleasure and non-self as self. It is also called Avidyā. ''अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखः आत्मख्यातिः अविद्या''[10].

V.B. notes the difference of his view from Nyāya-Vaiśeṣikas, viz. like Naiyāyikas there is no superimposition of silver which is outside on to the shell. But only of that silver which is inside. Which means only idea of silver is superimposed ''वैशेषिकाच्च अत्र अयं विशेषो यद् बाह्यरजतादेः न आरोपः किन्तु आन्तरस्यैव इति''[11].

Nyāya - Vaiśēṣika school also believes in Anyathākhyati but there is difference between Anyathākhyāti of yoga school as shown above. Nyāya - Vaiśeṣika school believes that the cause for shell appearing as silver, is due to former experience. According to them, real object is mistaken as another real object, which exist elsewhere. The word 'Anyathā' means else-wise and elsewhere. The presented object (shell) is perceived 'else-wise'

and the represented object (silver) exist elsewhere. The shell and silver are both, separately real, only their synthesis their relation as 'shell-silver' is unreal. The shell is misperceived as silver, which exists elsewhere, i.e. in the market[12]. Whereas, Yoga school thinks that, there is no need to go outside the mind to explain the error. The change of shell into silver is due to mental ideation only. This is the difference between two school's[13]. V.B. says, discarding the nearby shell, of which the form of knowledge is established by experience and imagining the silver which is not near, is indeed, unwarranted. "ज्ञानाकारम् अनुभवसिद्धं शुक्त्यादिकं सन्निकृष्टं विहाय दूरस्थरजतादिविषयकत्वकल्पने गौरवात्"[14]. If Naiyāyika's view is accepted then, the objects seen in dream cannot be explained, because, objects seen in the dream state do not exist outside and are not seen in the waking state. Therefore, it should be taken as mental adaptation or ideation. "स्वप्ने दृष्टम् इदानीं नास्तीति स्वरूपतो बाधानुपपत्तेः"[15].

Modifications (Vṛtti) are definitely of nature of misapprehension, according to V.B. Therefore, they should be totally discarded[16]. "वृत्तयो विपर्ययादिमत्यएव अत्यन्तहेयत्वप्रतिपादनाय"

It is interesting to note that in Yogavārtik V.B. clearly admits Anyathākhāti whereas in साङ्ख्यप्रवचनभाष्य while commenting on Sūtra "सदसत्ख्यातिः बाधाबाधात्"

(5.56) he upholds the सदसत्ख्याति. Because सदसत्ख्याति can not be contradicted by any reason. Everything is real. Everything should be taken as real, as well as unreal, or existent as well as non-existent in practical sense. All things being eternal by nature cannot be contradicted with association they become contradicted, like conscious things and non-conscious things तत्र स्वरूपेण अबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्ये अस्ति''[17].

For example, silver is real, existing in the jeweler's shop and silver superimposed on shell is unreal. Similarly, in the cases of state (अवस्था) i.e. tree and sprout, tree in the grown-up state is real and the same tree as in the state of sprout is unreal (non-existent)[18]. Whole world by nature is real (existent) and superimposed on consciousness is unreal. Therefore, everything is existent and non-existent. Relatively same thing can be real as well as unreal. It is सदसत्ख्यातिः.

Yogavārtika very of the mentions विज्ञानामृतभाष्य, साङ्ख्यप्रवचनभाष्य and उपनिषद्भाष्य. Similarly, Sāṅkhya-pravacanabhāṣya mentions Yogavātrttika. Therefore, it is very difficult to ascertain, which work is earlier and which later. He upholds Anyathākhyāti in Yogavārttika and सदसद्ख्याति in साङ्ख्यप्रवचनभाष्य.

Śuddhādvaita theory of error is known as 'Anyakhyāti'. This theory of error is discussed in

'khyātivāda' of Purusottamacaraṇa (P.C.) and in 'Prameyaratnārṇava' under the title of 'ख्यातिविवेक' by Śrī Bālakṛṣhṇa Bhaṭṭa (B.K.).

B.K. defines 'Anyakhyāti' as, when there is knowledge of an altogether different object (like silver) then which is in contact with sense organ i.e. shell that is known as 'Anyakhyāti: ''इन्द्रियेण गृह्यमाणाद् विषयात् शुक्त्यादिरूपाद् अन्यस्य रजतादेः ख्यातिः 'अन्यख्यातिः' इति उच्यते''.[19] It is in form of activity of Buddhi (intellect) known as 'Viparyāsa'. 'Subodhinī' commentary on Bhāgavata by Śrī Vallabhāca-ārya says, it gives knowledge of completely different object, in the place of perceived object, i.e. knowledge of different object, which is not in contact with sense organ ''विपर्यासो भिन्नार्थप्रतिपादकः''[20]. B.K. explains 'Bhinna-ārtha' as ''इन्द्रियसंयुक्तार्थाद् भिन्नो अर्थः''[21] i.e. knowledge of different object than that which is in contact with sense-organ.

P.C. defines[22] 'Anyakhyāti' as follows, previously generated experience stay in the form of impressions (in the Buddhi = intellect) when causes to arouse these impressions are predominant then activity of Buddhi (intellect) in the form of illusory object is projected out by Māyā. Then that activity of intellect partially or completely covering the object, which is before eyes, appears outside or externally. It is knowledge of another illusory object (Māyika), which is not in contact with

sense organs, therefore. It is known as 'Anyakhyāti'. Thus the error is activity or modification of Buddhi "तत्र पूर्वोत्पन्नस्य अनुभवस्य संस्कारात्मना स्थितस्य, उद्बोधकैः प्राबल्ये, मायिकार्थाकारवती बुद्धिवृत्तिः मायया बहिः क्षिप्यते तदा सा पुरोवर्तिनं सर्वतो अंशतो वा आवृत्य बहिः अवभासते इति मायिकस्य अन्यस्यैव ख्यानाद् 'अन्यख्यातिः' इति अत्र व्यवह्रियते"

B.K. shows how Śuddhādvaita view is different from others. He states, according to others mind, object and sense organs are responsible for perceptual knowledge. Buddhi is not the cause of for perceptual knowledge. They do not include Buddhi in the process of perceptual knowledge. Our view based on the sentençe of Bhāgavata is, it is Buddhi which produces knowledge, such as doubt, error etc. Therefore, in the case of perceptual knowledge, sense object contact, with the mind, produces indeterminate ( ordinary knowledge = सामान्यज्ञान ) knowledge but it is Buddhi, which produces special kind of knowledge such as error etc. Thus, our view is different than others[23]. It is clear that Śuddhādvaita view includes Buddhi in the process of perceptual knowledge, whereas, others do not. "अन्येतु 'प्रत्यक्षज्ञानमात्रं प्रति मनइन्द्रियविषयाणां कारणता, न तत्र बुद्धेः निवेशः' इति आहुः. अस्मन्मतेतु भागवततृतीयस्कन्धवाक्यात् संशयादीनि ज्ञानानि बुद्धिः उत्पादयति. अतः, प्रत्यक्षज्ञाने मनइन्द्रियविषयाणां सामान्यज्ञानोत्पादकत्वं, बुद्धिस्तु विशेषाकारेण संशयादिशब्दवाच्यानि ज्ञानानि जनयति इति तेभ्यो अयम् इतरो अस्माकं पन्थाः".

B.K. explains the process of error, viz., when the

Lord's power Māyā deludes Buddhi with predominance of Tamoguṇa after the rise of indeterminate ordinary knowledge (सामान्यज्ञान) due to sense object (eye shell) contact. Thus when Buddhi (intellect) is deluded the right knowledge, "this is shell" does not arise, because ignorance is product of Tamoguṇa. "प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" (भग.गीता १४।१७). Similarly, Buddhi deluded by Māyā does not grasp the true nature of the object. Due to the predominance of impressions of silver, Buddhi grasps the resemblance of shining-ness, whiteness etc. and creates silver on the shell. Then, Buddhi (intellect) grasps this silver, which is already existing in the Buddhi (intellect). At the time of Sāmānya-jñāna (indeterminate knowledge), i.e., at the time of sense object contact silver is not created in the Sāmānya-jñāna (indeterminate knowledge), since, silver is absent at that moment and silver is created by Buddhi (intellect) only after indeterminate knowledge[24] (Sāmānya-jñāna). Therefore, the conclusion can be drawn that the object of indeterminate knowledge (Sāmānya-jñāna) is shell only. After indeterminate knowledge (Sāmānya-jñāna) the special kind of knowledge is produced by Buddhi (intellect) and silver existing in the Buddhi (intellect) is the object of error. "तथाच पदार्थयाथात्म्यस्फुरणाभावात् मायामोहिता बुद्धिः रजतसंस्कारप्राबल्यात् चाकचक्यादिधर्मसादृश्यम् आदाय रजतं तत्र निर्माति. तदिदं बौद्धमेव रजतं बुद्ध्या विषयीक्रियते, नतु सामान्यज्ञाने चक्षुविषयीभूतम् इति विवेकः, तदानीं रजतस्य अभावात्, सामान्यज्ञानानन्तरं बुद्ध्या रजतोत्पादनात्. अतः सामान्यज्ञानेतु शुक्तिरेव विषयीभूता, तस्यैव

सामान्यज्ञानं, विशेषज्ञानन्तु बुद्धिकृतमिति तत्र बौद्धमेव रजतं विषयीभवति इति निष्कर्षः''.

It is said in the Subodhinī[25] that, ''रजतन्तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च, तत्र सा बुद्धिरेव कारणम् ... इन्द्रियार्थयोः मध्ये भाति तद् मृषा इति'' i.e. silver is produced by intellect after indeterminate knowledge (Sāmānya-jñāna) and intellect only is the cause. This creation which is seen between sense and object is false or illusory'' Further, Subodhinī on ''तेजोवारिमृदां यथा विनिमयः''[26] says, ''One sees water in the sunlight i.e. mirage or illusion of silver on a shell. Giving many such instances of illusion, it declares Buddhi (intellect) as the originator of illusions. These illusory objects are imagined by Buddhi of jīva. In the determinate knowledge Buddhi perceives real object of sense organs not the object imagined by Buddhi (intellect). But in between sense and its object, which appears as different object in the Buddhi (intellect) that is false or illusory. That kind of knowledge is error or false knowledge. Here B.K.'s explanation is very subtle and clear. In the shell-silver illusion, the shell is the object of indeterminate knowledge (Sāmānya jñāna ), when shell is seen first, the shell is object of indeterminate knowledge (Sāmānya jñāna) and silver is produced later by Buddhi(intellect). That knowledge created by Buddhi (intellect) is error.

B.K. has accepted two kinds of error, viz. Nirupādhika

bhrama (unconditioned error) and Sopādhika bhrama (conditioned error). Snake in a rope is example of Nirupādhika bhrama (unconditioned error)[27] "निरुपाधिके रज्जुभुजङ्गादिभ्रमे चक्षुषा सद्रूपैव रज्जुः गृह्यते, भुजङ्गस्तु बुद्धिकल्पितो बुद्ध्या विषयीक्रियते". Here, real rope is perceived by eyes and snake is imagined or created by Buddhi (intellect). It (snake) is object of Buddhi (intellect) and not of a sense organ, because, snake imagined by Buddhi does not exist. "बुद्धिकल्पितस्य भुजङ्गस्य बाह्यत्वाभावाद्"[28]. This kind of error is removed by the real knowledge of Adhiṣṭhāna (locus or आश्रय) of error.

"Pot moves" or "conch-shell is yellow" etc. are examples of Aupādhika bhrama (conditioned error). Here due to jaundice or vertigo etc. yellowness in conch-shell and movement in pot which is produced by Māyā are seen. "औपाधिके 'घटो भ्राम्यति' 'शङ्खः पीतः' इत्यादिभ्रमेतु चक्षुर्ग्राह्ये घटशङ्खादौ भ्रमरिकाकामलाद्युपाधिं पुरस्कृत्य भ्रमण - पीतत्वादिरूपो मायिको धर्मो विषयतारूपो मायया सृज्यते"[29]. These qualities are seen by sense-organ eye. These qualities are product of Māyā only. Buddhi (intellect) influenced by Māyā, thinking that, like real conch-shell and pot, yellowness and movement are also real, grasp such kind of conch-shell and moving pot. This is error. Here, conch-shell associated with yellowness or moving pot associated with movement, imagined by Buddhi (intellect) is illusory, not that which is in contact with sense organ eye. This kind of conditioned error is not removed by the knowledge of real conch-shell

or pot, i.e. knowledge of locus, but is removed by cure of disease.

"पराभिध्यानात्तु तिरोहितं ततो हि अस्य बन्धविपर्ययौ" (ब्र.सू.३।२।५) Aṇubhāṣya on this sutra says, due to concealment of true knowledge, Jīva identifies itself with body. As the patient of epilepsy sees everything wrongly or differently Jīva also gets wrong knowledge of every thing, "ज्ञानतिरोभावाद् देहादिषु 'अहं'बुद्धिः सर्वविपरीतज्ञानं च अपस्मारसहितस्येव"[30] i.e. on account of concealment of knowledge error takes place. P.C. also upholds this view. In Khyātivāda he says, birth, death, disease old age, suffering and ignorance appear in the case of individual souls and that is Anyakhyāti "जीवात्मनामपि जन्ममृत्युजरारोगादिकं दुःखित्वाज्ञत्वादिकं च प्रतिभाति सा इयं अन्यख्यातिः"[31].

Both, Anyakhyāti as well as Akhyāti are accepted by P.C. He says, those who are realized persons, for them everything is Pratyakṣa. Their knowledge is always true. In their case it is Akhyāti, i.e. wrong knowledge is not possible. Regarding ordinary people, Anyakhyāti has to be accepted. Because of predominance of impressions, Buddhi (intellect) only projects illusory object influenced by Māyā. Therefore, characteristics of silver only are grasped. "तस्माद् ये पूर्णज्ञानिनः पूर्णयोगिनो वा तेषां सर्वत्र सर्वप्रत्यक्षम् 'अनागतम् अतीतं च' (भाग.पुरा.१०।६१।२१) इत्यादिवाक्यात्. अतः तेषां ज्ञानस्य यथार्थत्वात् तत्र उक्ता अख्यातिः उचिता न सर्वत्र. अन्येषान्तु संस्कारप्राबल्येन मायया बुद्धिरेव बहिः क्षिप्यत

इति रजतादिधर्मणामेव प्रतिभानमिति अन्यख्यातिरेव उचिता''[32].

According to V.B., error is superimposition of form of knowledge of one object on another object, i.e. in the rope-snake example, misapprehension is superimposition of form of knowledge of snake on the rope. It is not an external object, which exists elsewhere, is superimposed. It is internal knowledge of object is superimposed. It is not necessary to go outside the mind to explain error. The appearance of silver on the shell is due to mental ideation. Modifications of mind (Cittavṛtti) are certainly of the nature of misapprehension or error, so they should be totally discarded.

P.C. and B.K. state that, error or misapprehension is due to Buddhivṛtti (modifications of mind). Instead of Cittavṛtti, they call it Buddhivṛtti. It is Buddhi influenced by Māyā projects silver on shell. It is superimposition of knowledge form only. Not of any external object. That means silver knowledge on the shell is due to projection of mental ideation only. In this respect there seems to be not much difference between V.B.'s view and Śuddhādvaitin's view.

The difference is that, while analyzing shell silver illusion, Śuddhādvaitins say that, silver is produced by the Buddhi, after indeterminate knowledge (सामान्यज्ञान)

in between the sense and the object. This in between creation is not real. Whereas V.B. does not bring this in between creation and states that it is direct superimposition of idea or knowledge form of silver, which is unreal or error.

------------

Notes :

1. योगश्चित्तवृत्तिनिरोधः । Yogasūtra, 1.5
2. "वृत्तयः पञ्चतय्यः" YS 1.5
3. YS 1.6
4. YS 1.1.8
5. YS Vyāsabhāṣya 1.8
6. Yogavārttika p.71
7. YV on 1.8.
8. ibid
9. ibid
10. ibid
11. ibid
12. Critical survey of Indian philosophy, C.D. Sharma, p.229.
13. Yogavārttika -p.
14. YV 1.8
15. YV 1.8
16. YV 1.8
17. Sāṇkhyapravacanabhāṣya- 5.56.
18. यथावा रजतं वणिग्वीथीस्थरूपेण सत् शुक्त्यध्यस्तरूपेण च असत्; तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादौ अध्यस्तरूपेण च असद् इति. ...एवमेव अवस्थाभेदेनापि सदसत्त्वम् अविरुद्धम्. यथाहि वृक्षादिः

प्ररूढाद्यवस्थाभिः सन्नपि अङ्कुराद्यवस्थाभिः असन् भवति, तथैव प्रकृत्यादिकं सदसदात्मकम् इति'' साङ्ख्यप्रवचनाष्य 5.56

19. Prameyaratnārṇava-khyātiviveka- p.84
20. Subodhinī 3.26 30
21. Prameyaratnārṇava, Khyātiviveka p.84
22. Prasthānaratnākara p.25.
23. Prameyaratnārṇava, Khyātivada P.83
24. ibid p.84
25. Bhāgavata 10.84.37 Subodhinī commentary
26. Bhāgavata 1.1.1. Subodhinī
27. Prameyaratnārṇava, Khyātiviveka p.87
28. ibid
29. ibid p.86.
30. Brahmasūtrāṇubhāṣyam 3.2.5
31. Khyātivada, p.14
32. -ibid- p.13

Bibliography:

1. Khyātivāda, Goswāmī Puruṣottama
2. Śrī Bālakṛṣṇa-granthāvalī; Pub. Shri Vallabhavidyapith Shri Vitthalesh Prabhucharana A.H. Trust, Kolhapur, V.S. 2054.
3. Prasthānaratnākara, Goswāmī Puruṣottama, Goswāmī Puruṣottama Granthamālā series 2, Shri Vallabhavidyapith-Shri Vitthalesh prabhucharana Trust, kolhapur, V.S. 2056.
4. Subodhinī commentary on Bhāgavata by Shri Vallabhācarya, Shri Vallabha Vidyapith Shri Vitthaleshprabhucharana Trust, Kolhapur, V.S.2043.
5. Yogavārtika of V.B., vol-1, Samādhipāda, ed.T.S. Rukmini,

Munshiram, Manoharlal Publishers put Ltd, New Delhi, 11981.

6. Sāṅkhyasūtram with Bhāṣya of Vijñānabhikṣu.- Dr. Shri RamashandaraBhattacharya, Bharatiya Vidya prakashan, Varanasi, V.S.2022.

7. The yogasūtras of Patañjalī, ed. Christopher chapple and Yogi Anand viraj (Eugene p. kellytr.) Studies in Indian Tradition series no.1, Sri satguru publications, Delhi 1990.

8. Śrimadbrahmaṣūtrāṇubhāṣyam Śri Vallabhācārya. Ed. Dr. A.D. Shastri, parshva publications Ahmedabad, 1998.

9. Critical survey of Indian philosophy, C.D. Sharma, Motilal Benarasidass, New Delhi. 1976.



# चर्चा

## Anyakhyāti
## in Comparison with
## Vijñānabhikṣu's View In Yogavārtika

**डॉ. श्रीमति सुनन्दा शास्त्री**

**के.ई.देवनाथन् :** अन्यख्यातिविषये मम संशयः. ''पराभिध्यानात्तु तिरोहितम्'' इति सूत्रव्याख्यानं कृतम् अस्ति. तत्र भवत्याः व्याख्याने ''*कन्सील्मेन्ट्र ऑफ् नॉलेज्*'' इति प्रयोगः कृतो अस्ति, ज्ञानस्य तिरोभावः इति अस्ति. मन्ये अहं, ''पराभिध्यानाद्'' इत्यत्र 'पर'शब्देन ब्रह्म स्वीकृतं स्यात्. सामान्यतः सः शब्दः भ्रामकइव भाति. अन्यख्यातिविषये विषयस्यैव तिरोभावो भवति, ज्ञानस्य तिरोभावो न भवति.

**सु.शे. शास्त्री :** भ्रमस्थले यः पदार्थो भवति सः ज्ञानसमसत्ताको भवति ...

**के.ई.देवनाथन् :** मयातु शब्दार्थः पृच्छ्यते. अन्यख्यातिवादे 'पर'शब्देन विवक्षितं ब्रह्म. तर्हि ''*कन्सील्मेन्ट्र ऑफ् नॉलेज्*'' इत्यपेक्षया ''*कन्सील्मेन्ट्र ऑफ् ब्रह्मन्*''

**सुनन्दा शास्त्री :** तत्र भाष्ये उक्तं विद्यते...

**के.ई.देवनाथन् :** मया पठितम्. ''ज्ञानतिरोभाव...''. इदानीं यज् ज्ञानम् अस्माभिः अनुभवरूपेण...

**बलिराम शुक्ल :** मृत्युरूपम्.

**के.ई.देवनाथन् :** 'मृत्युरूपम्'इति अद्वैतिभिः उच्यते. नैयायिकैस्तु ''जानामि'' 'ज्ञा'धातु ...

**सुनन्दा शास्त्री :** ज्ञानतिरोभावाद् अज्ञानम् अनुभूतम्.

बलिराम शुक्ल : तदपि मृत्युरूपमेव.

के.ई.देवनाथन् : 'ज्ञानतिरोभाव:' इत्यस्य को अर्थ: ? 'ज्ञानं'नाम ?

सुनन्दा शास्त्री : ब्रह्मणो ज्ञानम्.

सु.शे. शास्त्री : ज्ञानं वृत्यात्मकं वा स्वरूपात्मकं वा ?

के.ई.देवनाथन् : स्वरूपात्मकं किल.

सु.शे. शास्त्री : स्वरूपात्मकं चेज् ज्ञानस्य अभावो न भवितुम् अर्हति. अथच वृत्यात्मकस्य ज्ञानस्य अभावो भवति.

गो. श्या. म. : तत्र एवं विवक्षितम् अस्ति. ऐश्वर्य - वीर्य - यश - श्री - ज्ञान - वैराग्यान्तर्गतं यज्ज्ञानं **''षण्णां 'भग' इतीरणा''**इति वाक्योक्तम्. तथाच भगवद्धर्मरूपं यज् ज्ञानं तस्य तिरोभाव:. नतु ज्ञानसामान्यस्य चैतन्यस्वरूपस्य वा.

सु.शे. शास्त्री : भगवद्धर्मस्यापि नित्यत्वमेव.

गो. श्या. म. : परस्य ब्रह्मण: सङ्कल्पाद् वा अभिध्यानाद् जीवे तिरोहितो भवति. तत्र द्वेधापि अर्थो विवृतो अस्ति. परस्य मायाया: प्रकृते: अभिध्यानाद् जीवस्य ब्रह्मधर्मतिरोभाव:. **''एकोऽहं बहुस्याम्''** इति परस्य ब्रह्मण: सङ्कल्पाद् जीवे ब्रह्मधर्माणां तिरोभाव: इति, उभयथापि अर्थो अङ्गीकृतो अस्ति.

सु.शे. शास्त्री : 'तिरोभाव:' इत्यस्य को अर्थ: ? केनचिद् आच्छादनं कृतम् ?

गो. श्या. म. : **''आविर्भावतिरोभावौ शक्ती वै मुरवैरिण:''** शास्त्रवचनात्. **यम् अर्थम् भगवान् आविर्भावयितुम् इच्छति...**

सु.शे. शास्त्री : शक्त्या तस्य आवरणं जायते ?

सुनन्दा शास्त्री : अदर्शनं जायते.

के.ई.देवनाथन् : तदेव आवरणम्.

सु.शे. शास्त्री : आवरणमेव आयाति. यस्य आवरणं भवति तस्य दर्शनं न जायते...

गो. श्या. म. : अर्थक्रियाकारिक्षमत्वम् आविर्भाव: अर्थक्रियाया: अकारित्वम् तिरोभाव:.

सु.शे. शास्त्री : तस्य धर्मस्य अर्थक्रियायां तादृशं सामर्थ्यं नास्ति.

**गो. श्या. म. :** सामर्थ्यम् अस्ति, प्राकट्यं नास्ति.

**सु.शे. शास्त्री :** एतेषाम् अभिनवः पन्थाः. यद्धि दोषो अन्यत्र आयाति तद् एतेषां सिद्धान्ते न आयाति.

**गो. श्या. म. :** ''**यच्चापि दूषणं किञ्चिद् दूष्यञ्चापि हरिः स्वयं विरुद्धपक्षाः सर्वेऽपि सर्वम् अत्रैव शोभते**'' इत्यत्र महाप्रभुश्रीवल्लभाचार्यैः लिखितम् अस्ति यत् 'अत्रैव'नाम ब्रह्मणि, नतु मायायाम्. वयम् अघटितघटनापटीयसीं मायां न अभ्युपगच्छामः किन्तु ब्रह्मैव तादृग्...

**बलिराम शुक्ल :** अन्यख्यातिवादिनां मते व्यामोहिकामायया बहिःक्षिप्ता बुद्धिवृत्तिः रजताकारेण भासते. अत्र तावद् आभ्यन्तरचित्तवृत्तिः रजताकारेण भासते इति. उभयोः को भेदः ?

**पारसनाथ द्विवेदी :** अत्र मायिकत्वम् अस्ति. तत्र नास्ति इति भेदः.

**सुनन्दा शास्त्री :** अन्यख्यातिमें प्रथम क्षणमें चक्षु और अर्थ के संयोगसे पदार्थका सामान्यज्ञान होता है. और उसके बीचमें अर्थात् बुद्धि और पदार्थ के बीचमें एक मायिकता उत्पन्न हो जाती है. अतः बुद्धिस्थ रजतका आरोपण इन्द्रिय और वस्तु के बीचमें हो जाता है. इसको विषयता कहा जाता है.

**पारसनाथ द्विवेदी :** बुद्धिस्थं नास्ति. बुद्धिकल्पितम् अस्ति.

**के.ई.देवनाथन् :** दर्शनानि विभिन्नानि सन्ति. परन्तु सूक्ष्मेक्षिकया दृश्यते चेत् केषुचिद् अंशेषु साम्यं वर्ततएव. नैयायिकैः आपणस्थं रजतं स्मृतिद्वारा आनीयते, एतेतु ''बुद्धिस्थं रजतम्'' इति वदन्ति. सर्वेष्वपि पक्षेषु बुद्धेः सहकारः स्वीक्रियते. प्रातिभासिकं रजतम् इति पक्षे, बौद्धं रजतम् इति पक्षे, ज्ञानलक्षणासन्निकर्षेण आनीयमानं रजतम् इति सर्वेऽपि पक्षेषु बुद्धेः सहकारः स्वीक्रियते.

**बलिराम शुक्ल :** तथैव रजतं यद् भासते तद् व्यावहारिकं नास्ति इत्यपि सर्वेषां मतम्. कथं तद् रजतमिव भाति ? अयमेव मुख्यः

प्रश्नः. तस्य समाधानं तैस्तैः शास्त्रकारैः स्वशास्त्रानुरोधेन कृतं वर्तते. तेषु मध्ये किं समीचीनतरम् इति अस्माभिः विचार्यते.

**राजेन्द्र मिश्र :** आचार्यजी! हमारी एक शङ्का है. ख्यातिवादका मुख्य लक्ष्य है : भ्रान्तिका निरसन करके शुद्ध ज्ञानकी स्थापना करना. कोई ऐसा दर्शन नहीं है कि जो दो प्रकारके ज्ञाताओंकी कल्पना न करता हो. जैसे कि अभी चर्चा हुई कि जो पूर्ण ज्ञानी है उनकेलिये तो सब कुछ प्रत्यक्ष है. उनको तो अख्यातिका प्रश्न ही नहीं उठता है. तो जो पूर्णज्ञानि हैं वे केवल शुद्धाद्वैतमें ही नहीं हैं, सांख्यमतमें भी हैं, हर एक दर्शनमें हैं. तो क्या यह माना जाय कि प्रत्येकदर्शन पहले अख्यातिवादी है उसके बाद फिर अन्यान्यख्यातिवादकी स्थापना करता है?

**गो. श्या. म. :** दो बातें लक्ष्यमें लेने लायक होती हैं : जहां भ्रम हो रहा है और जिस वस्तुका भ्रम हो रहा है. जहां भ्रम हो रहा है वह यदि निरुपाधिक भ्रमका अधिष्ठान है तो अधिष्ठानका अज्ञान अपेक्षित है. और यदि सोपाधिक भ्रम हो रहा है तो अधिष्ठानका अज्ञान अपेक्षित नहीं रह जाता है. अधिष्ठानका तत्त्वज्ञान होनेपर भी औपाधिक भ्रम तो हो ही सकता है. तो जहां अधिष्ठानके तत्त्वज्ञानसे भ्रान्ति निवृत्त होती है वहां तो अज्ञानका बहुत बड़ा योगदान है. पर जहां ऐसा नहीं होता है वहां अधिष्ठानके तत्त्वज्ञानका योगदान न हो कर आरोप्यमाण वस्तुकी बौद्ध उपस्थिति अथवा अधिष्ठानके अन्यथाज्ञानका बड़ा योगदान होता है. अब आरोप्यमाण वस्तुका अन्यथाज्ञान नैयायिकोंका मत है. अधिष्ठानका अन्यथाज्ञान भी अन्यथाख्यातिका एक प्रकार हो सकता है. इस तरहसे दो प्रभेद समझने चाहिये. यह साधिष्ठानक

भ्रमकी चर्चा है. कुछ भ्रम निरधिष्ठानक भी होते हैं.

**किशोरनाथ झा :** राजेन्द्रजीका प्रश्न यह था...

**गो. श्या. म. :** उसी सन्दर्भमें जो लक्ष्यमें रखने लायक प्रभेद हैं उसे ही ध्यानमें रख कर बोल रहा हूं, कि जो पूर्णज्ञानी हैं और जो हम सब हैं उनको... जैसे न्याय भी योगजधर्मप्रत्यासत्ति तो मानता ही है. और सर्वज्ञ तो प्रायः जैन, बौद्ध आदि सभी मानते ही हैं, किसी न किसी रूपमें. तो योगिओंको अख्याति नहीं होती है. योगिओंके ज्ञानके सन्दर्भमें हम जैसोंको होते भ्रमकी विवेचना कैसे करनी? यहां अख्यातिका आधार लिया जाता है. जो सामान्य मनुष्य, हम जैसे हैं, जिनको पूर्णज्ञान नहीं है, पूर्ण ज्ञान नहीं होनेसे क्या होता है? यहां आकर शुद्धाद्वैत आ रहा है कि जिनको पूर्णज्ञान नहीं है उनको वस्तुकी इतरेतरात्मकताका या ब्रह्मात्मकताका ज्ञान नहीं होगा. तो उनके सन्दर्भमें यदि भ्रमकी व्याख्या करनी होतो अन्यख्यातिद्वारा करनी चाहिये. और योगिओं, सर्वज्ञों, ब्रह्मज्ञानिओं को जिस तरहसे ज्ञान होता है : "**सर्वं खल्विदं ब्रह्म**". ऐसोंको सब कुछ ब्रह्मात्मक ही अनुभूत होता है, उस स्थितिमें उनके ज्ञानको लक्ष्यमें रख कर कोई व्याख्या करनी हो तो फिर अन्यख्यातिके ढंगसे व्याख्या न हो कर अख्यातिके ढंगसे व्याख्या करनी होगी. रामानुज मतमें जो सत्ख्याति स्वीकारी गयी है वह हमें भी इस अर्थमें स्वीकार्य है कि वह योगिओंको होते अनुभवकी दुहाई है.

**बलिराम शुक्ल :** पर सामान्यजनको जो भ्रम होता है वह सत्ख्याति है क्या? रामानुज तो वहां भी 'सत्ख्याति' कहते हैं.

**गो. श्या. म. :** नहीं. उतने ही अंशमें हमारा उनसे मतभेद है. मैनें मेरे

पत्रमें इस बातकी विवेचना करते हुवे लिखा है कि **"नासतो विद्यते भावो नाभावो विद्यते सतः"** गीतोक्त वचनके अनुरोधवश भ्रमभात विषयोंका भी अभाव तो हमको अभिप्रेत नहीं है. अतः सत् तो वह है ही और भगवदिच्छया सत्में प्रकट होता नाम-रूपका वैविध्य भी उतना ही सत् है जितना सत् ब्रह्म स्वयं है. इसलिये उस वैविध्यको लक्ष्यमें रखनेपर अन्यख्यातिके रूपमें हम भ्रमकी व्याख्या करते हैं.

**सु.शे. शास्त्री :** दर्शनान्तरमें योगीके ज्ञानको लेकर भ्रमका निरूपण नहीं है. आपके वाल्लभ दर्शनमें यह कहा गया है कि जैसा योगिओंको ज्ञान होता है वैसा सामान्यजनको ज्ञान नहीं होता होनेसे उनके सन्दर्भमें अख्याति है. अन्य दर्शनोंके ग्रन्थोंमें इस प्रकारकी कहीं चर्चा ही नहीं की गई है. क्योंकि भ्रान्ति केवल हमारे जैसोंको ही होती है.

**बलिराम शुक्ल :** हम जब विचार करते हैं तब संवादीप्रवृत्तिजनक ज्ञान और असंवादीप्रवृत्तिजनक ज्ञान को लेकर ही विचार होता है. वहां तो यह प्रश्न ही उपस्थित नहीं होता है. फिर अख्यातिके रूपमें उसकी व्याख्या करनेकी आवश्यकता ही क्या है?

**गो. श्या. म. :** आवश्यकता यह है शुक्लजी!....

**के.ई.देवनाथन् :** समाधानं वदामि. नैयायिकमतमें मीमांसकमतमें सर्वज्ञ नहीं है. ईश्वरव्यतिरिक्तः सर्वज्ञो नैयायिकमते नास्ति. मीमांसकमते कोऽपि सर्वज्ञो नास्ति.

**बलिराम शुक्ल :** योगी तो मानते ही हैं!

**के.ई.देवनाथन् :** योगजधर्मः स्वीक्रियते नैयायिकैः परन्तु "योगिनः सर्वज्ञः" इतितु न स्वीकृतम्.

**बलिराम शुक्ल :** क्या बात करते हो! योगिप्रत्यक्षं प्रति... अतीतानागत...विष-

याणां युक्तस्य सर्वदा भानं…'' इति मुक्तावल्यां लिखितम् अस्ति.

**के.ई.देवनाथन् :** न्यायकुसुमाञ्जलौ द्वितीस्तबके…

**बलिराम शुक्ल :** न्यायमुक्तावल्यां यद् उक्तं तन् मया उच्यते…

**सु.शे. शास्त्री :** ईश्वरस्य निरपेक्षसर्वज्ञत्वं योगिनः सापेक्षसर्वज्ञत्वम्.

**के.ई.देवनाथन् :** सर्वज्ञत्वे सति सापेक्षत्वं निरपेक्षत्वं न. कृपया श्रूयताम्. प्रसङ्गम् अहं वदामि. तदनन्तरं भवन्तः स्वीकुर्वन्तु न स्वीकुर्वन्तु वा. नैयायिकमतं वदामि. सर्वज्ञः ईश्वरः वेदकर्ता इति स्वीक्रियते. कपिलादीनां वेदकर्तृत्वं कुतो नास्ति? इति प्रश्ने कृते ''**सन्ति कपिलादयो महाजनाः; तथापि तेषामपि सार्वज्ञ्ये विश्वासः इतरेषां नास्ति**'' इति तत्र समाहितम् अस्ति. इदानीं योगजधर्मेण अतीतानागत… तैः ज्ञायन्तां परन्तु तदेव सर्वज्ञत्वं नास्ति. 'सर्वज्ञत्वं'=''सर्वदा सर्वविषयकम् एकज्ञानवत्त्वम्''. योगिनः कीदृशाः भवन्ति? ते कांश्चिद् अंशान् अतीतानागतपदार्थान् इन्द्रियेण जानन्ति, योगजप्रत्यासत्या. तैः ये अतीताः अनागताः वा अंशाः ज्ञायन्ते तेतु तथैव भवन्ति. तत्र तेषां भ्रमो नास्ति इत्येव तात्पर्यम्. मीमांसकमते वदामि. भाट्टमीमांसकमते बुद्धस्य सर्वज्ञत्वं तैः खण्डितम् अस्ति.

**बलिराम शुक्ल :** तद् भवतु. कपिलादीनां सर्वज्ञत्वम् ईश्वरवादविषये चिन्तामण्यां वर्तते. कपिलादीनां सर्वज्ञत्वेऽपि अनेके कपिलादयः सर्वज्ञाः तदपेक्षया ईश्वरस्य सर्वज्ञत्वे लाघवं वर्ततइति कृत्वा लाघवात्…

**के.ई.देवनाथन् :** कपिलो यदि सर्वज्ञः तर्हि मनुः सर्वज्ञो न वा? इति प्रश्नोऽपि भवति किल.

**बलिराम शुक्ल :** भवतु नाम. तेन किम्?

**के.ई.देवनाथन् :** वेदान्ते ''स्मृत्यनवकाशदोषप्रसङ्ग इति चेन् नान्यस्मृत्यनवकाशदोषप्रसङ्गाद्'', ''इतरेषां चानुपलब्धेः'' इति सूत्रद्वये तथैव

निर्णीतम् अस्ति.

**बलिराम शुक्ल :** कपिलादयो यदि सर्वज्ञाः तत्र अस्माकं का हानिः ? भवतु नाम. सर्वेषां तादृशं ज्ञानं भवति. सर्वज्ञत्वं तत्र वर्तते.

**के.ई.देवनाथन् :** ते असर्वज्ञाः चेदपि अस्माकं हानिः नास्ति. ते अस्मदपेक्षया विशिष्टाः अतः...

**बलिराम शुक्ल :** सर्वविषयकज्ञानवत्त्वमेव सर्वज्ञत्वम्.

**सु.शे. शास्त्री :** मम निवेदनम् इदं वर्तते. यद्धि भवद्भिः परिष्कारः क्रियते योगिनाम् ईदृशं ज्ञानं भवति, ईश्वरस्य सर्वविषयकम् एकं ज्ञानम् भवति. एतदेव अस्माभिः आपेक्षिकसर्वज्ञत्वं निरपेक्षसर्वज्ञत्वं...

**बलिराम शुक्ल :** उच्यते. योगजधर्मानुगृहीतं सर्वज्ञत्वम्.

**के.ई.देवनाथन् :** योगजधर्मानुगृहीतं सर्वविषयकं ज्ञानं तेषां नास्ति.

**पारसनाथ द्विवेदी :** कुतो नास्ति.

**बलिराम शुक्ल :** योगदर्शनेतु सर्वं प्रतिपादितम्...

**के.ई.देवनाथन् :** तर्हि कपिलस्मृतेः योगस्मृतेः कथं विरोधो भवति ?

**बलिराम शुक्ल :** कपिलस्य सार्वज्ञत्वम् अस्ति न वा इति विचारो अन्यः.

**सु.शे. शास्त्री :** तत्र श्रुत्यनुसारित्वं श्रुत्यननुसारित्वम् आदाय विरोधः.

**किशोरनाथ झा :** अब समयाभावको लक्ष्यमें लेते हुवे दूसरा पत्र लें.

**गो. श्या. म. :** अध्यक्षमहोदय ! मुख्य प्रश्नका स्पष्टीकरण बाकी रह गया है. अनुमति हो तो स्पष्टीकरण करना चाहता हूं. कुछ भ्रम अज्ञानजन्य होते हैं कुछ अन्यथाज्ञानजन्य होते हैं और कुछ भ्रम अज्ञान और अन्यथाज्ञान दोनोंसे जन्य होते हैं. तो जहां अज्ञानजन्य भ्रम होता है वहां अख्याति अभिलषित है जहां अन्यथाज्ञानजन्य भ्रम होता है वहां सोपाधिकभ्रम ...

**पारसनाथ द्विवेदी :** अन्यथाज्ञानम् उच्यते.

**गो. श्या. म. :** कहीं दोनों सम्मिलित होकर कारण बनते हैं.

**बलिराम शुक्ल :** वह भी सामान्य लोगोंका ही है.

**गो. श्या. म. :** सामान्योंका ही है मगर कहीं केवल अज्ञानसे भी भ्रम पैदा होता ही है न! जैसे हमको ब्रह्मका ज्ञान नहीं होता है एतावता ब्रह्मका अभाव भी प्रतीत होता है, जगत्‌की ब्रह्मात्मकता प्रतीत नहीं होती है. तो ब्रह्मात्मक वस्तुओंकी ब्रह्मात्मकताका प्रतीत नहीं होनी भी तो एक भ्रम ही है. तो उस अर्थमें वह अख्याति भी हमको भ्रमकेरूपमें मान्य है.

**पारसनाथ द्विवेदी :** अन्यख्यातिमें भासमान रजत् सत् है, असत् है या सदसत् है?

**गो. श्या. म. :** असत् तो कुछ है ही नहीं **"नासतो विद्यते भावो नाभावो विद्यते सतः"**.

**पारसनाथ द्विवेदी :** बाधित नहीं होगा?

**गो. श्या. म. :** बाधकी तो हमारे यहां कोई चर्चा ही नहीं है.

**बलिराम शुक्ल :** ब्रह्मात्मना सर्वं सत्यम्.

**सु.शे. शास्त्री :** मिथ्यात्वं नैव अङ्गीक्रियते.

**पारसनाथ द्विवेदी :** मायिक रजत जो बौद्धिक है उसको तो 'मिथ्या' कहा गया है न!

**गो. श्या. म. :** मिथ्या जैसी चतुर्थ कोटि हमको मान्य नहीं है.

**पारसनाथ द्विवेदी :** 'मिथ्या'शब्द तो लिखा ही है.

**गो. श्या. म. :** 'मिथ्या'शब्दका अर्थ सदसदनिर्वनीय मिथ्या नहीं है.

**पारसनाथ द्विवेदी :** वही तो पूछा जा रहा है.

**गो. श्या. म. :** 'मिथ्या'का मतलब उस देशकालमें अप्रकट - तिरोहित.



**वाद् देहादिषु अहम्बुद्धिः, सर्वविपरीतज्ञानञ्च अपस्मारसहितस्येव''** (ब्र.सू.भा.३।२।१।५). इदं विपरीतज्ञानं न अन्यथाख्यातिः अपितु अन्यख्यातिः इति. यथाच उक्तं पुरुषोत्तमगोस्वामिमहाभागेन ''**पूर्वोत्पन्नस्य अनुभवस्य संस्कारात्मना स्थितस्य उद्बोधकैः प्राबल्ये मायिकार्थाकारवती बुद्धिवृत्तिः मायया बहिः क्षिप्यते तदा सा पुरोवर्तिनं सर्वतो अंशतो वा आवृत्य बहिः अवभासते इति मायिकस्य अन्यस्यैव ख्यानाद् 'अन्यख्यातिः' इति व्यवह्रियते**''(प्रस्था.रत्ना.पृ.२५ - २६). तेन मायिकस्यैव 'इदम्'अंशस्य भानेन पारमार्थिकस्य अप्रमेयत्वात् सर्वोऽपि विषयो मायया रूपान्तरं नीयते तेन प्रमेयो अन्यइव भासते. फलतो भ्रमः खलु अन्यख्यातिरेव.

अत्र बहवाः प्रश्नाः प्रादुर्भवन्ति :

(१)का सा माया यया बुद्धिवृत्तिः क्षिप्ता भवति ?

(२)सा ईश्वराद् भिन्ना अभिन्ना वा ?

(३)सा केन प्रमाणेन सिद्धयति ?

(४)बुद्धिवृत्त्याक्षेपः केन प्रमाणेन सिद्धयति ?

इत्यादयः.

(१-२)''**ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः**'' इति महाप्रभुवचनाद् ईश्वरेच्छैव माया इति प्रतीयते. ईश्वरेच्छायाः कार्यमात्रं प्रति कारणत्वाद् भ्रमस्थलेऽपि ईश्वरेच्छायाः साधारणकारणत्वाद् भ्रमप्रमयोः को विशेषः ? ईश्वरेच्छाभिन्नायाः व्यामोहिकायाः मायायाः मानाभावात्.

(३-४)यच्च उक्तम् ''**मायिकार्थाकारवती बुद्धिवृत्तिः मायया बहिः क्षिप्यते. अतो बुद्धिवृत्तिरेव रजताकारेण भासते**'' तदपि न समीचीनं, बुद्धिवृत्तौ मानाभावात् ''**बुद्धिं विशन्त्येव**'' ( इति वचनात्. बुद्धिश्च आत्मनो विशेषगुणो न तत्र वृत्तिरूपः कश्चन धर्मः पदार्थान्तर्गतः. बुद्धिवृत्तिः न गुणो, गुणे गुणानङ्गीकारात्. अतएव न कर्म, गुणे कर्माभावात्. नापिच द्रव्यं गुणे द्रव्याभावात्. नापि सामान्यादिरूपः सामान्यादीनां

बहि:क्षिप्तत्वासम्भवात्.

अत्र श्रीपुरुषोत्तमचरणा:

**''किम् इदम् 'अन्यथात्वं' नाम आरम्भो विपरिणाम: तादात्म्यविशेषो वा? सोऽपि विशिष्टस्य वा, विशेषणस्य वा विशेषस्य वा इति.''**( ख्यातिवादे ).

नैयायिकाः हि भ्रमस्थले न रजतस्य आरम्भो नापि परिणाम: नापि च तादात्म्यं स्वीकुर्वन्ति. तेषां मते शुक्तिशकलमेव चाकचिक्यादिदोषवशाद् रजताकारेण भासते. शुक्तिशकले रजतस्य उत्पत्ति: परिणामो वा नास्ति. नापिच तत्र तादात्म्यविशेष:. केवलं ज्ञाने रजतत्वं प्रकारतया भासते. अतएव अन्यस्य अन्यप्रकारेण भासमानत्वमेव अन्यथाख्यातित्वम्. अन्यस्य पदार्थस्य आभासस्वीकारेतु अन्यख्याति: स्यात् नतु अन्यथाख्याति: स्यात्. अतएव उक्तं **''यत्र यन् नास्ति तत्र तस्य ज्ञानम्''**. समुदायार्थश्च : **''तदभाववन्निरूपित-तन्निष्ठविषयता-प्रतियोगिज्ञानम्''**.

भ्रमश्च दोषाज् जायते. तथाच उक्तं विश्वनाथेन **''दोषोऽप्रमाया: जनक: प्रमायास्तु गुणो भवेत्''**( कारि.१३१ ).

नव्यन्यायस्य परिष्कारपद्धत्या भ्रमलक्षणन्तुं : **''स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत्-त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम्''** ( गादा.अनु.खं.अवय.प्रक.पृ.१५५७ ). अत्र 'स्व'पदेन विशेष्यविशेषणयो: भासमान: सम्बन्धो ज्ञेय:.

**''यत्प्रकारिका या विषयता तत्प्रकारव्यधिकरणविषयताकं ज्ञानम्''**( तत्त्वचि.प्रत्य.खं.प्रमालक्ष.पृ.४५५ ) इति केचित्. अत्र प्रकारो रजतत्वादिरूपो धर्म:, तद्धर्माधिकरणावृत्तिविषयताकं ज्ञानम्. अत्र तत्प्रकारानधिकरणत्वं तत्प्रकारानधिकरणवृत्तित्वम्. अत्र गदाधरः **''स्वाधिकरणप्रकारावच्छिन्नविषय-**

ताप्रतियोगिज्ञानं स्वव्यधिकरणे... स्वाश्रयावृत्तिधर्मप्रकारकेत्यर्थः. तेन किञ्चिदंशे प्रमात्वेऽपि न दोषः'' (?*) '' 'इदं रजतम्' इति ज्ञाने विषयताद्वये व्यधिकरणप्रकारावच्छिन्नत्वस्य विषयत्वप्रतियोगित्वस्य अविरोधात् समूहावलम्बने च विषयताभेदात् न अप्रमालक्षणे अव्याप्त्यतिव्याप्ती'' (?**).

एवंरीत्या स्पष्टं भवति यद् 'अन्यथात्वं' नाम न विषयस्य अन्यथात्वम् अपितु ज्ञानस्य व्यधिकरणप्रकारकत्वम्. यथाच उक्तं न्यायशिखामणौ ''अन्यथात्वञ्च व्यधिकरणप्रकारकत्वरूपम्''(न्या.शि.म.प्र.खं.अन्यथा.पृ.४-६४).

अत्र श्रीपुरुषोत्तमचरणाः —

''ननु मास्तु विषयस्य अन्यथात्वं तथापि रजताकारग्रस्तज्ञानं शुक्तिम् आलम्बते इति आकारके ज्ञानस्य अन्यथात्वपक्षे किं बाधकम्? इति चेत्, न, तादृशज्ञानस्य शुक्त्यालम्बकत्वात् तत्र शुक्त्या स्वाकारसमर्पणे 'रजतम् अहम् अनुभवामि' इति अनुव्यवसायो न स्यात्. 'शुक्तिं रजतत्वेन जानामि' इति च स्यात्. असमर्पणेतु शुक्त्यालम्बनएव प्रमाणविरहो विरुद्धानुव्यवसायाद्.''

(ख्यातिवादे).

अत्र नैयायिकाः. अत्र 'आलम्बन'शब्दस्य को अर्थः? आलम्बनम् इत्यस्य विषयः इति अर्थः. विशिष्टबुद्धिः सर्वदा विशेषणविशेष्यसम्बन्धविषया

---

*बह्वन्वषणेऽपि एतस्य वाक्यस्य मूलसन्दर्भो नोपलभ्यते(सम्पा.).

**तत्त्वचिन्तामणौतु किञ्चित्पाठभेदेन एतद्वाक्यम् एवम् उपलभ्यते : '' 'इदं रजतम्' इति भ्रमे च विषयताद्वये व्यधिकरणप्रकारावच्छिन्नत्वतदनवच्छिन्नत्वयोः विषयत्वप्रतियोगित्वतदप्रतियोगित्वयोः अविरोधात् समूहालम्बने च विषयताभेदाद् न प्रमाऽप्रमा-लक्षणे अव्याप्त्यतिव्याप्ती'' (तत्त्वचि.प्रामा.लक्ष.सिद्धा.)(सम्पा.).

भवति. शुक्तौ ''इदं रजतम्'' इति ज्ञाने विशेष्यः शुक्तिः विशेषणं रजतत्वम्. विशेष्ये विशेष्यतारूपः कश्चन अतिरिक्तः पदार्थः. तथैव विशेषणे विशेषणताप्रकारतारूपः कश्चन पदार्थः तज्ज्ञानस्य शुक्तिविषयकत्वेऽपि रजतत्वस्य तत्र व्यधिकरणप्रकाररूपत्वात् प्रकाररूपालम्बनत्वं तत्रापि अस्त्येव सन्मात्रविषयत्वेऽपि तदभाववति तत्प्रकारकत्वं प्रकारव्यधिकरणविषयताकत्वम् अयथार्थत्वम्. शुक्तेः विशेष्यतया आलम्बनत्वेऽपि रजतत्वस्य प्रकारतया आलम्बनत्वे न किञ्चिद् बाधकम्. अतएव ''रजतम् अहम् अनुभवामि'' इति अनुव्यवसाये न किमपि बाधकम्.

नच असद्विषयत्वं, तल्लक्षणासम्भवात्. यथाच उक्तं गङ्गेशोपाध्यायेन **''नच एवम् असत्ख्यातिः, सदुपरक्तस्य अत्यन्तासतः ख्यात्यभ्युपगमात्. सदनुपरक्तस्य अखण्डस्य अत्यन्तासतः ख्यातिः असत्ख्यातिः न अभ्युपेयते, कारणाभावात्. तदनुपपत्तिः तुल्यैव इति चेद् न, अत्र विशिष्टज्ञानसामग्र्याः दर्शितत्वात्.''** ( तत्त्वचि.प्रत्य.खं.अन्यथा.पृ.५६३ ) नच विशेष्यतासमानाधिकरणधर्मएव प्रकारः इतितु न वाच्यं, मानाभावात्''

अत्र पुनः श्रीपुरुषोत्तमगोस्वामिनः **''अथ रजतज्ञानं स्वप्रयुक्तव्यवहारविषयां शुक्तिं करोति इदमेव आलम्बकत्वम्''** ( ख्यातिवादे ) तदपि न समीचीनम्, आलम्बकत्वस्य उक्तत्वात्. अतः इदं समीचीनतया प्रतिभाति यत् शुक्तौ ''इदं रजतम्'' इति ज्ञाने असद्रूपस्य, अनिर्विचनीयस्य, सद्रूपस्य, सदसद्रूपस्य, मायया बहिक्षिप्तस्य; वा, रजतस्य पारमार्थिकरजतभिन्नस्य स्वीकारो अनावश्यकः. ज्ञानलक्षणया पूर्वानुभूतस्यैव व्यावहारिकरजतस्य भानस्वीकारे न कोऽपि दोषः. अतिरिक्तपदार्थस्य ( रजताकारप्रदायकस्य ) कल्पनापेक्षया पारमार्थिकरजतकल्पनमेव समीचीनम्.

<u>सर्वेषामपि ख्यातिवादानाम् अन्यथाख्यातिवादे पर्यवसानम् इति उपसंहारः</u>

मम मतेन सर्वेषामपि मते व्यावहारिकरजतभिन्नमेव किञ्चिद् अवभासते. अतः पारमार्थिकरजतत्वाभाववति रजतत्वप्रकारकमेव इदं ज्ञानम् अतो

अन्यथाख्यातिरेव.

वाल्लभानां मते व्यामोहिकया मायया बहिः क्षिप्ता बुद्धिवृत्तिः रजताकारवती तत्र भासते सा वृत्तिः रजतत्वेन भासते वा वृत्तित्वेन भासते? रजतत्वेन भासते चेद्, अन्यथाख्यातिरेव, रजतत्वाभाववति वृत्तौ रजतत्वप्रकारत्वात्. रजतत्वेन भासमानेतु स्वव्यधिकरणप्रकारावच्छिन्नविषयता-कत्वम् आगतमेव. वृत्तित्वेन भासमाने तु ''अहं रजताकारां वृत्तिम् अनुभवामि'' इति अनुव्यवसायः स्यात्, न ''रजतम् अनुभवामि'' इति.

अख्यातिवादं विहाय सर्वेषामेव मते रजतत्वेन सत्यव्यावहारिक-रजतभिन्नस्य कस्यचिद् वस्तुनः भानं भवति. शङ्करोत्तरवर्तिनाम् अद्वैतिनां मते रजतत्वेन व्यावहारिकसत्यरजतभिन्नस्य सदसद्भ्यां भिन्नस्य विलक्षणस्य रजतस्य भानं भवति. तत्रापि सत्यरजतत्वाभाववति विलक्षणरजतत्वस्य भानं भवति. मम मतेन भगवता शङ्कराचार्येण अन्यथाख्यातिरेव स्वीकृता दृश्यते. यथाच उक्तं भगवत्पादेन ''**अविद्यामात्रव्यवधानापगमात् शुक्तिकायाइव रजताभासायाः शुक्तिकात्वम् इति अवोचामः**''( बृहउप.भाष्य.१।४।१० ).

विशिष्टाद्वैतिनः तत्र सद्रूपं रजतं स्वीकुर्वन्ति तदपि व्यावहारिकरजतभिन्न विजातीयमेव. तत्र व्यावहारिकरजतवृत्तिरजतत्वजातिः नास्ति. अतः तदपि ज्ञानं व्यावहारिकरजतत्वजात्यभाववति रजतत्वप्रकारकमेव.

तथैव वाल्लभानां मते व्यावहारिकसत्यरजतभिन्नस्य मायया बहिक्षिप्तस्य वृत्तिरूपस्य रजतस्य भवति तत्रापि सत्यरजतत्वाभाववति वृत्तौ व्यावहारिकरजतत्वस्य भावं भवति. अतो अन्यस्य अन्यरूपेण भासमानत्वरूपम् अन्यथाख्यातित्वम् अस्त्येव.

नैयायिकास्तु शुक्तिशकलस्यैव रजतत्वप्रकारेण भानं स्वीकुर्वन्ति इतितु स्पष्टं, सर्वेषामपि सत्यं रजतं तत्र नास्ति. अतः कथं तस्य भानम्

इत्येव प्रश्नः ? तस्य प्रश्नस्य समाधानार्थं तैस्तैः शास्त्रकारैः विभिन्नाः पदार्थाः कल्पिताः सन्ति. तद् ज्ञानं शुक्तेः भवतु, विलक्षणरजतस्य भवतु वा बुद्धिवृत्तेः भवतु, सत्यरजतत्वाभाववति रजतत्वप्रकारकम् अस्ति. अतः सर्वेऽपि, अख्यातिवादिनं प्रभाकरं विहाय, अन्यथाख्यातिवादिनएव. सर्वेषामपि मते यत्र यन्नास्ति तत्र तस्य ज्ञानं भवति. अर्थात् तदभाववन्निरूपिततन्निष्ठविषयताप्रतियोगिज्ञानं तत्र अस्ति. स्वाधिकरणवृत्तिप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानत्वमेव अन्यथाख्यातित्वम्. व्यवहारानुभवसिद्धपदार्थापेक्षया वृत्यादिरूपपदार्थकल्पने गौरवात् मानाभावात् च[२]. ज्ञानरूपसम्बन्धेन शुक्तौ रजतत्वभानस्वीकारे न किमपि बाधकम् इति कृतं पल्लवितेन.

----------

टिप्पणी

१.**माया :** [१]दोषः (परवञ्चनेच्छा), यथा "**मायावादतमोव्याप्तं जगद्**"इत्यादौ, "**त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते**" इत्यादौ च माया. [२]भगवदिच्छा, यथा "**यन्माययातो बुध आभजेत् तम्**" **इत्यादौ. यथावा "मम माया दुरत्यया"** इत्यादौ. तद् उक्तं "**मायेत्युक्ता प्रकृष्टे हि मायाभिधा**" इति माध्वमतानुयायिनः प्राहुः. [३]भगवच्छक्तिविशेषः इति वल्लभीयाः मन्यन्ते. [४]'माया'शब्दो विचित्रार्थसर्गकरत्रिगुणात्मकप्रकृत्यभिधायको न अनिर्वचनीयाज्ञानवचनः इति रामानुजाः. [५]मायावादिवेदान्तिनस्तु मिथ्याबुद्धिहेतुभूतम् अज्ञानं माया इति वदन्ति. तच्च अज्ञानम् ईश्वरोपाधिः, "माति अस्यां शक्त्यां प्रलये सर्वं जगत् सृष्टौ व्यक्तिम् आयाति" इति 'माया' इति वदन्ति. [६]'आदिमाया' 'आदिशक्तिः' 'चण्डी' इत्याद्यपरनाम्नी कालिका इति शाक्ताः आहुः( द्र. : न्यायकोशे पृ.६५२ ). [७]न्यायकुसुमाञ्जल्यां **इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात्प्रकृति प्रबोधभयतोऽविद्येति यस्योदिता**" ( न्या.कु.१।२० ) इत्यादिना 'माया'पदेन विचित्रा 'धर्माधर्मा'ख्या शक्ति नैयायिकैः देवस्य सहकारिशक्तिः इति व्युत्पादिता, जीवादृष्टसापेक्षो भगवान् जगन्ति निर्मिमीते इति

तेषां स्थितिः. 'माध्यमिकैस्तु दुरुन्नीतितो स्वरूपसामर्थ्यादेव इयम् उन्नेतुम् अशक्यत्वाद् इन्द्रजालादिमायासादृश्यात् 'माया' इति निगद्यते.

२.चित्तस्य वृत्तिः संस्कारविशेषावस्था. वृत्तयः चित्तस्य परिणामविशेषः इति पातञ्जलाः. तेषां मते बुद्धिरूपचित्तवृत्त्याकारस्यैव विषये आरोपः. यच्च उक्तं "**विप्र! पृथ्व्यादि चित्तस्थं स्वप्नभ्रममदाद्येषु सर्वैरेव अनुभूयते**" इति स्मृतेः. अतद्रूपम् इति वचनाद् अन्यथाख्यातिरूपदर्शनम् इति. वैशेषिकमताद् अयं विशेषः : तेषां मते बाध्यरजतारोपो अस्माकन्तु आन्तरस्य इति. अतएव प्राग्दृष्टम् इदानीं नास्ति इति स्वरूपबाधानुभवः. केचित्तु वस्तुतस्तु अतद्रूपप्रतिष्ठत्वं तद्रूपप्रकारत्वाभावइति असंसर्गविशिष्टज्ञानं भ्रमः इति मतेऽपि सूत्रं सुयोज्यम् इति ( नागोजीभट्टवृत्तिः ).

--------

## संगोष्ठ्युत्तरलेखनम्

**गो. श्या. म.**

गोस्वामिश्रीपुरुषोत्तमचरणैः नैयायिकाभिमतान्यथाख्यातेः आलोचने यावान् विचारकोटिक्रमः उपस्थापितः ततः आरभ्य अद्ययावद् वाल्लभनैयायिकयोः मध्ये अस्मिन् विषये न कापि चर्चा अग्रे प्रवृत्ता. तस्मान्नूनं महतः प्रमोदस्यायं विषयो यत् संगोष्ठ्यां समाहूतैः नव्यन्यायविद्वदग्रगण्यैः श्रीबलिरामशुक्लमहोदयैः स विचारकोटिक्रमो अस्मिन् पत्रे अग्रेसरः कृतः. तेन तेभ्यो भृशं कार्तज्ञ्यज्ञापनपुरस्सरं तमेतं ख्यातिविचारकोटिक्रमं स्वकीयविचारसामर्थ्यानुरूपं ततोऽपि किञ्चिद् अग्रे नयनायैव ममायं प्रयासः. तत्र तावद् वल्लभीयायाः ख्यातेः समालोचनोपक्रमः शुक्लमहोदयैः एवं समारब्धः —

**"अत्र बहवाः प्रश्नाः प्रादुर्भवन्ति :**

**(१)का सा माया यया बुद्धिवृत्तिः क्षिप्ता भवति ?**

**(२)सा ईश्वराद् भिन्ना अभिन्ना वा ?**

**(३)सा केन प्रमाणेन सिद्ध्यति ?**

(४)बुद्धिवृत्त्याक्षेपः केन प्रमाणेन सिद्ध्यति ?

इत्यादयः.

'ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः' इति महाप्रभुवचनाद् ईश्वरेच्छैव माया इति प्रतीयते. ईश्वरेच्छायाः कार्यमात्रं प्रति कारणत्वाद् भ्रमस्थलेऽपि ईश्वरेच्छायाः साधारणकारणत्वाद् भ्रमप्रमयोः को विशेषः ? ईश्वरेच्छाभिन्नायाः व्यामोहिकायाः मायायाः मानाभावात्.''

महाप्रभूणान्तु विषयेऽस्मिन् यादृशोऽभिप्रायो ग्रन्थेषूपलभ्यते स तावत् श्रीमद्भागवतीयायाः ''[१]श्रिया [२]पुष्ट्या [३]गिरा [४]कान्त्या [५]कीर्त्या [६-७-८]तुष्ट्येलयोर्जया [९-१०]विद्ययाविद्यया [११]शक्त्या [१२]मायया च निषेवितम्'' (भाग.पुरा.१०।३६(=३९)।५५) इत्यस्याः कारिकायाः सुबोधिन्यां तैरेव ''ततो भगवतः सर्वकार्यसाधिकाः द्वादश शक्तयः... 'विद्या'=ज्ञानरूपा, 'अविद्या'= बन्धिका, निद्रादयोऽपि तद्भेदाएव. केचन मायाभेदाः इति आहुः. 'शक्तिः'=इच्छाशक्तिः, एषा सर्वनियामका, 'माया'=सर्वभवनसामर्थ्यं व्यामोहिका च इति उभयविधापि परिगृहीता 'च'कारेण. अनेन सर्वे भेदाः परिगृहीताः. तेन मुख्याः द्वादश, अवान्तरभेदाः असंख्याताएव भवन्ति इति निरुक्तं भवति.'' इत्येवं स्फुटीकृतोऽस्ति.

श्रीमद्भागवतस्य श्रुतिगीतासूत्रभाष्यरूपत्वं श्रीमन्मध्वाचार्योदाहृतशास्त्रवचनैः श्रीमधुसूदनसरस्वतीकृतभागवतभावार्थप्रकाशिकागत - **''एवं सति 'पारमहंसी'संहिता' इति समाख्या उपपद्यते, परमहंसानां वेदान्तवाक्यार्थनिदिध्यासनरूपत्वाद् अत्रत्योपाख्यानानां तत्तात्पर्यकत्वात्''** (भाग.भावा.प्रका.१।१।१) इति वचनेनापि चैवं सर्वेष्वपि वेदान्तसम्प्रदायेषु श्रुतिस्मृतिसूत्रोपबृंहणार्थकत्वेन प्रसिद्धमेव.

तथाहि बृहदारण्यकोपनिषदि **''इन्द्रो मायाभिः पुरुरूप ईयते''** (बृह.उप.२।५।१९) इत्यत्र सामान्यतया मायाबहुत्वं प्रतिज्ञातम् अस्ति परन्तु तत् कीदृक् बहुत्वमितितु स्पष्टं न भवत्यत्र. सति चैवं क्वचिद् **''सोऽकामयत बहु स्यां प्रजायेय इति... इदं सर्वमसृजत... तदात्मानं स्वयमकुरुत'', ''मायी सृजते विश्वम् एतत्... मायान्तु प्रकृतिं विद्याद् मायिनन्तु महेश्वरं''**

(तैत्ति.उप.२।६।-७, श्वेता.उप.४।९-१०) **''मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहं सम्भवः सर्वभूतानां ततो भवति...भूमिरापोनलो वायुः खं मनोबुद्धिरेव च अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा... दैवी ह्येषा गुणमयी मम माया... मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्''** (भग.गीता.१४।४,९,१०) **''प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधाद्, अभिध्योपदेशाच्च, साक्षाच्चोभयाम्नानाद्, आत्मकृते परिणामाद्, योनिश्च हि गीयते''** (ब्र.सू.१।४।२३-२७) इत्यादिश्रुत्यादिवचनेषु 'प्रकृति'-'योन्या'ख्यायाः कस्याश्चिद् मायायाः ब्रह्मणा सह जगत्सहकारिकारणत्वं ब्रह्मणश्च अभिन्ननिमित्तोपादानत्वं चापि श्रूयते. क्वचिच्च पुनः **''परास्य शक्तिः विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च''** (श्वेता.उप.६।८), **''सम्भवाम्यात्ममायया... जन्म कर्म मे दिव्यमेवम्''** (भग.गीता.४।६-९) इति भगवतः सच्चिदानन्दरूपस्य स्वरूपान्तःपाति स्वाभाविकज्ञानबलक्रियारूपं दिव्यत्वमपि 'आत्ममाया'ख्यायाः कस्याश्चित् श्रूयते. अन्यत्रतु पुनः **''तस्मिंश्चान्यो मायया संनिरुद्धः''** (श्वेता.उप.४।६) **''न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः माययापहृतज्ञानाः''** (भग.गीता.७।१५) **''मायामात्रन्तु कार्त्स्न्येनाभिव्यक्तस्वरूपत्वात्''-''पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ''** (ब्र.सू.३।२।३,५) इत्यादिषु वचनेषु कस्याश्चिद् मायायाः जीवव्यामोहकत्वमपीति स्थितिः. तत्र यदि श्रीमद्भागवतेन परस्परविरुद्धत्वेन प्रतीयमानानां मायानिरूपणानामेतेषां मायायाः द्वादशविधत्वेन निरूपणं न क्रियेत चेत् तदेत् सर्वं ''गोमयं पायसं गव्यत्वाद्'' इति न्यायानुसरणेन एकवत्तयैव भाव्येत. तस्माद् **''आत्ममायामृते राजन्परस्यानुभवात्मनो न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसा, बहुरूपइवाभाति मायया बहुरूपया रममाणो गुणेष्वस्यां ममाहमिति मन्यते यर्हि वाव महिम्नि स्वे परस्मिन्कालमाययोः रमेत गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम्... ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि तद् विद्यादात्मनो मायां यथा भासो यथा तमः''** (भाग.पुरा.२।९।१-३, ३३) इति श्रीमद्भागवतान्तैः सर्वैरपि प्रमाणैः सिद्धायां व्यामोहिकायां मायायां सत्यामपि शुक्लमहोदयैः यो मानाभावः आक्षिप्यते स आक्षेपस्तु शास्त्रप्रामाण्यवादिनां कृते किं महासाहसिकत्वप्रदर्शनायैव न भवेत्?

यत् पुनः पृष्टं शुक्लमहोदयैः "**ईश्वरेच्छायाः कार्यमात्रं प्रति कारणत्वाद् भ्रमस्थलेऽपि ईश्वरेच्छायाः साधारणकारणत्वाद् भ्रमप्रमयोः को विशेषः?**" इति तत्र श्रीमदुदयनाचार्यैरेव यद् "**इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात् प्रकृतिः प्रबोधभयतो 'अविद्या' इति यस्य उदिता**" इत्युपसंहारवचनेन ईश्वरेच्छायाः साधारणकारणत्वेऽपि दुरुन्नेयायाः मायायाः सहकारिकारणत्वम् अभ्युपगतं तद् यस्य देवस्य सा सहकारिणी शक्तिः सएव *शान्तो विरताक्षेपरचनाकल्लोलकोलाहलो देवः साक्षात् साक्षितया आवयोः वाल्लभ-नैयायिकयोः मनसि अभिरतिं बध्नातु!* इति सश्रद्धं प्रार्थये!

यत्पुनः शुक्लमहोदयैः —

> "**'मायिकार्थाकारवती बुद्धिवृत्तिः मायया बहिः क्षिप्यते. अतो बुद्धिवृत्तिरेव रजताकारेण भासते', तदपि न समीचीनं, बुद्धिवृत्तौ मानाभावात्... बुद्धिश्च आत्मनो विशेषगुणो न तत्र वृत्तिरूपः कश्चन धर्मः पदार्थान्तर्गतः... बहिःक्षिप्तत्वासम्भवात्.**
>
> इति उक्तम्.

तत्रापि श्रीमद्भगवद्गीता-भागवतवचनान्येव प्रमाणं नहि किञ्चिद् 'बाबावाक्यं' समाश्रित्य वयं वाल्लभाः तथा ब्रूमः. अथ तदुभयवचनान्यपि पुनः बाबावाक्यत्वेन शुक्लमहोदयाः अङ्गीकुर्वन्ति चेद् वितीर्णो हि जलाञ्जलिः स्यात्तदा शास्त्रप्रामाण्याय इत्यलम्.

तथाहि बुद्धेः पदार्थान्तरत्वे "**भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च**" (भग.गीता.७।४) इति भगवद्वचनं यथा प्रमाणं तथा बुद्धिवृत्तिसद्भावे "**संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्**" (भाग.पुरा.३।२६।३०) इति भागवतवचनमपि. बुद्धिवृत्तेः बहिःक्षेपोऽपि "**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा**" — "**यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्**" — "**अनुमितम**

**न्तरा त्वयि विभाति मृषा एकरसे''** (भाग.पुरा.११।१३।२४ — ११।७।७ — १०।८७।३७) इत्येतैः वचनैः निश्चीयतएव.

तथाच शुक्लमहोदयकृतेषु प्रश्नेषु प्रथमस्य — ''का सा माया यया बुद्धिवृत्तिः क्षिप्ता भवति ?'' इति प्रश्नस्य समाधानं : व्यामोहिका माया यया बुद्धिवृत्तिः बहिः क्षिप्ता भवति ! इति. द्वितीयस्य — ''सा ईश्वराद् भिन्ना अभिन्ना वा ?'' इति प्रश्नस्य समाधानं : नैकान्ततो भिन्ना नाप्येकान्ततो अभिन्ना ! इति. एतद्धि श्रुत्यादिशास्त्रेषु भगवन्निरूपणे उभयविधवचनोपलब्धिसमन्वितार्थहेतुकं समाधानं, **''ऐतदात्म्यम् इदं सर्वम्''** (छान्दो.उप.६।८।७)श्रुतिसिद्धं च वरीवृत्यते. तृतीयस्य — ''सा केन प्रमाणेन सिद्ध्यति ?'' इति प्रश्नस्य समाधानन्तु पूर्वनिर्दिष्टैः वचनैरेव सम्यक्तया भवति इति सन्तोष्टव्यम्. चतुर्थस्य — ''बुद्धिवृत्त्याक्षेपः केन प्रमाणेन सिद्ध्यति ?'' इति प्रश्नस्यापि समाधानं प्रदर्शितमेवेति नैयायिकबुद्धिस्वरूपतो भिन्नैव वाल्लभानां काचिद् बुद्धिः.

यदपि शुक्लमहोदयैः —

> **''नव्यन्यायस्य परिष्कारपद्धत्या भ्रमलक्षणन्तुं : 'स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम्'. अत्र 'स्व'पदेन विशेष्यविशेषणयोः भासमानः सम्बन्धो ज्ञेयः.''**

इति प्रतिपादितम्.

तत्रापि इदमवधेयं भवति : परिष्कृतस्यास्य लक्षणस्य ''नेदं रजतं शुक्तिरियम्'' इति बाधज्ञानमूलकत्वेन बाधज्ञानस्य च —

> **नच ''न इदं रजतम्'' इति बाधकबोधाद् रजतस्य आत्यन्तिकी असत्तैव स्वीक्रियताम् इति वाच्यं, बाधकस्य बोधस्य तादात्म्यमात्रविषयत्वेन रजतस्य अबाधकत्वेन शुक्तिरजतयोः तादात्म्यमात्रनिषेधकत्वेन च रजतस्य असन्निधेरेव आपादकत्वाद् आत्यन्तिकसत्तायाः अनापादकत्वात्. तत्र**

**बाधकबोधेन तादात्म्यस्यैव निषेधो अस्ति नतु रजतस्य अत्यन्तासत्त्वम् इति... 'इदन्त्व'धर्ममात्रबाधेन बाधकस्य उपपत्तौ धर्मिबाधकविषयकत्वे कल्पनागौरवं च स्यात्.''**

इत्येवं रीत्या लौकिकसंनिकर्षेण चक्षुषा गृह्यमाणायाः शुक्तेः स्मरणरूपसहकारिकारणसचिवेन ज्ञानलक्षणप्रत्यासत्तिरूपसंनिकर्षेण चक्षूरजतयोः वा? इदमास्पदं वा उद्दिश्य रजतत्वनिषेधो अङ्गीकर्तव्यो भवेत्? यदितु शुक्तिरजतयोः भ्रान्तिप्रतिपन्नतादात्म्यरूपसंसर्गो भासते यश्च असन्नेव; न पुनः शुक्तौ रजतम् इति. इहैव निषेधपर्यवसानम् इत्यपि व्यवस्थापितम्. तत्र ''इदं रजतम्'' इति भ्रान्तिज्ञाने रजतम् इदामति, ''नेदं रजतम्'' इति बाधज्ञाने च रजतम् उद्दिश्य इदन्त्वनिषेधे ज्ञानलक्षणप्रत्यासत्त्या चक्षुः रजतसंनिकृष्टं चेत् तदा रजतविशेष्यताकः इदन्त्वप्रकारको भ्रमः ''इदं रजतम्'' इति भ्रमो भवेद् नतु शुक्तिविशेष्यताको रजतत्वप्रकारकः. तथात्वेतु **''अन्यथात्वञ्च व्यधिकरणप्रकारकत्वरूपम्''** इत्युक्ता न अन्यथात्वसिद्धिः नवा **''तदभाववन्निरूपित-तन्निष्ठविषयताप्रतियोगिज्ञानम्''** इत्युक्ता अन्यथाज्ञानसिद्धिः वा सम्भवदुक्तिका स्याद्, अलौकिकसंनिकर्षेण चक्षुःसंयुक्ते रजते इदन्त्वस्य बाधायोग्यत्वाद् व्यधिकरणप्रकारकत्वाभावात् च; तदभाववन्निरूपित-त्वाभावेन च तन्निष्ठविषयताप्रतियोगिज्ञानस्यापि वक्तुम् अशक्यत्वादेव. तथाच भ्रान्तिस्तु रजतत्वप्रकारिका शुक्तिविशेष्यताका—बाधज्ञानेतु शुक्तिरूपाधिष्ठाने न रजतस्वरूपनिषेधो नापि इदमास्पदीभूते अधिष्ठाने रजतत्वसद्भावनिषेधः इति किं केन सम्बद्ध्यतइति बोद्धुम् अशक्यमेव जातम्.

किञ्च **''शुक्तौ ''इदं रजतम्'' इति ज्ञाने विशेष्यः शुक्तिः विशेषणं रजतत्वम्''** इत्युक्तिरपि बाधिता स्यात्. यदितु लौकिकसंनिकर्षेण इन्द्रियसंयुक्तएव प्रामाणिकी इदन्ता अन्यत्रतु तत्तैवेति चेत् तदापि रजतत्वावच्छिन्नविशेष्यताकः इन्दत्वप्रकारकएव भ्रमः सिद्ध्येत् न शुक्तित्वावच्छिन्नविशेष्यताको रजत्वप्रकारकः इति स्वमतहानिः. इदमास्पदञ्च उद्दिश्य रजतत्वनिषेधाभ्युपगमेतु **'''इदन्त्व'धर्ममात्र-बाधेन बाधकस्य उपपत्तौ धर्मिबाधकविषयकत्वे कल्पनागौरवं च स्याद्''** इत्युक्तिरेव बाधिता स्यात्. किञ्च इदमास्पदञ्च उद्दिश्य रजतत्वनिषेधाभ्युपगमेतु

''चक्षुःसंनिकृष्टं वस्तु रजतं न भवति'' इत्येव सिद्ध्यति न जातू रजतचक्षुषोः मिथो लौकिकोऽलौकिको वा संनिकर्षइति, सतु स्वशिष्यैकोपदेष्टव्यः स्याद्. एवंहि रजतं बुद्धिवृत्तेरेव गोचरम् इति अकामेनापि अङ्गीकरणीयम्. ज्ञानलक्षणप्रत्यासत्त्याच प्रत्यक्षमेव रजतं चेद्, चेद् तदा इदन्त्वनिषेधः स्वतोबाधितएव; यथा, दूरवीक्षणयन्त्रेण दूरेऽवस्थिते वस्तुनि पुरुषे वा इन्दत्वबोधस्य औपाधिकत्वेऽपि न भ्रान्तिरूपत्वम् तथैव इहापि सम्भवेद्. अन्यथातु सामान्यलक्षणप्रत्यासत्त्या योगजधर्मप्रत्यासत्त्या वा गृहीते विषयेऽपि भ्रमत्वापत्तिः दुरुद्धरा स्यात्. पुरोवस्थिततया भासमानयोः तयोः देशकालव्यवधानेन अपुरोवस्थितत्वसम्भवाद् ''इदं रजतम्'' इति भानेन सह समानयोगक्षेमत्वात्. किञ्च ज्ञानलक्षणप्रत्यासत्त्या अनुभूयमानस्य रजतस्य सत्त्वं किम्प्रमाणकम्? न तावत् स्मृतिप्रमाणकं तत्, तस्याः प्रामाण्यानभ्युपगमात्. नापि भ्रमानुभूतिप्रमाणकं तत्, तथाविधानुभूतेः भ्रान्तित्वस्यैव क्षतेः. नापिच अभ्रान्तपुरुषस्य रजतप्रमानुभूतिकं तद्, भ्रान्ताभ्रान्तपुरुषप्रतिपन्नयोः रजतयोः एकज्ञानगम्यतायां विनिगमकाभावात्.

किञ्च ज्ञानलक्षणप्रत्यासत्त्या रजतानुभूतिस्वीकारापेक्षया सादृश्यलक्षणप्रत्यासत्त्या ''शुक्तिरेव रजतसदृशी अभाद्'' इति कुतो न अङ्गीक्रियते? ननु सादृश्यख्यातिवादेन किम् अपराद्धं येन अन्यथाख्यातिवादएव अङ्गीकरणीयो? यदितु ''शुक्तिरजते सदृशे'' इति भ्रमकाले उभयप्रतीत्यभावात् तथा नाङ्गीक्रियते चेत्, तदा सादृश्योद्बोधितायां प्रमायाम् उभयज्ञानम् आवश्यकं भवतु. सादृश्योद्बोधिते भ्रमे दोषसहकारेण तथाप्रतीतिपरिहारपूर्वकं सादृश्यमेव तत्र प्रत्यभाद् न सादृश्यानुयोगिप्रतियोगिनौ इति अङ्गीकारे को दोषः?

किञ्च आत्मनि जन्ममरण-परिच्छिन्नपरिमाणवत्त्वादेः प्रतीतिः प्रमा वा स्याद् भ्रान्तिः वा? न प्रमा, नित्यविभ्वात्मवादस्य नैयायिकाभिमतत्वेन तथाविधात्मस्वरूपानङ्गीकारात्. नापि भ्रान्तिः, आत्मविशेष्यताकायां जन्ममरणादिप्रकारिकायां प्रतीतौ **'व्यधिकरणप्रकारकत्वरूप'**स्य व्युत्पादयितुम् अशक्यत्वात्. किञ्च वाल्लभानां हि ''नैयायिकमताभिप्रेतो अन्यथाख्यातिवादो अप्रामाणिकः'' इतीदृग्बुद्धिः नैयायिकैः प्रमात्वेन वा भ्रमत्वेन वा अङ्गीक्रियेत? नाद्यः नैयायिकैः एवं स्वीकर्तुम्

अशक्यत्वात्. न द्वितीयः एतादृश्यां बुद्धौ '**व्यधिकरणप्रकारकत्वरूप**'स्य व्युत्पादयितुम् अशक्यत्वादेव. तस्माद् नैयायिकानान्तु कृते ''अन्यख्यातिवादो अन्यथाख्यातिरूपो'' इत्यत्र व्यधिकरणताप्रकारताप्रतिपादनस्य दुर्घटत्वेऽपि अन्यख्यातिवादिनां वाल्लभानां कृते ''अन्यथाख्यातिवादो विमताद् अन्यख्यातिवादाद् व्यामोहिकया मायया अन्यस्य अन्यथाख्यातिवादस्य ख्यातिः'' इति व्युत्पादयितुं सर्वथा शक्यत्वेनैव अन्यख्यातिवादएव प्रामाणिकः.

सर्वेषामपि ख्यातिवादानाम् अन्यथाख्यातौ पर्यवसानं द्योतयितुं शुक्लमहोदयाः कथयन्ति —

> **''वाल्लभानां मते व्यामोहिकया मायया बहिः क्षिप्ता बुद्धिवृत्तिः रजताकारवती तत्र भासते, सा वृत्तिः रजतत्वेन भासते वा वृत्तित्वेन भासते? रजतत्वेन भासते चेद्, अन्यथाख्यातिरेव, रजतत्वाभाववति वृत्तौ रजतत्वप्रकारत्वात्. रजतत्वेन भासमानेतु स्वव्यधिकरणप्रकारावच्छिन्नविषयताकत्वम् आगतमेव. वृत्तित्वेन भासमानेतु 'अहं रजताकारां वृत्तिम् अनुभवामि' इति अनुव्यवसायः स्यात्, न 'रजतम् अनुभवामि' इति.''**

तत्र पृष्टव्याः भवन्ति शुक्लमहोदयाः यद् ''**स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत्-त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम्**'' इत्येतादृग्लक्षणको भ्रमः सर्वेष्वपि शुक्तिरजतादिभ्रमेषु लक्षणत्वेन ज्ञायमानः सन् सञ्जायते उत अज्ञायमानोऽपि? यदि ज्ञायमानएव सञ्जायते चेद् अनधीतनव्यन्यायशास्त्राणां न कदाचिदपि न कोऽपि भ्रमः स्यात्, नव्यन्यायाध्यनं विना एतादृशस्य दुरूहस्य भ्रमस्य बुद्धौ आरोढुमपि अशक्यत्वेन नव्यनैयायिकानामेव भ्रान्तौ एकाधिकारिता भवेत्. अथ अज्ञायमानः चेत् तदा एतल्लक्षणवदेव रजतात्मिका बुद्धिवृत्तिरपि वृत्तित्वेन स्वयम् अप्रकामाना रजतन्तु प्रकाशयितुं कुतो न शक्नुयाद्?

किञ्च नव्यन्यायमतेऽपि आत्मगुणरूपायां बुद्धौ येन-केनापि सम्बन्धेन भासमानं

रजतं विषयितासम्बन्धेन तत्र विद्यमानं चेद् विद्यमानत्वादेव न बाधज्ञानार्हम्. अथ अविद्यमानं चेत् तदा रजतभ्रमोत्पत्त्यसम्भवः! नह्यत्र भ्रम-प्रमानुभूतिरूपे तत्तदर्थप्रकाशनकार्ये बुद्धेः आत्मगुणत्वे वा आत्मसंयुक्तविलक्षणपदार्थवृत्तिरूपत्वे वा कश्चन विशेषो येन **''वृत्तित्वेन भासमानेतु 'अहं रजताकारां वृत्तिम् अनुभवामि' इति अनुव्यवसायः स्यात्, न 'रजतम् अनुभवामि' इति''** आपत्तिः गम्भीराय विमर्शाय कल्पेत. बुद्धेः वृत्तिरूपत्वानङ्गीकारेण आत्मगुणत्वाङ्गीकारेऽपि तत्र विषयतया भासमानं रजतं न तावद् आत्मगुणसमानाधिकरणं ततश्च आत्मन्येव रजतख्यानस्य दुर्वारतया कुतो न आत्मख्यातौ अन्यथाख्यातेः पर्यवसानम्? यदितु ''अहं रजतम्'' इति भानाभावाद् ''इदं रजतम्'' भानानुव्यवसायात् च आत्मख्यातेः असम्भवतापादनम् अभिलषितं तदापि आत्मनि अन्यस्य रजतादेः ख्यानाङ्गीकारेण अन्यख्यातौ पर्यवसानं कुतो न? अथ पुरोवर्तिनि इदमास्पदे वस्तुनि परोक्षरजततादात्म्यस्य प्रतीतिः तत्र हेतुत्वेन उपादीयते चेत्, तदा ''नेदं रजतम्'' इति बाधज्ञानस्य इदमास्पदरजततादात्म्यनिषेधएव पर्यवसानाद् न अन्यथाख्यातिः अपितु तादात्म्याभावरूपस्य अन्यस्यैव ख्यानाद् अन्यख्यातावेव पुनः अन्यथाख्यातेः पर्यवसानम् अकामेनापि अङ्गीकरणीयम्. तस्माद् बलवद्बाधकोपलब्धिं यावद् अन्यख्यातिमेव समीचीनाम् मन्ये इति अलम्.

पुनश्च शुक्लमहोदयानां भृशमुपकारं स्वीकुर्वन् अहम् एतद्विषयकं च तेषाम् उपपत्त्यनुपपत्तिसमुद्भावनशेमुषीप्रकर्षं नव्यन्यायशास्त्रीयविषयावगाहने आत्मीयं च अल्पीयसमेव सामर्थ्यं विजानन्नपि विचारकोटिक्रमाभिवृद्ध्येकप्रयोजनकस्यास्य संगोष्ठ्युत्तरलेखनस्य उपसंहारं करोमि.



# चर्चा

## नव्यनैयायिकानाम् अन्यथाख्यातिवादः

डॉ. श्रीबलिराम शुक्ल

के.ई.देवनाथन् : श्रीरामानुजाचार्यैस्तु ''**ख्यात्यन्तरवादिनामपि सुदूरमपि गत्वा अन्यथाख्यातिः अवर्जनीया**'' इत्यारभ्य ''**अथवा 'यथार्थं सर्वविज्ञानम् इति वेदविदां मतम्'** '' इति आरब्धम्. तत्र प्रक्रिया तथा अस्ति. परन्तु श्रीमद्भिः उक्तम् अस्ति यद् रामानुजमतेऽपि अन्यथाख्यातिः स्वीकर्तव्या इति. तत्र केचिद् एकदेशिनो भाष्यकाराणाम् ''**अन्यथाख्यातिरेव युक्ता:**'' इति प्रतिपादयन्ति परन्तु ''**यथार्थं सर्वविज्ञानम्**'' इति यद् भाष्यम् अस्ति तत् भाष्यकारमतम् इति स्वीकुर्मः चेत् तन्मतरीत्या अन्यथाख्यातिः न प्रसज्यति. कथम्? इति चेत्, तत्र व्यावहारिकं रजतम् एकम्, व्यवहारानुकूलं रजतम् अपरम्. शुक्तौ त्रिवृत्करणादिना व्यवहारानुकूलं रजतं वर्तते इति स्वीक्रियते चेदपि... परन्तु व्यावहारिकरजत-वृत्तिः जातिः तत्र नास्ति इति श्रीमद्भिः प्रत्यपादी. परन्तु वस्तुस्थितिः एवम् अस्ति : अस्माकं सिद्धान्ते अवयवावय-विनोः भेदो न स्वीक्रियते. किमर्थम्? तत्र व्यवहारानुकूलं रजतम् इति एकम्. व्यवहारानुकूलं रजतम् इति नास्ति. अवयवाएव 'रजत'पदप्रतिपाद्याः. एवञ्च, अवयवाः एकत्र मिलिताः 'रजत'पदप्रतिपाद्याः भवन्ति ते केचिद् अवयवाः शुक्तावपि अन्तर्भवन्ति इति प्रक्रिया. एवञ्च शुक्तौ भासमानं यद् रजतांशः 'सम्प्रतिपन्नरजतम्' इति वयं व्यवहरामः. सम्प्रतिपन्नरजतस्य च भेदो नास्ति अस्माकं सिद्धान्ते.

**बलिराम शुक्ल :** तथा भवता उच्यते. मया एवं स्वीक्रियते यद् व्यावहारिकरजते रजतत्वं वर्तते. नोचेत् ''नेदं रजतम्''इति ज्ञानानन्तरं तस्य बाधो न स्यात्. परन्तु ''नेदं रजतम्'' इति ज्ञानानन्तरं तस्य बाधो भवति इति कृत्वा व्यावहारिकरजतवृत्तिः रजतत्वभिन्ना विजातीया जातिः स्वीक्रियते. सा व्यावहारिकरजतवृत्तीया रजतत्वजातिः सद्रजते यत् शुक्तिकायां रजतं वर्तते तत्र सा जातिः नास्ति. अतः सा भिन्ना जातिः वर्तते. अतः रजतत्वाभावति रजतत्वं तत्र वर्तते.

**के.ई.देवनाथन् :** श्रीमताम् आक्षेपः सम्यगेव. अस्माभिस्तु तत्र एवम् उक्तम् अस्ति यत् ''इदं रजतम्''—''नेदं रजतम्'' इति ज्ञानयोः बाध्यबाधकभावः अस्माभिः न स्वीकृतः. प्राभाकरमतवत् प्रवृत्तावेव बाधो अस्माभिः स्वीकृतः.

**बलिराम शुक्ल :** यद् भवद्भिः स्वीक्रियते तद्विषये मया किमपि न उक्तम्. यत् स्वीकृतं तस्य परिष्कारः क्रियते चेद् एवम् अन्यथाख्यातिः आयास्यति इत्येव उक्तम्.

**पारसनाथ द्विवेदी :** नैतेषाम् अभिप्रायो—''विशिष्टाद्वैते अन्यथाख्यातिः अस्ति'' इति किन्तु एवं युक्त्या स्वीकर्तव्यम्.

**के.ई.देवनाथन् :** ''इदं रजतम्''इत्यत्रतु अन्यथाख्यातिः ईषदपि नास्ति.

**बलिराम शुक्ल :** स्वव्यधिकरणप्रकारावच्छिन्नविषयताकज्ञानम् तत्र वर्तते न वा ?

**के.ई.देवनाथन् :** न.

**बलिराम शुक्ल :** नो चेद् बाधनं कथं भवेत् ?

**पारसनाथ द्विवेदी :** बाधनं व्यवहारस्य भवति.

**बलिराम शुक्ल :** ज्ञानरूपो व्यवहारः.

**के.ई.देवनाथन् :** प्रवृत्तिरूपो व्यवहारः.

**बलिराम शुक्ल :** प्रवृत्तिरूपो व्यवहारो भवतु परन्तु बाधो भवति.

**पारसनाथ द्विवेदी :** बाधो भवति... तादृशव्यवहाराक्षमत्वं प्रतिपाद्यते बाधकेन.

पुरोवर्तिरजतं यत् प्रतीतं तद् भूषणाद्यक्षमम्.

**के.ई.देवनाथन्:** इदानीं भेदाग्रहसहितज्ञानद्वये...

**बलिराम शुक्ल:** भवतां यन् मतम् तत्तु समीचीनं परन्तु तन् मतं नैयायिकदृष्ट्या यदि वयं स्वीकुर्मः तर्हि नैयायिकदृष्ट्या ''इदं न रजतम्'' इति ज्ञानानन्तरं बाधो भवति.

( कोलाहलः )

**के.ई.देवनाथन्:** भवद्भिः उक्तं ''**स्वव्यधिकरणप्रकारावच्छिन्न...**'' इति परिष्कारो भवति. 'स्वं'नाम विशेष्यता, 'विशेष्यता' नाम 'इदं'निष्ठा विशेष्यता. तदधिकरणावृत्तिः कश्चित् प्रकारो नास्ति. अधिकरणएव रजतत्वम् अस्ति. अतः तत्समानाधिकरणप्रकारावच्छिन्ना विशेष्यता.

**बलिराम शुक्ल:** भिन्नं रजतत्वं भवद्भिः स्वीक्रियते, मयातु न स्वीक्रियते. रजतत्वं तत्र भिन्नं-भिन्नम्.

**के.ई.देवनाथन्:** सिद्धान्तप्रक्रिया भिन्ना वर्तते. 'रजतत्वं'नाम यथा वा...

**बलिराम शुक्ल:** 'रजतत्वं'नाम कारणतावच्छेदकतया सिद्धा या 'रजतत्व'जातिः तत्र नास्ति अतएव ''नेदं रजतम्''... भवति.

**के.ई.देवनाथन्:** समीचीनं परन्तु वेदान्तिनां मते जातिः आकृतितो भिन्ना नास्ति. संस्थानविशेषएव आकृतिः जाति...

**पारसनाथ द्विवेदी:** प्रश्नः कः ?

**बलिराम शुक्ल:** तत्र रजतत्वजातिः भिन्ना वर्तते. व्यावहारिकरजतत्त्वं भासमाने रजते नास्ति. नैयायिकानां मतेतु शुक्तिः भासते. रजतत्वं प्रकारतया भासते.

**के.ई.देवनाथन्:** वेदान्तिनां सर्वेषां सिद्धान्ते अवयवसंस्थानविशेषएव जातिः.

**पारसनाथ द्विवेदी:** अवयवसंस्थानव्यङ्ग्या जातिः.

**के.ई.देवनाथन्:** तदर्थमेव मया उच्यते ''**आकृतिर्जातिलिङ्गाख्याः**'' इति गौत्तमसूत्रं तत्तु जानीमः. परन्तु वेदान्तिनां सिद्धान्ते प्रतिपाद्यते. अद्वैतिनां सिद्धान्ते, विशिष्टाद्वैतिनां सिद्धान्ते, भट्टानां सिद्धान्ते, प्राभाकराणां सिद्धान्ते...

**पारसनाथ द्विवेदी :** अद्वैतिनां सिद्धान्ते जातिः न अङ्गीक्रियते.

**के.ई.देवनाथन् :** जातिः भिन्नतया न अङ्गीक्रियते. एवं चेद्, यः चाकचक्यादिधर्मविशष्टो भागः तदपेक्षया अतिरिक्ता आकृतिः नास्ति. सः भागः शुक्तिशकलेऽपि वर्तते. सम्प्रतिपन्नरजतेऽपि वर्तते इति किल वदन्ति. तत्र तावत् भेदः किमर्थं वक्तव्यम् इति मम भाति...

**बलिराम शुक्ल :** अस्माकं मते सत्यव्यवहारकारणतावच्छेदकतया रजतत्वजातिः सिद्ध्यति. तत्र रजते कारणता नास्ति इति कृत्वा कारणतावच्छेदिका या रजतत्वजातिः सा शुक्तिगतरजते नास्ति. अतएव शुक्तिगतं रजतं भिन्नम्. यथा तारणजन्यवह्निः अतारणवह्निः तद्गता जातिः भिन्ना भिन्ना वर्तते...

**के.ई.देवनाथन् :** तत्रैव मतभेदः. तारणाकरणवह्निस्थलेऽपि जातिः... मतभेदः.

**बलिराम शुक्ल :** तन्मतम् अवलम्ब्यैव मया उक्तम्.

**के.ई.देवनाथन् :** तत्तु एकदेशिमतम्.

**बलिराम शुक्ल :** अस्तु. एकदेशिमतम् अत्र न उपस्थापनीयम् इति निर्बन्धो नास्ति.

**के.ई.देवनाथन् :** अन्यम् विषयं वदामि. ''शुक्तिं रजतत्वेन जानामि'' इति अनुव्यवसायो अन्यथाख्यातिव्यतिरिक्तविषये कुत्रापि समन्वयितुं न शक्नोति. नैयायिकानां मतएव भवति.

**पारसनाथ द्विवेदी :** भवद्भिः निबन्धे मायाविषये उक्तम् अस्ति. मया क्वचित् पठितम्, वाल्लभसम्प्रदाये माया चतुर्विधा उच्यते : १. कापट्यरूपा २. इन्द्रजालरूपा ३. व्यामोहिका ४. सर्वभवनसामर्थ्यरूपा माया. तत्र संशयो नास्ति.

**बलिराम शुक्ल :** तत्र किमपि प्रमाणं नास्ति. परम्पराएव.

**पारसनाथ द्विवेदी :** प्रमाणम् अस्ति.

**बलिराम शुक्ल :** मया पत्रे लिखितमेव यत् भागवतादिग्रन्थेषु कुत्रचिद् भगवदिच्छा, कुत्रचिद् भगवतः शक्तिविशेषः इत्यादिकम् उक्तम् अस्ति. अतः एकार्थप्रतिपादिनी युक्तिः कुत्रापि

नास्ति. केषाञ्चित् मते अस्माकं प्रवञ्चनेच्छा माया भवति.

**गो. श्या. म. :** एकार्थप्रतिपादनाभावाद् यदि पदार्थाः अप्रामाणिकाः भवन्ति चेत् सर्वेषामपि दर्शनानाम् एकार्थप्रतिपादकत्वाभावात् नैयायिकानामपि प्राचामर्वाचीनभेदभिन्नानां बहुषु पदार्थेषु लक्षणेषु च एकार्थप्रतिपादकत्वाभावात् सर्वत्र अनाश्वासप्रसङ्गः स्याद् इति एतादृशी युक्तिः न दातव्या.

**बलिराम शुक्ल :** 'माया'शब्देन रामानुजीयानां माया न ग्राह्या वल्लभीयानामेव माया ग्राह्या इत्यत्र का युक्तिः ?

**गो. श्या. म. :** ''ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत च आत्मनि तं विद्याद् आत्मनो मायां यथाऽभासो यथा तमः'' इति शास्त्रवचनं किं प्रमाणं न भवति ?

**बलिराम शुक्ल :** वचनन्तु अन्येषां मतेऽपि वर्तते मम मतेऽपि वचनं वर्तते.

**के.ई.देवनाथन् :** अस्माभिः स्वीक्रियते.

(कोलाहलः)

**गो. श्या. म. :** भवतां मते वचनम् स्यादपि किन्तु भवन्मतं शास्त्रप्रमाणमूलकं नास्ति. वचनस्य अन्यथापि व्याख्यानं क्रियते चेत् तदा अन्यथाख्यातिः भवति. अस्माकं मते तादृशी अन्यथाख्यातिः नास्ति.

**बलिराम शुक्ल :** अस्माकं मते 'माया'शब्दस्य अर्थो अन्यो भवतां मते अन्यः.

**गो. श्या. म. :** तेन अस्माकं मते का हानिः ?

**बलिराम शुक्ल :** अस्माकं मतेऽपि का हानिः ? 'माया'शब्देन यदि अस्माभिः प्रवञ्चनेच्छा गृह्यते चेद् अस्माकं मते का हानिः ?

**गो. श्या. म. :** गृह्णन्तु भवन्तः. (तदर्थकः स शब्दोऽपि पुनः व्यामोहिकायां मायायां[संगोष्ठ्युत्तराभिप्रायविवरणं]) प्रमाणं भवेद् न वा इति विचारणीयम्.

**के.ई.देवनाथन् :** भवद्भिः एकं कुसुमाञ्जलिवाक्यम् उदाहृतम् अस्ति. तत्रतु **''इत्येषा सहकारिशक्तिः असमा माया दुरुन्नीतितो मूलत्वात्**

**प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता''** अतएव मया उच्यते यत् माया भवन्मतेऽपि स्वीकृतैव.

**बलिराम शुक्ल :** तत् सर्वं जानामि. अतएव मया उच्यते यत् मायायाः रूपम् न कोऽपि प्रतिपादयितुं शक्नोति. वाल्लभमतेऽपि क्वचित् भगवदिच्छा उच्यते, कुत्रापि भगवतः सङ्केतः उच्यते, भगवतः शक्तिविशेषः इति उच्यते. तत्रापि मतैक्यं नास्ति.

**गो. श्या. म. :** कुत्रचिद् भवद्भिः कारणतावच्छेदकं रजतत्वं स्वीक्रियते, क्वचित् च कारणानवच्छेदकं रजतत्वं, कुत्रचित् रजतत्वं सर्वव्यापकम् अङ्गीक्रियते, कुत्रचित् रजतत्वाभावोऽपि स्वीक्रियते तत्रापि... रजतत्वं सामान्यं, नित्यम् , एकम्...

**बलिराम शुक्ल :** तत्र रजतत्वं भिन्नं-भिन्नं वर्तते.

**गो. श्या. म. :** भगवच्छास्त्रेष्वपि तदा मायायाः विभिन्नानि रूपाणि वर्णितानि कुतो न भवितुम् अर्हन्ति ?

**पारसनाथ द्विवेदी :** अपरः प्रश्नः : बुद्धेः वृत्तिः न भवति. एतस्यापि समाधानम्...

**गो. श्या. म. :** **''संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च स्वाप इत्युच्यते बुद्धेर् लक्षणं वृत्तितः पृथक्''.**

**बलिराम शुक्ल :** वृत्तिः का ?

**पारसनाथ द्विवेदी :** बुद्धेः अवस्थाविशेषरूपा वृत्तिः इति दृष्टम्.

**बलिराम शुक्ल :** नैयायिकानां मते वृत्तिः नास्ति.

**यज्ञेश्वरशास्त्री :** तैः नैयायिकदृष्ट्या उक्तम्. नैयायिकैः वृत्तिः न स्वीक्रियते, योगदार्शनिकैः स्वीक्रियते.

**बलिराम शुक्ल :** तत्रापि वृत्तिः पदार्थः कः ? संस्कारावस्था परिणामविशेषः.

**गो. श्या. म. :** वयन्तु प्रमाणानुगामिनः नतु उत्प्रेक्षानुगामिनः... प्रमाणन्तु उद्धृतमेव. इदानीं प्रमाणस्य विवेचनं कर्तव्यं भवति.

**पारसनाथ द्विवेदी :** बुद्धेः अवस्थाविशेषः...

**बलिराम शुक्ल :** अवस्थाविशेषः इति कुत्रापि प्रतिपादितं, कुत्रचित्

संस्कारविशेषः इति प्रतिपादितम्. अतो वृत्तिविषये विभिन्नानि मतानि सन्ति.

**पारसनाथ द्विवेदी :** कुत्र लिखितम् इत्यस्य चर्चा नास्ति. वाल्लभग्रन्थे किं लिखितं तन् मया उच्यते. भवतां मतेतु बुद्धिः ज्ञानं, केषाञ्चिन् मते बुद्धिः अहङ्कारविशेषो. अस्तु. किन्तु बुद्धिवृत्तिः अङ्गीकर्तव्या इति आचार्यैः लिखितम्...

**बलिराम शुक्ल :** लिखितम्. नतु प्रमाणम्.

**पारसनाथ द्विवेदी :** प्रमाणं कुतो नास्ति ? सप्रमाणं लिखितम्. प्रमाणं विहाय न किञ्चिद् आचार्यैः लिख्यते.

**बलिराम शुक्ल :** बाबावाक्यं प्रमाणम् अस्माभिः न स्वीक्रियते.

**के.ई.देवनाथन् :** शुक्लमहोदयाः ! स्वयं न्यायभाष्यकाराः "**प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणानि**"इति सूत्रव्याख्याने न्यायभाष्यकाराः केषुचिद् विषयेषु शब्दएव प्रमाणम् इति न असङ्करः इति लिखितवन्तः.

**यज्ञेश्वरशास्त्री :** नैयायिकोंका ही वाक्य है : "संविदेवहि प्रमाणम्". अनुभव भी तो प्रमाण होता है.

**बलिराम शुक्ल :** अनुभव माने क्या ? अस्तु. अस्तु.

**पारसनाथ द्विवेदी :** अपरो विषयो भवद्भिः लिखितम् अस्ति "स्मरणे तत्ताभानस्य नियमाभावाद्" इति. तर्हि तत्ताभानन्तु स्मरणज्ञाने...

**के.ई.देवनाथन् :** प्राभाकरमतरीत्या उक्तम्.

**पारसनाथ द्विवेदी :** प्रभाकरमतेऽपि भवतु. स्मरणज्ञाने तत्ताभानं कथं न भवति इति न उक्तं केवलं 'नियमाभावाद्' इत्येव उक्तं किन्तु प्रभाकरमते प्रमुषिततत्ताभानरूपा स्मृतिः भवति. दोषेन स्मृतेः अनुव्यवसायो न भवति. अतः एतद् वाक्यन्तु न युक्तं 'नियमाभावाद्' इतितु न वक्तव्यम्. नियमो अस्ति.

**बलिराम शुक्ल :** समीचीनम् भवता उच्यते. स्मरणे तत्तांशस्य भानं भवति इति नास्ति नियमः. गोस्वामिवर्यैरपि एकम् उदाहरणं दत्तम्. एतेषाम् अनुजस्य स्मरणं जातम्. अतः तत्तांशस्य ज्ञानम्

तत्र न जातम्. तत् कः? तेषाम् अनुजः उत्तमश्लोको अस्ति. तस्य तत्त्वम् अज्ञात्वा... तत्र स्मरणं जातम्. अतएव सर्वत्रैव स्मरणे तत्तांशस्य भानं भवति इति नास्ति नियमः.

**पारसनाथ द्विवेदी :** क्वचिद् दोषात् प्रमोषः इति वक्तव्यम्. नियमो नास्ति इति कथं?...

**गो. श्या. म. :** मेरी एक जिज्ञासा है. ''नेदं रजतम्'' बाधज्ञान संसर्गाभावग्राही है या तादात्म्याभावग्राही?

**के.ई.देवनाथन् :** तादात्म्याभावग्राही.

**गो. श्या. म. :** तादात्म्याभावग्राही है तब तो फिर भिन्न ही हो गया! अन्यख्याति गलेपतित हो गई!

**बलिराम शुक्ल :** भवताम् अन्यख्यातिः अन्यरूपेण वृत्तिः भासते...

**के.ई.देवनाथन् :** नैयायिकदृष्ट्या किञ्चिद् वदामि. ''नेदं रजतम्''इति नैयायिकाः यद्यपि लिखन्ति. तत्र ज्ञाने रजतत्वात्यन्ताभावएव भासते. कुतः एवम्? इति चेद् यत्र शब्दो भवति तत्रैव अयं नियमः. नामार्थस्य भेदसम्बन्धी अन्वयो नास्ति. ''नेदं रजतम्''इति प्रत्यक्षम्. प्रत्यक्षे इदमर्थे रजतत्वात्यन्ताभावः भासितुं शक्नोति. ''नेदं रजतम्'' अत्यन्ताभावएव. सामान्यतो ''नेदं रजतम्'' इति शब्दः चेत् ...

**पारसनाथ द्विवेदी :** कस्य अत्यन्ताभावो भासते?

**के.ई.देवनाथन् :** रजतत्वात्यन्ताभावः.

**पारसनाथ द्विवेदी :** ''नेदं रजतं'' तादात्म्यं प्रतिषेधति...

**के.ई.देवनाथन् :** अन्योऽपि कश्चिद् विषयः प्रातरारभ्य मया दृष्टम् अस्ति. नैयायिकमते, असंसर्गो भासते यथा एते वदन्ति...

(कोलाहलः)



# अन्यख्यात्यनिर्वचनीयख्याती

डॉ. पारसनाथ द्विवेदी

**'ख्याति' पदार्थ:**

'ख्याति:' भानम्. प्रमा भ्रमो वा. 'विवेकख्याति:' इत्यत्र ख्याति: प्रमा. 'अनिर्वचनीयख्यात्या'दिप्रयोगे 'ख्याति:' भ्रम:. " 'ख्या'=प्रकथने" धातो: भावे कर्मणि वा "**स्त्रियां क्तिन्**" इति सूत्रेण 'क्तिन्' प्रत्यय:. ख्यानं ख्याति:, ख्यायते इति वा ख्याति:. अथवा " 'चक्षिङ्'=व्यक्तायां वाचि दर्शनेऽपि" पठ्यते अदादौ. तस्माद् उक्तार्थे 'क्तिन्' प्रत्यय:. "**चक्षिङः ख्याञ्**" (पा.सू.२।४।५५) इति सूत्रेण 'चक्षिङ:' ख्याञादेश:.

यद्यपि 'ख्याति'शब्द: प्रमायामपि प्रयुज्यते तथापि भ्रमात्मकमेव ज्ञानम् अत्र 'ख्याति'पदेन विवक्ष्यते. भ्रमविषयोऽपि कर्मव्युत्पत्त्या ख्याति:. पुरोवर्तिनि शुक्तिशकले यद् रजतादिज्ञानं तत् 'ख्याति:' उच्यते. तत्र प्राधान्येन पञ्चख्यातय: परिगणिता:.

**आत्मख्यातिरसत्ख्यातिरख्याति: ख्यातिरन्यथा।**
**तथानिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्।।**
**योगाचारो माध्यमिकास्तथा मीमांसकोऽपि च।**
**नैयायिकोऽद्वैतिनश्च ख्यातिरेता: क्रमाज् जगु:।।**

एतद् अतिरिक्तन्तु—

**साङ्ख्यास्तु सदसत्ख्यातिं माध्वा अभिनवान्यथा।**
**ख्यातिं प्राहुरन्यख्यातिं वाल्लभा: शास्त्रकोविदा:।।**

एवं सङ्क्षेपेण वक्तुं शक्यते — सत्ख्यातिः, असत्ख्यातिः अनिर्वचनीयख्यातिः इति त्रिधा.

सत्ख्यातिवादिनः : सदेव रजतं ख्यायते, तत्रगतम् अन्यत्रगतं वा इति तार्किकाः, माध्वाः विशिष्टाद्वैतिनो भाट्टाः प्राभाकराः वाल्लभाः योगाचाराः साङ्ख्याः. सदसत्ख्यातिः अख्यातिः अन्यथाख्यातिः इत्येताअपि अत्र अन्तर्भवन्त्येव. असदेव रजतं ख्यायते इति माध्यमिकाः असत्ख्यातिवादिनः. अनिर्वचनीयमेव रजतं ख्यायते इति वदन्ति अद्वैतिनः. एतच्च प्रसङ्गाद् उक्तम्.

<u>अन्यख्यातिः</u>

तत्र वाल्लभाः ''इदं रजतम्'' इत्यादिस्थले अख्यात्यन्यख्याती द्वे अधिकारिभेदात् स्वीकुर्वन्ति. तत्र ये पूर्णज्ञानयोगिनः तेषां सर्वत्र सर्वप्रत्यक्षम् **''अनागतमतीतं च''** (भाग.पुरा.१०।६१।२१) इति वाक्यात्. अतः तेषां सर्वज्ञानस्य यथार्थत्वात् शुक्तिशकलेऽपि रजतज्ञानं यथार्थम्. नच यथार्थज्ञानिनां कथम् अयथार्थज्ञानम् इति वाच्यं, सिद्धान्ते सर्वस्य सर्वत्र सम्भवात् शुक्तिखण्डेऽपि रजतस्य सत्त्वाद्, आविर्भावविरोभावाभ्यां विशेषात्. अन्येषाम् अपूर्णज्ञानिनान्तु पुरोवर्तिनि शुक्तिशकले अन्यख्यातिरेव. उक्तञ्च श्रीपुरुषोत्तमचरणविरचिते ख्यातिवादे **''यन्मायया बहिःक्षिप्ता ख्यायते बुद्धिरर्थवत्, निर्वतते च यद्बोधात् तं नमामि जनार्दनम्''** इति

रजतादिसंस्कारप्राबल्यात् मायया भगवच्छक्तिरूपया मूढा बुद्धिरेव बहिः शुक्तिदेशे क्षिप्यतइति पुरोवर्तिनि रजतधर्माणामेव भानं नतु पुनः अनिर्वचनीयं रजतम् उत्पद्यते. अतो अन्यख्यातिरेव. 'अन्य'पदस्य सदृशवाचकत्वेन पूर्वानुभूतसदृशधर्माणामेव ख्यानाद् अन्यख्यातिः.

अत्र मानम् **''ऋतेऽर्थं यत् प्रतीयेत''** (भाग.पुरा.२।९।३३) इत्यादि भागवतव्याख्यानभूतं श्रीचरणभाष्यम्. मायया समानीतविषयया अर्थेन तुल्यम्

अर्थवद् अर्थाभावेऽपि अर्थवद् भासते इति. ननु का बुद्धिः? उच्यते, आत्मा हि अन्यो निर्विषयज्ञानात्मकः. बुद्धिस्तु विशिष्टज्ञानाकारा तत्त्वान्तरम्. ''बुद्धिर् विज्ञानरूपिणी'' (भाग.पुरा.२।१०।३३) इति वाक्यात्. तार्किकमते बुद्धिः ज्ञानम्. अत्र बुद्धिः ज्ञानकरणम् अहङ्कारविशेषः. **''ज्ञानशक्तिः क्रियाशक्तिः बुद्धिः प्राणस्तु तैजसः''** (भाग.पुरा.२।५।३१) इति वाक्यात् तैजसाहङ्काराद् बुद्धिजननश्रवणात्. तत्रैव सुबोधिन्यां—

> **''नहि अस्मिन् मते बुद्धिः ज्ञानं किन्तु ज्ञानशक्तिः. ...ज्ञानकरणत्वेन बुद्धिः व्यपदिश्यते 'सुबुद्धिः अयं पदार्थान् जानाति' इति. ...कार्यकारणयोः अभेदोपचारात् च 'बुद्धि'-'ज्ञान'योः पर्यायत्वव्यवहारः''.**

अतएव सा स्थिरा मूर्ता. अतएव तद्वृत्तेः बहिःक्षेपादिकं न दुर्घटम्. अस्तु वा बुद्धिः ज्ञानम्. ज्ञानमेव तर्हि मायया बहिः क्षिप्यते इति. ज्ञानमपि स्थायि नतु क्षणत्रितयध्वंसप्रतियोगि. अतो मायया बहिःक्षिप्तं ज्ञानं बुद्धिः वा अर्थाकारेण ख्यायते. न पुनः रजतम् आविद्यकं तत्र उत्पद्यते. तत्र सहकारिकारणं सादृश्यादृष्टसंस्कारप्राबल्यादि न पुनः दोषः इति. तथा प्रस्थानरत्नाकरे श्रीपुरुषोत्तमाचार्येण उक्तम्

> ''अत्र बहवः ख्यातिवादाः. **तत्र पूर्वोत्पन्नस्य अनुभवस्य संस्कारात्मना स्थितस्य उद्बोधकैः प्राबल्ये मायिकार्थाकारवती बुद्धिवृत्तिः मायया बहिः क्षिप्यते. तदा सा पुरोवर्तिनं सर्वतो अंशतो वा आवृत्य बहिः अवभासतइति मायिकस्य अन्यस्यैव ख्यानाद् 'अन्यख्यातिः' इति अत्र व्यवह्रियते.''**
>
> (प्रस्थानरत्नाकर पृ.२५-२६).

तत्रैव राजसे सविकल्पकज्ञानस्य पञ्चविधत्वं संशय - विपर्यय - निश्चय - स्मृति - स्वापरूपं प्रतिज्ञाय—

> **''विपर्यासस्तु सम्प्रयुक्तभिन्नार्थमात्रप्रतिपादकं बाह्यं ज्ञानम्. 'मात्र'पदं संशयवारणाय. 'बाह्यम्' इति स्मृति-**

स्वापनिवृत्त्यर्थम्. अयञ्च विषयदोषात् करणदोषाद् भवति. यथा ''इदं रजतम्'' ''पीतः शङ्खः'' इति. वस्तुतस्तु आवश्यकत्वात् लाघवात् च करणदोषादेव इति निश्चयः.''

(तत्रैव पृ.२४).

प्रमेयरत्नार्णवे बालकृष्णेनापि उक्तं—

''तत्र चक्षुःशुक्तिसंयोगे सामान्यज्ञानोत्तरं माया भगवतः शक्तिः तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदा 'इयं शुक्तिः' इति बोधो न जायते. 'प्रमादमोहौ भवतोऽज्ञानमेव च' (भग.गीता १४।१६) इति वाक्यात्. तथाच पदार्थयाथात्म्य-स्फुरणाभावात् मायामोहिता बुद्धिः रजतसंस्कारप्राबल्यात् चाकचक्यादिधर्मसादृश्यम् आदाय रजतं तत्र निर्माति. तद् इदं बौद्धमेव रजतं बुद्ध्या विषयीक्रियते. नतु सामान्यज्ञानमिव चक्षुःविषयीभूतम् इति विशेषः. विशेषज्ञानन्तु बुद्धिकृतम्. बौद्धमेव रजतं बुद्धिविषयीभूतम्. उक्तञ्च 'अनुमितम् अन्तरा त्वयि विभाति मृषा एकरसे' (भाग.पुरा.१०।८४।३६). अत्र सुबोधिन्याम् 'रजतन्तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च. तत्र सा बुद्धिरेव कारणम्. इन्द्रियार्थयोः मध्ये यद् भाति तन् मृषा' इति निरूपितम्. अतएव प्रथमस्कन्धे 'तेजो वारिमृदाम्' इत्यादिसुबोधिन्यां भ्रमविषयाणां बुद्धिजन्यता उक्ता. निश्चया-त्मके ज्ञानेतु इन्द्रियार्थएव बुद्ध्या गृह्यते नतु बुद्धिपरिकल्पितो अर्थः. इन्द्रियतदर्थयोः मध्ये यद् बुद्धौ अन्यदेव भाति तन् मृषा. तादृशं ज्ञानं भ्रमात्मकम् एवञ्च सति इन्द्रियेण गृह्यमाणाद् अर्थाद् शुक्तिरूपाद् अन्यस्य रजतादेः ख्यातिः 'अन्यख्यातिः' उच्यते. तद् इदं भ्रमात्मकं ज्ञानं बुद्धिवृत्तिरूपम् 'विपर्यास'शब्द-वाच्यम्.''

(पृ.८४)

अनिर्वचनीयख्यातेः वाल्लभैः कृतं खण्डनम्

तत्रैव प्रमेयरत्नार्णवे (पृ.८४) अनिर्वचनीयवादखण्डनमपि वर्णितम्. तथाहि —

> ''मायावादिनस्तु शुक्तिरूपाधिष्ठाने उत्पन्नेन अनिर्वचनीयेन रजतेन चक्षुःसन्निकर्षे 'इदं रजतम्' इति भ्रमो भवेत्. न तत्र शुक्तिसामान्यज्ञानस्य प्रयोजनम् इति आहुः. तन् मन्दं, शुक्तेः चाकचक्यादिधर्मान् विलोक्य तत्सादृश्यं रजते विमृग्य 'इदं रजतम्' इति बुद्धेः उत्पादितत्वात्, शुक्तिसामान्यज्ञानकारणतया निर्वचनीयत्वात्. केचित्तु 'मायया अनिर्वचनीयम् उत्पादितं रजतं चक्षुषा उपलभ्यते अतो न रजते अधिष्ठानसामान्यज्ञानस्य हेतुत्वम्' इति वदन्ति. तदपि अयुक्तं, मायोत्पादितरजतस्य विद्यमानत्वे तत्कृतशुक्तिज्ञानप्रतिबन्धात् कदापि शुक्तिज्ञानं न स्यात्. रजतनाशे हेतोः अन्यस्य अभावाद्.''
>
> (पृ.८५)इत्यादि.

ख्यातिवादे च खण्डनप्रकारः एवम् उक्तः : अनिर्वचनीयरजतोत्पत्तिः व्यर्था. संस्कारप्राबल्येन उद्बोधकसामग्रीबलात् मिथ्याख्यानस्यापि उपपत्तौ अनिर्वचनीयरजतस्य उत्पत्तेः गौरवात् अप्रयोजकत्वात् च. रजतोत्पत्तिं विनापि रजतभ्रमोपपत्तेः तदुत्पत्तिः व्यर्था. नच संस्कारस्य कथं बहिःपदार्थोपस्थापकत्वम् इति वाच्यं, स्वप्ने त्वयापि तन्मात्रेणैव पदार्थोपस्थापकत्वात्. नच तत् स्मरणमेव इति वाच्यम्, स्वप्नसृष्टिविरोधात्. नच संस्कारमात्रेण दोषं विना कथं स्मृतिभ्रमयोः उपपत्तिः इति वाच्यम्, उष्णस्पर्शप्राबल्याप्राबल्याभ्यां त्वग्दाहशीतनिवृत्योरिव संस्कारप्राबल्याप्राबल्याभ्यां भ्रमस्मृत्योः उपपत्तिः. यदि दोषे स्पृहा तव तदा संस्कारप्राबल्यमेव अन्तर्दोषं स्वीकुरु. एतादृशभ्रमेषु शुक्तिरजतादिषु बहिःकरणदोषाङ्गीकारस्तु घटपटादिप्रमोत्पत्त्या प्रत्यक्षविरुद्धत्वाद् जघन्यएव. किञ्च निर्गमेण चैतन्याभेदाङ्गीकारोऽपि व्यापकात्मवादम् आत्मवादं च निरुणद्धि इति दिक्.

**तत्र अनिर्वचनीयवादिमतम्**

''इदं रजतम्'' इत्यादिभ्रमस्थले सर्वत्र अनिर्वचनीयमेव रजतादि प्रातिभासिकम् उत्पद्यते तज्ज्ञानं च. ''शङ्खः पीतः'' इत्यादिसोपाधिकेऽपि भ्रमे तथैव. तेषाम् इयं प्रक्रिया : चक्षुःसन्निकृष्टे पुरोवर्तिनि शुक्तिखण्डे इन्द्रियप्रणालिकया तैजसम् अन्तःकरणं निःसृत्य विषयदेशम् अतिद्रुतं गत्वा इदमाकारं चाकचक्याकारं च भवति. अयं विषयाकारपरिणामो 'वृत्ति'शब्देन उच्यते. यथा सरोवरजलं कुल्या निर्गत्य केदारं गतं तदाकारं भवति तथा च इदमर्थावच्छिन्नचैतन्यम् इदमाकारवृत्त्यवच्छिन्नं च चैतन्यम् एकं भवति तदा इदम् इति प्रत्यक्षं सामान्यं ज्ञानं जायते. सिद्धान्ते यद्वृत्त्यविच्छिन्नचैतन्यस्य यद्विषयावच्छिन्नचैतन्येन सह ऐक्यं जायते तद्विषयांशे तस्य ज्ञानस्य प्रत्यक्षत्वं स्वीक्रियते. विभाजकयोरपि वृत्तिविषययोः उपाध्योः एकदेशस्थत्वेन उपधेयस्य चैतन्यस्य भेदाजनकत्वात्. यथा गृहावच्छिन्नाकाशस्य तदन्तर्वर्तिघटावच्छिन्नाकाशस्य च ऐक्यं भवति तद्वत्. अज्ञानात् पुरोवर्त्तिविशेषविज्ञानं न जायते. तत्र इदमर्थावच्छिन्ने चैतन्ये स्थिता या शुक्तिविषयिणि अविद्या 'तूलाविद्या'पदाभिधेया मूलाविद्यावयवशक्तिरूपा वा उद्भूतरजतसंस्कारसादृश्यागन्तुककाचादिदोषविशेषसहकृता रजताकारेण रजतगोचरवृत्त्याकारेण च परिणमति. तच्च अविद्यापरिणामभूतं रजतम् इदमवच्छिन्नचैतन्याधिष्ठाने अवतिष्ठते. सर्वं हि कार्यं स्वोपादानाविद्याधिष्ठाने अवतिष्ठते. चैतन्यनिष्ठस्यापि रजतस्य न चैतन्यमात्रम् अधिष्ठानम् अपितु इदमवच्छिन्नचैतन्यं तेन न अन्यत्र रजतभ्रमः. इदमि तादात्म्येन रजतस्य सत्त्वात्. अतः ''इदं रजतम्'' इति तादात्म्यप्रत्ययः उपपद्यते. तच्च रजतं न चक्षुषा गृह्यते अपितु साक्षिभास्यम्. साक्षिणि अध्यस्तत्वात्. तथाहि उक्तस्थले इदमवच्छिन्नचैतन्यस्य इदमाकारवृत्त्यवच्छिन्नचैतन्ये अन्तःकरणोपहितचैतन्यस्य च ऐक्यात्. यथैव रजतं शुक्त्यवच्छिन्नचैतन्ये अध्यस्तं तथैव अन्तःकरणोपहितचैतन्यरूपसाक्षिणि अध्यस्तमिति साक्षिसाक्षात्सम्बन्धाद् रजतं केवलसाक्षिभास्यम्. अतएव साक्षिप्रत्यक्षं रजतं न चाक्षुषम्. रजततादात्म्यापन्ने पुरोवर्तिनि चक्षुःसन्निकर्षादेव भवति प्रत्ययः ''रजतं पश्यामि'' इति. तच्च आविद्यकं रजतं न सत् त्रिकालाबाध्यरूपं ''न इदं रजतम्''

इत्यादिबाधात्. नापि क्वचिदपि उपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपम् असत्, प्रतीयमानत्वात्. न उभयरूपं, विरोधात्. तथाच सत्त्वेनासत्त्वेनोभयत्वेन वा निर्वक्तुम् अशक्यत्वात् अनिर्वचनीयमेव तद् उच्यते. स्वप्नादिप्रपञ्चोऽपि अनिर्वचनीयएव मायया सृज्यते आत्मनि यथादृष्टम् इति सङ्क्षेपः. तच्च रजतादिज्ञानं न स्मृतिः किन्तु स्मृतिरूपम् असन्निहितविषयत्वात्. उक्तञ्च "**स्मृतिरूपः परत्र पूर्वदृष्टावभासो अध्यासः**" इति भगवत्पादैः.

अनिर्वचनीयख्यातिप्रसङ्गे अद्वैतवेदान्तदर्शने अन्यख्यातेः चर्चा नास्ति. असदादिख्यातिनिरासएव महतीभिः युक्तिभिः कृतः. अत्र वाल्लभग्रन्थे स्थाने-स्थाने अन्याभिः ख्यातिभिः सह अनिर्वचनीयख्यातेरपि निरासः कृतो अस्ति. तत्र वाल्लभैः यद् अनिर्वचनीयख्यातेः खण्डनं कृतं तत्र किञ्चिद् विचार्यते.

अनिर्वचनीयवादस्य वाल्लभैः कृतस्य आलोचनस्य समालोचना

न तावद् वाल्लभैः आचार्यैः अनिर्वचनीयं मतं सम्यग् उपपादितम् अनूदितं वा. यत्तु बालकृष्णभट्टेन अनूदितं "**रजतं चक्षुषा गृह्यते इति सामान्यज्ञानं न कारणम्**"इति तन् न युक्तं, रजतादेः साक्षिभास्यत्वाङ्गीकारात्. सामान्येन ज्ञाते विशेषेण अज्ञाते धर्मिणि दोषादिसामग्रीवशाद् भ्रमाङ्गीकारात् च. आविद्यकस्य रजतादेः अविद्यमानत्वात् चक्षुःसन्निकर्षाभावात्. नहि आविद्यकं प्रातिभासिकं चक्षुः गृह्णाति. सर्वत्रैव भ्रान्तं साक्षिभास्यमेव. नच उत्पन्नं रजतम् अविद्यापरिणामभूतं कथं न चक्षुर्गोचरः इति वाच्यं, तवापि मायिकं रजतं कथं न चक्षुर्गोचरम् इति समः प्रश्नः. नहि प्रातिभासिकः इन्द्रियगोचरो अपितु व्यावहारिकः इति. मायाच द्विधा मूलाविद्या तूलाविद्या च. मूलाविद्यापरिणामभूतं ब्रह्मेतरज्ञानाबाध्यं तूलाविद्यापरिणामभूतं प्रतिभासमात्र-शरीरं प्रमाणज्ञानबाध्यम् इति विवेकः.

यच्च पुरुषोत्तमाचार्येण उक्तं— मिथ्याख्यानेन उपपत्तौ अनिर्वचनीयरज-तोत्पत्तिः व्यर्था इति न सम्यक्. विषयं विना विज्ञानानुपपत्तेः, साकारवादापत्तेः

च, ''पुरोवर्तिरजतं पश्यामि'' इति प्रत्ययात् च, तवापि मते आचार्यैः रजतोत्पत्तेः अङ्गीकारात् च. तथाहि आचार्यवचनं ''**रजतन्तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च**'' इति. मायामोहिता बुद्धिः रजतम् उत्पाद्य तद् गोचरीकरोति इति बालकृष्णप्रभृत्याचार्यैः असकृदुक्तेः. यदि बुद्धिमात्रं, रजतं न उत्पन्नं तर्हि साकारवादापत्तेः आचार्यवचनविरोधः च. किञ्च रजतं वाल्लभमतेऽपि बुद्धिवृत्तिरेव. वृत्तिश्च परिणामः. बुद्धिश्च मायामोहिता. माया परमेश्वरशक्तिः चिद्विलासो वा. माया तैरपि अङ्गीकर्तव्यैव अन्यथा केवलबुद्धिवृत्तिः भ्रमो न स्यात्. सा माया ईश्वर(स्य!)मोहात्मिका शक्तिः प्राकृतवस्तुष्वेव तत्सदृशान् पदार्थान् सृष्ट्वा गोचरयति. उक्तञ्च प्रमेयरत्नार्णवे—

> **''व्यामोहिका माया जीवं व्यामोह्य तदीयबुद्धौ प्रापञ्चिकसद्वस्तुसदृशं मायिकं पदार्थम् उत्पाद्य पुरोवस्थितविषये प्रक्षिपति इति. तदा पदार्थग्रहणे तस्यापि ग्रहणात् तद्विशिष्टं ज्ञानं भ्रमात्मकं भवति. तथा सति वस्तुग्रहणे मायिकधर्माणामपि ग्रहणाद् 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः, नश्वरं गृह्यमाणं तत् विद्धि माया मनोमयम्' इत्यादिभागवतवचनानि सार्थकानि भवन्ति. प्रपञ्चस्तु ब्रह्मात्मको भगवत्कार्यम्, अविकृतपरिणामवादस्वीकारात्. अस्तिच आविर्भावतिरोभावशक्तिः परमेश्वरस्य.''**

इति.

अत्र इदम् आलोचनीयम् : मायासृष्टं सद्वस्तुसदृशं मायिकं वस्तु यद् गृह्यते, तच्च ग्रहणम् इन्द्रियेण तर्हि मायिकरजतस्यापि चक्षुषा ग्रहणं प्रसज्येत. तथाच सिद्धान्तहानिः. यदि पुरोवर्तिवस्तुमात्रं चक्षुषा गृह्यते तर्हि तत्सदृशं मायिकं रजतं कथं गृह्येत? अथ न चक्षुषा अपितु उत्पादिकयैव बुद्ध्या विषयीक्रियते. तदपि न विचारसहं, बुद्धिः यदि ज्ञानभिन्ना अहङ्कारविशेषरूपा जडा तदा कथं रजतं गोचरयिष्यति? अथ विज्ञानरूपैव तदा चिद्रूपत्वात् कथं रजतम् उत्पादयिष्यति? मायामोहिता इति चेत् तर्हि एवं वाच्यं—''मायामोहिता चिद्रूपा बुद्धिः रजतम् उत्पाद्य

गोचरयति'' इति. तथाच सिद्धान्तहानिः, बुद्धेः ज्ञानसाधनत्वाङ्गीकारात्. बुद्धिः यदि भ्रमजनिका तर्हि प्रमायाः उत्पत्तिः न स्यात्. अतः मायैव मुख्यो भ्रमहेतुः वक्तव्यः. अनिर्वचनीयवादेऽपि मायैव भ्रमहेतुः रजतादिवृत्तिहेतुः च अङ्गीक्रियते. मायाच अज्ञानरूपा भावात्मिका परमेश्वराधिष्ठिता. किञ्च ''यदिदं मनसा वाचा''इत्यादि भागवतवाक्यम् अद्वैतमतेऽपि सङ्गतम्. सर्वस्यैव प्रपञ्चस्य मिथ्यात्वानिर्वचनीयत्वाङ्गीकारात्. वाल्लभमतेतु चक्षुषा गृह्यमाणं पुरोवर्तिपदार्थोऽपि मिथ्या स्यात्. एवं घट-पटादेरपि मिथ्यात्वापत्तेः. उक्तवाक्यं वाल्लभमते तदा सङ्गतं स्यात् यदि एवम् उच्येत ''यदिदं बुद्ध्या गृह्यते'' इत्यादि. अतो जीवबुद्धिव्यामोहिका भगवच्छक्तिरूपा भगवद्बोधनाश्या मिथ्याभूता संसाररचनापटीयसी तामसी, भगवदिच्छयैव प्रवृत्ता, या माया वाल्लभैः स्वीक्रियते संसारोपपादनाय तस्याः मायावादिनाम् अद्वैतिनां मायया को विशेषः? अथ जगदुपादानभूता नास्ति तदुपादानन्तु परमेश्वरएव इति विशेषः. तर्ह्यपि अभ्युपगमविशेषमात्रम्. वाल्लभाः जगत्संसारयोः भेदम् अभ्युपगच्छन्ति मायावादिनस्तु नैव इति. परमेश्वरसत्तातिरिक्तसत्ताकत्वाभावस्तु उभयोः परमेश्वरातिरिक्ते समानम्. जगत् परमेश्वररूपो विषयी तदतिरिक्तः संसारो मायिकः. इहतु शुद्धबुद्धमुक्तचैतन्यमात्राद् घटादिप्रपञ्चोऽपि मायिकः इति. किञ्च मायिकरजतादिसमुत्पादेऽपि परमेश्वरेच्छा कारणम् इति वक्तव्यमेव, तदिच्छयैव व्यामोहोत्पादात्. अतो द्विधा सृष्टिकल्पनं गौरवग्रस्तं लाघवात् मायैव ईश्वराधीना तदिच्छया जगत् निर्मातु. किञ्च, ''अयं घटः'' ''मम इदम्'' ''अहम् इदम्'' इत्यादिव्यावहारिकज्ञानाद् अथच ''नेदं रजतं शुक्तिरियम्'' इत्यादिप्रमात्मकज्ञानाद् ''इदं रजतम्'' इत्यादिज्ञाने विशेषो वक्तव्यः? अन्यथा तेषामपि प्रमात्वं न स्यात्. ननु अस्त्येव विशेषः, व्यामोहरहिता सात्त्विकी बुद्धिः तादृशं प्रमात्मकं ज्ञानं जनयति. इदं ज्ञानन्तु मायामोहिता इति चेत् न, तेषां ज्ञानानां प्रमात्वात्. अबाधितविषयकत्वात् परमात्मनि घटत्व-पटत्वादिभेदबुद्धयोऽपि मोक्षजनिका स्युः. तात्पर्यम् इदं यद् व्यावहारिकः संसारः प्रातिभासिकसंसाराद् भिन्नो अभ्युपगन्तव्यः, तत्र को हेतुः? मायातु प्रतिभासे हेतुः, यदि तत्रापि माया हेतुः तर्हि एकस्याः मायायाः कार्यवैविध्ये हेतुः वक्तव्यः. तस्मान् न उपपद्यते अयं वादः.

यच्च उक्तं संस्कारप्राबल्यादेव उपपत्तौ दोषस्य भ्रमहेतुता न अङ्गीकर्त्तव्या इति तदपि न विचारसहं, संस्कारप्राबल्यात् प्रबलस्मृतिरेव भवन्ती दृश्यते. अन्यथा प्रबलस्मृतिः निर्हेतुका स्यात्. संस्कारप्राबल्याद् भ्रमएव भवेद् न दृढा स्मृतिः. तस्माद् यथानुभवं दोषोऽपि सहकारिकारणं वक्तव्यम् , अन्यथा अदुष्टसाधनस्यापि भ्रमप्रसङ्गात्. किञ्च, संस्कारप्राबल्यस्य दोषत्वमपि अन्यथाकारत्वरूपं प्रतिबन्धकत्वरूपं वा न सङ्घटते. किञ्च व्यापकात्मवादविरोधः चोदितो अन्तःकरणनिर्गमपक्षे, तदपि अनालोचितपराभिसन्धितामात्रम्. सर्वत्र व्यापकस्य चैतन्यरूपस्य ब्रह्मणो अन्तःकरणवृत्तौ घटादौ च तदावरणस्य अज्ञानशक्तिरूपस्य बहिर्देशे निर्गतवृत्त्या आवरणभङ्गमात्रं क्रियते. वस्तुतो अभिन्नस्यापि चैतन्यस्य अन्तःकरणादिवृत्त्यादिभेदाद् भेदोपचारात्. तस्मान् न अस्ति व्यापकात्मवादविरोधः इति.

किञ्च, वल्लभाचार्यैः पुरुषोत्तमैः च स्पष्टमेव करणदोषस्य हेतुत्वम् अङ्गीकृतम्.

किञ्च, 'अन्यख्याति'पदेन यदि पुरोवर्तिनो अन्यस्य ख्यातिः इति अर्थः, तर्हि को विशेषः ? सर्वे ख्यातिवादिनः पुरोवर्तिपदार्थाद् अन्यस्यैव ख्यातिं स्वीकुर्वन्ति. अतो नामापि न विशेषाभिधायकम् अस्ति. किञ्च, मङ्गलश्लोके ''**निवर्तते च यद्बोधात् तं नमामि**''इति उक्तम् तत् कथं सङ्गच्छेत ? नहि भगवद्बोधादेव रजतं निर्वतते अपितु ''नेदं रजतं शुक्तिरियम्'' इत्यादिविशिष्टप्रमाज्ञानादपि इति सर्वानुभवसिद्धम्. यदिच प्रकृतं जगत् सर्वं भगवत्स्वरूपमेव इति मन्यसे तदापि न स्वरूपेण भगवद्रूपा शुक्तिः रजतस्य निवर्तिका अपितु साक्षात्कृतैव. साक्षात्कृतापि शुक्तिः तेनैव न भगवत्त्वेनैव. यद्विषयकम् अज्ञानं यदधिकरणकं यदवच्छिन्नं तादृशेनैव ज्ञानेन निवर्तेत. अन्यथा घटादिज्ञानादपि रजतज्ञानं निवर्तेत, तस्यापि भगवद्विषयकत्वात्. तस्मात् शुक्तित्वेन रजताभावत्वेन वा अधिष्ठानसाक्षात्कारएव निवर्तकः.

किञ्च, अन्यख्यातिवादिभिः वक्तव्यं — तद् रजतं किं सद् असद्

उभयं वा ? इति अनुपपद्यमानत्वात् त्रयोऽपि पक्षाः न सम्भवति. अतो अनिर्वचनीयं रजतम् इति मन्तव्यम्.

<u>अनिर्वचनीयवादिकृतस्य वाल्लभख्यातौ आक्षेपस्य समाधानम्</u>

अत्र अन्यख्यातिवादिनो : नहि संस्कारप्राबल्यमात्रादेव रजतबुद्धिः भ्रमो अपितु सादृश्यादिसमवधानादिकमपि अपेक्षितमिति अदोषः. रजतस्य मायिकत्वेऽपि उत्पन्नत्वेऽपि अनिर्वचनीयतायाः अस्वीकाराद् अस्ति विशेषः. नहि पुरोवर्तिनि अन्यत्र वा द्विधा सृष्टिः स्वीक्रियते अपितु इन्द्रियविषययोः मध्ये मायिकबौद्धिकरजतादिप्रतीत्यन्यथानुपपत्त्या पुरोवर्तिनि विषये विषयता तावद् अङ्गीक्रियते. विषयतैव व्यामोहिकया मायया सृज्यते न विषयः. विषयस्तु भगवद्रूपएव. तवतु विषयोऽपि मायया सृज्यते इति विशेषः. अन्यथा रजतबुद्धिः निर्विषया स्यात्. बहिः क्षिप्यते इति अङ्गीकारात् साकारवादोऽपि निरस्तो वेदितव्यः.

अन्यख्यातिः इति अन्यस्य पुरोवर्तिपदार्थाद् विषयतारूपस्य रजतस्य मायिकस्य ख्यातिः भानम् अन्यख्यातिः इति ख्यात्यन्तरेभ्यो अस्ति विशेषः. एवम् अन्यख्यातिपक्षेऽपि वक्तुं शक्यते. मायापि भगवच्छक्तिरूपा न निःस्वभावा न अनिर्वचनीया अद्वैतवादिनामिव अस्माकं सम्मता. व्यामोहिकायाः मायायाः भगवच्छक्तिविलासरूपायाः तमोगुणोद्भवे जीवबुद्धिव्यामोहोऽपि भगवदिच्छया तल्लीलाविलासएव. अतः इन्द्रियविषययोः मध्ये मूढा बुद्धिः विषयेषु विषयतां धर्मरूपां धर्मिरूपां वा सृजति. अन्यथा निर्विषया स्यात्. विषयताच विषयासम्बद्धः विषयनिष्ठो धर्मविशेषः. 'अन्य'पदेन च तस्याएव ग्रहणाद् विशेषः इति.

यद् उक्तं " **'निर्वतते च तद्बोधाद्' इति नहि परमात्मज्ञानादेव निवर्तते अपितु 'नेदं रजतम्' इति ज्ञानादपि**" इति तदपि न युक्तं, परमात्मबोधात् पूर्णज्ञानिनः निवर्तते माया व्यामोहिका. अतएव तस्य अख्यातिरेव, यथार्थज्ञानोदयात्. अपरस्य च अज्ञानिनः "नेदं रजतम्" इत्यादिज्ञानेन तिरोभावएव रजतादेः इति अर्थात्. तच्च रजतम् असत्यं न अत्यन्तासत्यं

वन्ध्यापुत्रवद् अप्रतीत्यापत्तेः. (एतच्च न युक्तं प्रतिभाति. तेषां मते रजतं सत्यम् इति प्रतिपादितत्वेन किन्तु तद्देशकालगतत्वेन असत्त्वम् इति वाच्यम् इति प्रतिपादनावसरएव द्विवेदिमहाभागैः संशोधितम्) मायया बुद्धिविषयताद्वयं सृज्यते धर्मरूपां धर्मिरूपां च. ''भ्रमद्घटः'', ''पीतशङ्खः'' इत्यादौ भ्रमण-पीतत्वादिधर्मरूपां विषयताम्. ''इदं रजतम्'' इत्यादौ च रजतादिधर्मिरूपां विषयतां सृजति. तत्र ''इदं रजतम्'' इत्यादिस्थलेतु अन्यख्यातिः. ''पीतः शङ्खः'' इत्यादिस्थलेतु अन्यथाज्ञानम् इति श्रीबालकृष्णभट्टेन उक्तम् (तन् न सङ्गतम् इति ममापि प्रतिभाति. भवद्भिरपि स्वीयनिबन्धे उपपादितम् अस्ति). अन्यख्यातिः भ्रमो अन्यथाज्ञानन्तु संशयविपर्ययादिभ्यो भिन्नं मायिकं ज्ञानान्तरमेव इत्यादि प्रपञ्चितम् निर्णयार्णवे तृतीयतरङ्गे (पृ.१८४) बालकृष्णभट्टेन. 'माया'शब्देन सिद्धान्ते भगवतः सर्वभवनसामर्थ्यरूपा व्यामोहिका च गृह्यते. ख्यातौतु व्यामोहिका माया उपयुज्यते. व्यामोहिकापि माया पूर्वस्याएव मायायाः रूपान्तरम्. तस्मात् माया भगवच्छक्तिरेव न अनिर्वचनीया मिथ्या निःस्वभावा वा इति बोध्यम्.

मम मते व्यामोहिका मायापि भगवद्रूपत्वात् सत्यैव, बुद्धिरपि सत्यैव. अन्यख्यातेः तात्पर्यं, शुक्तौ तिरोहितस्यापि रजतादिधर्मस्य अतिरोहितत्वेन प्रादुर्भवनम्, शुक्तौ तिरोहितधर्मान्यस्य ख्यातिः इति व्युत्पत्तेः.



## संगोष्ठ्युत्तरलेखनम्

### गो. श्या. म.

बौद्धवेदान्ताद्यनेकदर्शनशास्त्रेषु विश्रुतवैदुष्यैः श्रीपारसनाथमहाभागैः ख्यातिविचारसंगोष्ठ्याम् अन्यख्यात्यनिर्वचनीयख्यात्योः तुलनात्मकविमर्शेन नूनं वयं सर्वएव बहूपकृताः न तत्र शङ्का काचित्. तथापि तत्र तावद् **''न तावद् वाल्लभैः आचार्यैः अनिर्वचनीयं मतं सम्यग् उपपादितम् अनूदितं वा''** इति यद् एभिः उक्तं तत् सर्वांशे यद्यपि न सत्यं किन्तु अंशतो सत्यं भवितुमर्हत्यपि. तत्र हेतुस्तु आत्मैक्यसिद्धौ परं सन्नह्यतां केवलाद्वैतवादिनां मते व्यावहारिकविषयेषु विश्रुताद् अनादरात् तैः प्रतिपादितासु नानाविधसरणीषु एकस्याः सरण्याः अनुवादे अपरस्याः कस्याश्चिद् विरोधो भवेद् न वा इति विवेचनं, मन्ये न केनापि कर्तुं पार्यते. तत्र वाल्लभाः के वराकाः! ततश्च द्विवेदिमहाभागाः कथयन्ति **''यत्तु बालकृष्णभट्टेन अनूदितं 'रजतं चक्षुषा गृह्यते इति सामान्यज्ञानं न कारणम्' इति तन् न युक्तं, रजतादेः साक्षिभास्यत्वाङ्गीकारात्. सामान्येन ज्ञाते, विशेषेण अज्ञाते, धर्मिणि दोषादिसामग्रीवशाद् भ्रमाङ्गीकारात् च. आविद्यकस्य रजतादेः अविद्यमानत्वात् चक्षुःसन्निकर्षाभावात्. नहि आविद्यकं प्रातिभासिकं चक्षुः गृह्णाति. सर्वत्रैव भ्रान्तं साक्षिभास्यमेव''** तत्र तावत् 'ख्यातिविवेक'काराणां श्रीबालकृष्णभट्टानां पांक्तपदावली ईदृशी विद्यते : **''मायावादिनस्तु शुक्तिरूपाधिष्ठाने उत्पन्नेन अनिर्वचनीयेन रजतेन चक्षुःसंनिकर्षे 'रजतमिदम्' इति भ्रमो भवेत्, न तत्र शुक्तिसामान्यज्ञानस्य हेतुत्वम् इति वदन्ति''** अत्र सत्तात्रैविध्यवादानुसारेण शुक्तेः प्रमाणवृत्तिग्राह्यत्वं रजतस्यतु आविद्यकवृत्तिग्राह्यत्वम् इति पार्थक्यं सम्भवति परन्तु सत्ताद्वैविध्यवादोऽपि अद्वैतिनामभिमतएव. तत्र एषा प्रमाणवृत्त्यविद्यावृत्योः भेदप्रक्रिया न शक्यानुसरणा स्यात्. किञ्च संक्षेपशारीरककारमते शुक्त्यंशो अधिष्ठानम्—इदमंशः आधारः. सविलासाज्ञानविषयो अधिष्ठानम्—अतद्रूपोऽपि तद्रूपेण आरोप्यबुद्धौ स्फुरन् आधारः इति अङ्गीकरणाद् आधारस्यैव सामान्यज्ञानम् अपेक्षते न पुनः अधिष्ठानस्य

(द्र.सि.ले.सं.१।१०९) इति अधिष्ठानसामान्यज्ञानस्य अनिर्वचनीयख्यातिवादे अनावश्यकता कण्ठोक्तैव . द्विवेदिमहाभागैरेव उद्धृते भगवत्पादीयाध्यासभाष्यवचने **''नच अयमस्ति नियमः पुरोवस्थितविषयएव विषयान्तरम् अध्यसितव्यम्, अप्रत्यक्षेऽपि हि आकाशे बालाः तलमलिनतादि अध्यस्यन्ति''** (ब्र.सू.भा.१।१।१) इति अधिष्ठानसामान्यज्ञानस्य अनावश्यकता प्रतिपादितैव. श्रीबालकृष्णभट्टाअपि शुक्तिसामान्यज्ञानस्य अद्वैतिनां मते अनङ्गीकारं कथयन्ति न रजतसामान्यज्ञानस्येति स्पष्टमेव. श्रीभारतीतीर्थास्तु विवरणप्रमेयसंग्रहे अख्यातिवादालोचने **''ननु 'इदं रजतम्' इत्यत्र चक्षुरादिप्रमाणाभावात् पारिशेष्यात् स्मर्यमाणमेव रजतं न पुनः तत्सदृशं... इति चेत् मैवम्. पुरोवस्थितत्वेन अवभासमानत्वात्. नच इदमंशस्यैव तदवभासो न रजतस्य इति मन्तव्यम्, यथा सम्यक्स्थलेषु 'इदं रजतम्'-'अयं घटः' इत्यादिषु इतरेतरसंसृष्टौ सामान्यविशेषौ अपरोक्षौ अवभासेते तथा इहापि प्रतिभासात्... तस्माद् अपरोक्षसंवित्सद्भावादेव पुरोवर्तिरजतसत्ता अभ्युपगन्तव्या''** (वि.प्र.सं.वर्ण.१।-अनु.४८) इति भ्रमस्थलेऽपि सम्यक्स्थलवत् अपरोक्षतां प्रतिपादयन्तो न सर्वथा इन्द्रियाविषयत्वं मेनिरे. यद्यपि भामतीकारेण प्रौढवादावलम्बनेन भाष्ये कृतं समाधानम् इदम् इति विवृतं तथापि स प्रौढवादः नैतस्मिन् विषये किन्तु चिदात्मनः परोक्षताभ्युपगमएव इति सुस्पष्टम्. शिष्टन्तु सर्वं **''नच उत्पन्नं रजतम् अविद्यापरिणामभूतं कथं न चक्षुर्गोचरः''** इत्यारभ्य
**''प्रतिभासमात्रशरीरं प्रमाणज्ञानबाध्यम् इति विवेकः''** इत्यन्तं सत्तात्रैविध्यवादम् अवलम्ब्यैव द्विवेदिमहाभागानां समाधानं तत्तु युक्तमेवेति न कापि विवक्षा तत्र.

यत्पुनः 'ख्यातिवाद'काराणां श्रीपुरुषोत्तमानां श्रीपारसनाथमहाभागैः —

**''मिथ्याख्यानेन उपपत्तौ अनिर्वचनीयरजतोत्पत्तिः व्यर्था इति न सम्यक्. विषयं विना विज्ञानानुपपत्तेः, साकारवादापत्तेः च. ''पुरोवर्तिरजतं पश्यामि'' इति प्रत्ययात् च, तवापि मते आचार्यैः रजतोत्पत्तेः अङ्गीकारात् च. तथाहि आचार्यवचनं 'रजतन्तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च' इति. मायामोहिता बुद्धिः रजतम् उत्पाद्य तद् गोचरीकरोति इति**

**बालकृष्णप्रभृत्याचार्यैः असकृदुक्तेः. यदि बुद्धिमात्रं, रजतं न उत्पन्नं तर्हि साकारवादापत्तेः आचार्यवचनविरोधः च.''**

इति समालोचनं कृतं तत्र किञ्चित् पृष्टव्यं भवति तथाहि अद्वैतिनां मते 'प्रातिभासिकं रजतम्' इत्यस्य किं प्रतिभासजन्यं वा? प्रतिभासजनकं वा? प्रतिभाससमकालं वा? प्रतिभासकालाव्यधिकरणं वा? कोऽर्थो अभिप्रेतः? तत्र आद्ये ''**विषयं विना विज्ञानानुपपत्तेः, साकारवादापत्तेः च**'' इति आपत्तिरेव अनापादनीया स्याद् विषयं विनैव जायमानेन प्रतिभासेन विषयोत्पादनात्. द्वितीयेतु अधिष्ठानयाथार्थ्यज्ञानेन विक्षेपबुद्धिनिवृत्तावपि रजतविक्षेपानिवृत्तिप्रसङ्गः, विषयस्य प्रतिभासजनकत्वादेव. तृतीयचतुर्थयोस्तु प्रतीत्यसमुत्पादवादएव विवर्तवादस्य पर्यवसानं वज्रलेपायितं स्यात्. वाल्लभैस्तु ''इदं रजतम्'' इति प्रमास्थले बहिष्ठरजतस्य समनस्कनेत्रानुग्राहकबुद्धिवृत्तिग्राह्यत्वं भ्रमस्थलेतु न केवलं बुद्धिग्राह्यत्वम् अपितु व्यामोहकमायया बुद्धौ उत्पादितत्वं मायामोहितबुद्ध्या च ग्राह्यत्वम् इति अङ्गीकारात् श्रीपारसनाथमहाभागोक्ता ''**यदि बुद्धिमात्रं, रजतं न उत्पन्नं तर्हि साकारवादापत्तेः आचार्यवचनविरोधः च**'' इति आपत्तिः असंलग्नार्हैव. यतश्च आचार्यचरणैरेव ''**बुद्ध्या बहिर्विषयोत्पादनासम्भवाद्**'' (द्र.प्र.र.ख्या.वि.पृ.८७ इत्यत्रोद्धृतं सुबोधिनीवचनं-१०।४।२०) इति स्वाशयस्फोरणेन आचार्यवचनविरोधापत्तिस्तु अप्रासङ्गिक्येव. नापि साकारवादापत्तिः, यदि एतेन वादेन बौद्धानां विज्ञानवादीया आत्मख्यातिः अभिप्रेता चेत्.

ततो द्विवेदिमहाभागैः या ''**मायासृष्टं सद्वस्तुसदृशं मायिकं वस्तु यद् गृह्यते, तच्च ग्रहणम् इन्द्रियेण तर्हि मायिकरजतस्यापि चक्षुषा ग्रहणं प्रसज्येत. तथाच सिद्धान्तहानिः. यदि पुरोवर्तिवस्तुमात्रं चक्षुषा गृह्यते तर्हि तत्सदृशं मायिकं रजतं कथं गृह्येत?**'' इति आपत्तिः समुद्भाविता सा ख्यातिविवेकएव श्रीबालकृष्णभट्टैः प्रस्थानरत्नाकरे च श्रीपुरुषोत्तमैरपि समाहितपूर्वैव. तथाहि यथा बाह्यार्थविषयकं सर्वमपि निर्विकल्पकं सामान्यज्ञानं समनस्केन्द्रियेण जन्यते तथा प्रमाभ्रमसंशयादि सर्वमपि सविकल्पकं विशेषज्ञानं बुद्ध्यैव जन्यते इति. तस्माद् अभिमतप्रक्रियानुरोधेन न मायिकरजतस्य चक्षुषा ग्रहणं नवा तदग्रहणासम्भवोऽपि. यत्तु द्विवेदिमहाभागैः ''**अथ न चक्षुषा अपितु उत्पादिकयैव**

**बुद्ध्या विषयीक्रियते. तदपि न विचारसहं, बुद्धिः यदि ज्ञानभिन्ना अहङ्कारविशेषरूपा जडा तदा कथं रजतं गोचरयिष्यति? अथ विज्ञानरूपैव तदा चिद्रूपत्वात् कथं रजतम् उत्पादयिष्यति? मायामोहिता इति चेत् तर्हि एवं वाच्यं—'मायामोहिता चिद्रूपा बुद्धिः रजतम् उत्पाद्य गोचरयति' इति. तथाच सिद्धान्तहानिः, बुद्धेः ज्ञानसाधनत्वाङ्गीकाराद्''** इति उच्यते, तत्र शांकरवाल्लभयोः उभयोरपि वृत्तिवादिनोः समएव दोषः तत्परिहारः चापि. नहि बुद्धिवृत्तिः जडेति सा विषयान् न गोचरयति नापि विषयान् गोचरयतीति सा वृत्तिः चिद्रूपेति समानाभ्युपगतिः. द्वयोरपि मतयोः वह्न्ययोगोलकन्यायेन एकत्र इतरेतरतादात्म्यभावापन्ना इतरत्रतु तथाविधतादात्म्याध्यासरूपा वेति विशेषः. नापि **''बुद्धिः यदि भ्रमजनिका तर्हि प्रमायाः उत्पत्तिः न स्यात्. अतो मायैव मुख्यो भ्रमहेतुः वक्तव्यः''** इति वक्तुं युक्तं, यतोहि मायावादेऽपि अघटितघटनापटीयस्यपि माया न बुद्धिम् अघटयित्वैव भ्रमम् उत्पादयतीति. सिद्धाहि मायाबुद्ध्योः उभयोरपि इतरेतरसहकारितैव उभयत्र. मायाच वाल्लभमते न **'अज्ञानरूपा'** किन्तु जीवात्मनि अज्ञानजनिका परमात्मनो विलक्षणा शक्तिः. यदुक्तं **'' 'यदिदं मनसा वाचा' इत्यादिभागवतवचनार्थविमर्शे वाल्लभमतेतु चक्षुषा गृह्यमाणं पुरोवर्तिपदार्थोऽपि मिथ्या स्यात्. एवं घटपटादेरपि मिथ्यात्वापत्तेः. उक्तवाक्यं वाल्लभमते तदा सङ्गतं स्यात् यद्येवं उच्येत 'यदिदं बुद्ध्या गृह्यते' इत्यादि''** तस्यापि समाधानं ख्यातिविवेके पृ.८७तः आरभ्य पृ.८८पर्यन्तम् उपलभ्यतएव. तस्माद् मायावादिनां द्वैतं ब्रह्मणि ब्रह्मज्ञानबाध्यम् अद्वैतन्तु द्वैतात्यन्ताभावोपलक्षितं सन्मात्रं निर्विशेषं ब्रह्मैव केवलं, वाल्लभमतेतु द्वैतं न ब्रह्मज्ञानबाध्यं तथैव अद्वैतमपि न द्वैतं नापि द्वैताभावः किन्तु द्वैतविरुद्धा काचन सम्पत्. यथा मिथ्यात्वलक्षणे मायावादिभिः ''सद्भिन्नत्वे सति असद्भिन्नत्वे सति सदसद्भिन्नत्वम्'' इति अङ्गीक्रियते तथैव ब्रह्मवादिभिरस्माभिरपि **''ऐतदात्म्यम् इदं सर्वम्''** इति श्रुत्यनुरोधेन तादात्म्यस्य/ऐतदात्म्यस्य वा लक्षणे ''द्वित्वात्यन्ताभावरहितत्वे सति एकत्वात्यन्ताभावरहितत्वे सति द्वित्वैकत्वोभयाभावरहितत्वं'' वा ''एकत्वात्यन्ताभाववदवृत्तिधर्मवत्त्व''रूपं वा अद्वैतम् अङ्गीक्रियते. तस्मात् **''परमेश्वरसत्तातिरिक्तसत्ताकत्वाभावस्तु उभयोः परमेश्वरातिरिक्ते समानम्. जगत् परमेश्वररूपो विषयी, तदतिरिक्तः संसारो मायिकः. इहतु**

**शुद्धबुद्धमुक्तचैतन्यमात्राद् घटादिप्रपञ्चोऽपि मायिकः इति. किञ्च मायिकरजतादिसमुत्पादेऽपि परमेश्वरेच्छा कारणम् इति वक्तव्यमेव, तदिच्छयैव व्यामोहोत्पादात्. अतो द्विधा सृष्टिकल्पनं गौरवग्रस्तं लाघवात् मायैव ईश्वराधीना तदिच्छया जगत् निर्मातु''** इत्यत्र वाल्लभानाम् अभिप्रायस्तु एवं निरूपयितुं शक्यते यत् मायावादिमते नहि माया ब्रह्मानधिष्ठिता जगद्भ्रमोत्पादने स्वतःशक्ता नच ब्रह्मापि मायां विना स्वतएव जगदुत्पत्त्यै अलं, स्वीकृतन्तु ब्रह्मणो ''एकमेवाद्वितीयं'' वचनानुरोधेन अनन्यत्वमपि. तस्मात् कारणद्वयगौरवग्रस्तमायावादापेक्षया अनन्यब्रह्ममात्रकारणत्वाङ्गीकारेण ब्रह्मवादएव विचारलाघवम्.

यच्चापि प्रतिपादितं द्विवेदिमहाभागैः **''व्यावहारिकज्ञानप्रमात्मकज्ञानाभ्यां च 'इदं रजतम्' इत्यादिज्ञाने विशेषो वक्तव्यः? अन्यथा तेषामपि प्रमात्वं न स्यात्. तेषां ज्ञानानां प्रमात्वेन अबाधितविषयकत्वात् परमात्मनि घटत्वादिभेदबुद्धयोऽपि मोक्षजनिका स्युः''** तत्र भगवद्गीतायां भगवत्येव विश्वरूपदर्शनफलश्रुतौ **''सुदुर्दर्शमिदं रूपं दृष्टवानसि''** इत्यारभ्य **''भक्त्यात्वनन्यया शक्य अहम् <u>एवंविधो</u> अर्जुन! <u>ज्ञातुं द्रष्टुं च तत्त्वेन</u> प्रवेष्टुं च''** (भग.गीता.११।५२-५५) इति वचनानुरोधाद् एवंविधभेदबुद्ध्या नाम निखिलं विश्वं परमात्मनि परमात्मनैव सृष्टं स्थितं लीयमानं चेति तत्त्वतो ज्ञातुं दिव्यचक्षुषा च द्रष्टुम् अन्तेतु प्रवेष्टुमपि तदैव शक्यं यदा अनन्या भक्तिः तस्मिन् स्याद्. तस्माद् भगवत्प्रदत्तदिव्यदृष्ट्यातु घटत्वादिभेदबुद्धिरपि मोक्षजनिका भवितुमर्हत्येव. इह दिव्यचक्षुप्रदाने न तावद् भगवति विश्वं नासीद् नास्ति नापि भविष्यति इत्येतादृशं बाधज्ञानं वर्णितं किमुत निखिलमपि तत्रैव आसीत् तत्रैव अस्ति तत्रैव च भविष्यति इति ऐतदात्म्यज्ञानमेव श्रीकण्ठोक्तं समुपलभ्यते. तस्मादपि उपपद्यतेएव अयं ब्रह्मवादः.

ख्यातिवादकृतां श्रीपुरुषोत्तमानां **''संस्कारेण स्मृतिवत् संस्कारप्राबल्येन उद्बोधकादिसामग्रीप्राबल्येन वा मिथ्याख्यानस्यापि उपपत्तौ अप्रयोजकत्वाद् गुरुत्वात् च अनिर्वचनीयरजताङ्गीकारस्य व्यर्थत्वाद्''** इत्युक्तौ द्विवेदिमहाभागैः यत् **''संस्कारप्राबल्यात् प्रबलस्मृतिरेव भवन्ती दृश्यते. अन्यथा प्रबलस्मृतिः**

निर्हेतुका स्यात्. संस्कारप्राबल्याद् भ्रमएव भवेद् न दृढा स्मृतिः. तस्माद् यथानुभवं दोषोऽपि सहकारिकारणं वक्तव्यम्, अन्यथा अदुष्टसाधनस्यापि भ्रमप्रसङ्गात्. किञ्च, संस्कारप्राबल्यस्य दोषत्वमपि अन्यथाकारत्वरूपं प्रतिबन्धकत्वरूपं वा न सङ्घटते'' इति दोषोद्भावनं कृतं तत्र मन्ये श्रीपुरुषोत्तमानां 'वा'निपातप्रयोगो न विकल्पार्थको अपितु समुच्चयार्थको वा अनवक्लृप्त्यर्थको वा बोध्यः. तस्मात् न केवलं संस्कारप्राबल्यं नापि केवलम् उद्बोधकादिसामग्रीप्राबल्यं भ्रमहेतुतया श्रीपुरुषोत्तमाः आपादयन्ति प्रत्युत तदुभयप्राबल्यं तदन्यतरप्राबल्यं वेति निष्कर्षः. तस्मात् ''संस्कारप्राबल्यात् प्रबलस्मृतिरेव भवन्ती दृश्यते. अन्यथा प्रबलस्मृतिः निर्हेतुका स्यात्. संस्कारप्राबल्याद् भ्रमएव भवेद् न दृढा स्मृतिः. तस्माद् यथानुभवं दोषोऽपि सहकारिकारणं वक्तव्यम्, अन्यथा अदुष्टसाधनस्यापि भ्रमप्रसङ्गाद्'' इत्यापत्तिः अनुचितैव. यत्पुनः ''किञ्च संस्कारप्राबल्यस्य दोषत्वमपि अन्यथाकारत्वरूपं प्रतिबन्धकत्वरूपं वा न सङ्घटते'' इति यद् उक्तं तत्तु भगवत्पादानां तद्व्याख्याकाराणां च—

> ''आह कोयम् अध्यासो नामेति उच्यते 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः''(अध्यासभाष्यं), ''तत्र 'परत्र' इत्युक्ते अर्थात् परस्य अवभासमानता सिद्धा. तस्य विशेषणं 'स्मृतिरूपत्वम्' इति... स्मर्यमाणरूपमिव रूपं यस्य न पुनः स्मर्यतएव, स्पष्टं पुरोवस्थिततत्वाभासनात्. 'पूर्वदृष्टावभासः' इति उपपत्तिः स्मृतिरूपत्वे. नहि पूर्वम् अदृष्टस्य शुक्तिसम्प्रयोगे रजतम् अवभासते... कथं पुनः स्मृतिरूपत्वं? पूर्वप्रमाणद्वारसमुत्थत्वात्. नहि असम्प्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थत्वम् अन्तरेण समुद्भवः सम्भवति(पञ्चपादिका), ''अर्थाभावे कथम् अपरोक्षा संविद्? इति चेत् न, यथासंविदवभासाधीनत्वाद् अर्थसत्तानिश्चयस्य. नहि अर्थसत्तानिश्चयाधीनः संवित्सत्तानिश्चयः''(पं.पा.विवरणम्), ''अवसन्नो अवमतो वा भासो अवभासः. प्रत्ययान्तरबाधश्च अस्य अवसादो

> अवमानो वा. तस्य इदम् उपव्याख्यानं **'पूर्वदृष्ट'** इति... **मिथ्याप्रत्ययः च आरोपविषयारोपरीणयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेन आरोपणीयम् उपस्थापयति... तत्र पूर्वदृष्टं स्वरूपेण सदपि आरोपणीयतया अनिर्वाच्यमिति अनृतम्''** (भामती).

इत्येवमादिभिः अनिर्वचनीयख्यातिवादिनां वचनैरपि श्रीपुरुषोत्तमोक्तस्यैव उपोद्बलनात् न युक्तम्. नहि प्रतिभासमात्रशरीरस्य सतो वा, असतो वा, सदसद्विलक्षणस्य मिथ्याभूतस्य वा रजतस्य स्वावभासहेतुता युक्तेति न अनिर्वनीयख्यातिहेतुतया अनिर्वनीयरजतसिद्धिः सम्भवदुक्तिका. मिथ्यावभासस्यतु मिथ्यार्थोत्पत्तिहेतुता किल अपरिहार्यैव. सच मिथ्यावभासः परत्र पूर्वदृष्टावभासः स्मृतिरूपः चेत् श्रीपुरुषोत्तमानां **''संस्कारेण स्मृतिवत् संस्कारप्राबल्येन उद्बोधकादिसामग्रीप्राबल्येन वा मिथ्याख्यानस्यापि उपपत्तौ अप्रयोजकत्वाद् गुरुत्वात् च अनिर्वचनीयरजताङ्गीकारस्य व्यर्थत्वाद्''** इति वाचोयुक्तिः युक्ततरैव स्यात्. क्लृप्तैरेव कारणैः भ्रान्तिनिर्वाहे अक्लृप्तकारणकल्पनायाः दोषग्रस्तत्वात्. नहि रजतानिर्वचनीयता रजतावभासकालसमानाधिकरणा अवबुद्ध्यते, **''असच्चेन्न प्रतीयेत सच्चेन्न बाध्येत प्रतीयते च बाध्यते च तस्मात् सदसद्विलक्षणम् अनिर्वचनीयं रजतम्'' इति अन्यथानुपपत्तिलभ्यैव सा. तस्माद् नहि अनिर्वचनीयं रजतम् अनिर्वचनीयख्यात्यालम्बनतया तद्धेतुतया वा सिद्ध्यति. प्रतीतिबाधा-न्यथानुपपत्त्यातु सिद्ध्यद् भ्रान्तिज्ञानस्य प्रथमकोट्यां न स्वप्रतीतिकालसिद्धा. नापि तद्द्वितीयकोट्यां बाधज्ञानकालसिद्धा वा, ''उत्तरकालीनो 'नास्त्यत्र रजतम्' इति प्रत्ययः परमार्थरजतविषयः''** (विव.प्रमे.संग्र.वर्ण.१।अनु.४७/ ) इति अभ्युगमात्. तृतीयस्यान्तु प्रतीतिबाधोभयानुव्यवसायकोट्यां भासमानं सत्, लाघवात् पूर्वदृष्टस्य सतो रजतस्यैव अत्यन्ताभावसाधकं भवद् न त्रैकालिकनिषेधप्रतियो-गिताम् आवहति, येन अनिर्वचनीयत्वम् आत्मनः प्रकाशयेत्.

**''निर्गमेण चैतन्यत्रयाभेदाङ्गीकारोऽपि व्यापकात्मवादमेव आत्मवादं च निरुणद्धि''** इति आक्षेपनिरसनाय द्विवेदिमहाभागाः कथयन्ति **''तदपि अनालोचितपराभिसन्धितामात्रम्. सर्वत्र व्यापकस्य चैतन्यरूपस्य ब्रह्मणो**

**अन्तःकरणे वृत्तौ घटादौ च तदावरणस्य अज्ञानशक्तिरूपस्य बहिर्देशे निर्गतवृत्त्या आवरणभङ्गमात्रं क्रियते. वस्तुतो अभिन्नस्यापि चैतन्यस्य अन्तःकरणादिवृत्त्यादिभेदाद् भेदोपचारात्. तस्मान् न अस्ति व्यापकात्मवादविरोधः''** इति तत्र इदं पृष्टव्यं भवति : प्रातिभासिकं रजतं न तावत् प्रमात्रवच्छिन्नचैतन्यभास्यं, नच विषयावच्छिन्नचैतन्यभास्यं, नापि चक्षुःद्वारा निर्गतप्रमाणवृत्त्यच्छिन्नचैतन्यभास्यं, तस्य साक्षिभास्यत्वाभ्युपगमात्. साक्षिचैतन्यस्य व्यापकत्वात् सर्वदा सर्वत्र विद्यमानत्वात् च एवमपि ऐक्याद् उपाधिमात्रेण तत्र भेदोपचाराद् भ्रान्तिज्ञानात् पूर्वमपि तत्रैव रजतस्य, व्यावहारिकी वा प्रातिभासिकी वा सत्तास्वीकारादपि, विद्यमानत्वात् सार्वदिकी रजतभ्रान्तिः दुष्परिहरा. अथ कादाचित्कत्वोपपत्तये औपाधिकचैतन्यत्रयस्य हेतुताकल्पने तेनैव तत् सिद्ध्यतु किमन्तर्गडुना साक्षिणा ? इति हेतोः श्रीपुरुषोत्तमानां वचनं **''व्यापकात्मवादमेव निरुणद्धि''** इति. यद्यपि वाल्लभैरपि करणदोषस्य हेतुत्वम् अङ्गीकृतं तथापि न चतुर्थकोटिरूपम् अनिर्वचनीयरजतं स्वीकृत्य स्वीकर्तुं वेति तत्रैव दोषाणाम् अन्यथासिद्धिप्रदर्शनाय न सर्वथैव दोषानङ्गीकरणायैव.

यत्तु **'अन्यख्याति'पदेन यदि पुरोवर्तिनो अन्यस्य ख्यातिः इति अर्थः, तर्हि सर्वे ख्यातिवादिनः पुरोवर्तिपदार्थाद् अन्यस्यैव ख्यातिं स्वीकुर्वन्ति. अतो नामापि न विशेषाभिधायकम् अस्ति''** तत्र इदम् अवधेयं भवति नहि वेदान्तशास्त्रं अनन्योत्प्रेक्षितविलक्षणवस्तूत्प्रेक्षणार्थं प्रवृत्तं किमुत शास्त्रव्याख्यानार्थमेव यथाहि भगवत्पादाअपि सुष्ठूपपादयन्ति **''वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणां वेदान्तवाक्यानि हि सूत्रैः उदाहृत्य विचार्यन्ते. वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्ता''** (ब्र.सू.भा.१।१।२). ततश्च भगवत्पादैः अनुमानादिप्रमाणान्तरनिर्वृत्ता वेदान्तवाक्यार्थावगतिः नाङ्गीक्रियतइति वाल्लभैः आत्मवैलक्षण्यख्यापनाय वेदान्तवाक्यार्थावगति अनुमानादिप्रमाणान्तरनिर्वृत्तैव अङ्गीकरणीया इति निर्बन्धो! वेदान्तशास्त्रे हि ब्रह्मैव जिज्ञास्यते न विलक्षणं वस्तु! ब्रह्मणः **''तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति''** श्रुत्युक्तरीत्या सर्वेष्वपि भासमानेषु पदार्थेषु सत्त्वेन सामान्यलक्षणवत्त्वात् सर्वेषु भासमानवस्तुसाक्षिभूतचैतन्येषु चित्त्वेनापि सामान्यलक्षणवत्त्वात्, सर्वेषु भासमानेषु सुखेषु आनन्दत्वेनापि सामान्यलक्षणवत्त्वात् इति न किञ्चिदेतद्.

मङ्गलश्लोके **''निवर्तते च यद्बोधाद्''**इति उक्तम् तत् कथं सङ्गच्छेत? इति प्रश्ने द्विवेदिमहाभागाः वदन्ति **''नहि भगवद्बोधादेव रजतं निर्वतते अपितु 'न इदं रजतं शुक्तिः इयम्' इत्यादिविशिष्टप्रमाज्ञानादपि इति सर्वानुभवसिद्धम्. यदिच प्रकृतं जगत् सर्वं भगवत्स्वरूपमेव इति मन्यसे तदापि न स्वरूपेण भगवद्रूपा शुक्तिः रजतस्य निवर्तिका अपितु साक्षात्कृतैव. साक्षात्कृतापि शुक्तिः तेनैव न भगवत्त्वेनैव. यद्विषयकम् अज्ञानं यदधिकरणकं यदवच्छिन्नं तादृशेनैव ज्ञानेन निवर्तेत. अन्यथा घटादिज्ञानादपि रजतज्ञानं निवर्तेत, तस्यापि भगवद्विषयकत्वात्. तस्माद् शुक्तित्वेन रजताभावत्वेन वा अधिष्ठानसाक्षात्कारएव निवर्तकः''** इति तत्र व्यावहारिकेषु भ्रमेषु 'यद्बोधाद्' इत्यस्य न भगवद्विषयकबोधाद् इति अर्थः किन्तु **''सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिः ज्ञानम् अपोहनं च''** (भग.गीता.१५।१५) इति भगवद्वचनसिद्धाद् भगवत्प्रदत्ततत्तदधिष्ठानविषयकज्ञानाद् इत्येव अर्थः. पारमात्मिकेषु विषयेषुतु 'यद्बोधाद्' इत्यत्र यस्य भगवतो बोधाद् इत्यप्यर्थो युक्ततरएव.

किञ्च अन्यख्यातिवादिभिः **तद् रजतं किं सद् असद् उभयं वा?** इति प्रश्नस्य समाधानम् इदमेव दातव्यं यत् **''नासतो विद्यते भावो नाभावो विद्यते सतः''** (भग.गीता.२।१६) यद् यत्र भगवल्लीलेच्छया तिरोहितं तस्य तत्र प्रतीतिः भ्रान्तिः यद् यत्र न तिरोहितं तस्य तत्र प्रतीतिस्तु प्रमैव. प्रमाभ्रमयोः उभयोरपि विषयस्तु सन्नेव न जातु असन् नापि सदसद्विलक्षणः. केवलाद्वैतवादिनां मायेव अस्माकं ब्रह्मैव अघटितघटनापटु कर्तुम् अकर्तुम् अन्यथाकर्तुं च समर्थम्! इति किम् इह अनुपपद्येत? अतोऽपि अनिर्वचनीयं रजतं न मन्तव्यं, व्यामोहिकया भगवन्मायया परत्र पूर्वदृष्टस्य अन्यस्य अवभासरूपायाः स्मृतिरूपायाः अन्यख्यातेः निष्प्रत्यूहत्वाद् अनिर्वचनीयख्यातेश्च अनावश्यकत्वादपि.

इति सर्वशास्त्रविचारसरणीप्रचारप्रवर्धने बद्धादरैः वाराणसेय-सम्पूर्णानन्द-विश्वविद्यालये वेदान्तविभागाध्यक्षपदम् अलंकुर्वाणैः श्रीपारसनाथमहाभागैः अन्यख्या-त्यनिर्वचनीयख्यात्योः तुलनात्मकविमर्शे अन्यख्यात्युपरि स्वतएव सम्भावितानाम् आक्षेपाणां स्वयमेव यद्यपि निरसनौदार्यस्य प्रकाशनं कृतमेव, येन वयं शुद्धाद्वैतवादिनो

स्वकीयम् अतीवाधमर्ण्यं विज्ञापयितुं विवशीकृताअपि, स्वसम्प्रदायदृष्ट्या यत्किञ्चिद् विवक्षितम् इह आसीत् तदेकनिरूपणप्रयोजनम् इदं संगोष्ठ्युत्तरलेखनम् इह सम्पूरयामि.



# चर्चा

## अन्यख्यात्यन्यथाख्याती

### डॉ. श्रीपारसनाथ द्विवेदी

**के.ई.देवनाथन् :** अनिर्वचनीयख्यातिविषये अनिर्वचनीयो रजतादिपदार्थो जायते इति अङ्गीक्रियते. तत्र अनिर्वचनीयं रजतं पुरोवर्तिनि शुक्त्यविच्छिन्नचैतन्ये यद् जायते तत्तु साक्षिभास्यम् इति स्वीक्रियते. तर्हि तन्मूलभूता या अविद्या 'माया'सञ्ज्ञिता उपादानभूता मायापि साक्षिभास्यैव भवति. इदानीं, ''रजतं जानामि'' इति साक्षिणि यत् रजतवृत्तिः भासते सातु भ्रमः. तर्हि साक्षी कुतो भ्रमो न भवति? अनिर्वचनीयाविद्याविषयकत्वात् साक्षिणः कुतो भ्रमत्वं नास्ति ?

**पारसनाथ द्विवेदी :** साक्षीतु चैतन्यं साक्षाद् द्रष्टृ विद्याविद्योभयोरपि. अविद्याविषयकत्वं न भ्रमत्वे प्रयोजकम् अपितु अविद्यादोषादि-जन्यत्वम्.

**के.ई.देवनाथन् :** तत्तु ज्ञायते. तद् अनिर्वचनीयं पदार्थं विषयीकरोति. को भेदो रजतविषयकसाक्षिणः? रजतवियषकं ज्ञानं भ्रमः चेद् रजताद्यनिर्वचनीयविषयकं साक्षिचैतन्यं कुतो भ्रमो न ?

**पारसनाथ द्विवेदी :** ज्ञाततया अज्ञाततया वा सर्वं साक्षिभास्यम् इति सिद्धान्तः. न केवलम् अनिर्वचनीयं विषयमेव प्रकाशयति. सर्वमेव प्रकाशयति किन्तु वृत्त्याद्यपेक्षया यद् भास्यते तत् साक्षिभास्यम्. तदनपेक्षया यद् भास्यते तत् केवलसाक्षिभास्यम् उक्तम्.

**के.ई.देवनाथन् :** तथा नास्ति. शुक्त्यादिकं ज्ञाततया...

**पारसनाथ द्विवेदी :** केवलसाक्षिभास्यम् अन्यत्. यत्र वृत्त्यादिकम् अपेक्ष्य साक्षादेव साक्षिणा भासते तद् साक्षिभास्यम् इत्थं सर्वमेव

साक्षिणा भासते.

**के.ई.देवनाथन् :** भ्रमपदार्थः कः ? रजतविषयकं ज्ञानं भ्रमः इति उच्यते. तर्हि रजतमूलाविद्याविषयकं ज्ञानं भ्रमः कुतो न भवति ?

**पारसनाथ द्विवेदी :** भ्रमो अविद्यावृत्तिः नतु अन्तःकरणवृत्तिः. बुद्धिवृत्तिः भ्रमो न अङ्गीक्रियते; अपितु, अविद्यायाः परिणामरूपः. अविद्यैव रजताकारेण रजतकारेण च परिणमते. अतः सर्वएव भ्रमः आविद्यकः नतु बुद्धिवृत्तिः. बुद्धिः अत्र अन्तःकरणं ...अन्तःकरणवृत्तिः स्यात् तर्हि प्रमाणं स्यात्. अतो अविद्यापरिणामएव भ्रमत्वविषयत्वम्.

**के.ई.देवनाथन् :** मया एवं ज्ञातम् अस्ति : अनिर्वचनीयविषयकत्वं भ्रमत्वे न प्रयोजकम्.

**पारसनाथ द्विवेदी :** नैव प्रयोजकम्.

**के.ई.देवनाथन् :** आविद्यकत्वं भ्रमत्वे प्रयोजकम्.

**पारसनाथ द्विवेदी :** भ्रमत्वे प्रयोजकम् अविद्या.

**के.ई.देवनाथन् :** 'प्रयोजकं'नाम यज् ज्ञानम् अनिर्वचनीयविषयकं तत्तु भ्रमः इति न नियमः. भवताम् अनुवादः क्रियते मया. अनिर्वचनीयविषयकत्वादेव इदं ज्ञानं भ्रमः इति न वक्तुं शक्यते.

**पारसनाथ द्विवेदी :** भ्रमः पृथक् प्रमा पृथक्.

**के.ई.देवनाथन् :** अवगतम्. अनिर्वचनीयविषकत्वं न प्रयोजकम्.

**सुधांशुशेखर शास्त्री :** रजतं भ्रमात्मकम्. अतो रजतविषयकत्वेन रजतज्ञानस्यापि भ्रमात्मकत्वम्. तथैव रजतविषयकत्वात् साक्षिणोऽपि भ्रमत्वं कुतो नास्ति इति प्रश्नः.

**पारसनाथ द्विवेदी :** साक्षी चिद्रूपः. तत्र भ्रमत्वं नास्ति. नहि रजतविषयकत्वादेव रजतज्ञानस्य भमत्वं स्वीक्रियते येन तथा प्रश्नो भवेत् अपितु अविद्यापरिणामत्वदोषजन्यत्वमपि हेतुः.

**सुधांशुशेखर शास्त्री :** अद्वैतिनां मते किञ्चिदपि यदि विशिष्टं स्यात् तर्हि तद्विशिष्टरूपत्वेन तस्य भ्रमत्वाङ्गीकारेऽपि स्वरूपेण पारमार्थि-

कत्वं वर्तते. अतो नास्ति कश्चित् तत्र विवाद: इति मम मति:. ...त्युपहितत्वेन ब्रह्मणोऽपि मिथ्यात्वम् अङ्गीक्रियते उपहितत्वेन रूपेण. स्वरूपत: तस्य सत्यत्वम्. तथैव अत्रापि यदि भ्रमविषयकत्वेन यदि मिथ्यात्वम् आपाद्यते तर्हि इष्टापत्ति: किन्तु स्वरूपेण साक्षिण: सत्यत्वम्.

**के.ई.देवनाथन् :** सर्वमेव वस्तुजातं...

**बलिराम शुक्ल :** मम एक: प्रश्न:. यदि अविद्योपादानकत्वम् अनिर्वचनीयरजते अस्ति तथैव सत्यरजतेऽपि अविद्योपादानकत्वं स्वीक्रियते अद्वैतवादिभि:. तर्हि व्यवहारे अनयो: द्वयो: ज्ञानयो: भेद: कथं कर्तुं शक्यते इति मम प्रश्न:.

**पारसनाथ द्विवेदी :** भेदो अस्ति. तत्र अस्ति अविद्याद्वयी मूलाविद्या तूलाविद्या चेति. मूलाविद्या व्यावहारिकवस्तूपादानभूता. अनुभूयमानेषु पदार्थेषु केचन पदार्था: व्यावहारिका: इति अङ्गीक्रियते केचन पदार्था: प्रातिभासिका: इति च. तत्र लक्षणं क्रियते, ब्रह्मप्रमातिरिक्ताबाध्यत्वं व्यवहारिकत्वम्. तत्र वास्तविकरज-तस्य लौकिक-परमार्थभूतस्य नहि ‘‘नेदं रजतम्’’इत्याकारेण ज्ञानेन बाधो दृश्यते अपितु ब्रह्मप्रमया बाध्यते. तस्मात् तत्र व्यहारिकत्वम्. अत्रच पुरोवर्तिनं यत् प्रतिभासिकं रजतं तस्य ‘‘नेदं रजतम्’’ अथवा ‘‘इयं शुक्ति:’’ इत्याकारकसाक्षात्कृतज्ञानेन बाधो दृश्यते. अत: तत्र प्रातिभासिकत्वम्. प्रतिभासमात्रशरीरत्वाद् उत्तरकालेन बाधित-त्वात् च ब्रह्मप्रमातिरिक्तप्रमया बाध्यमानत्वात् च. उभयो: भेदो अद्वैतसिद्धान्ते अङ्गीक्रियते. यद्यपि तदपि आविद्यकम्. अविद्यामयत्वे मायामयत्वे नास्ति नियम: किन्तु तथाविधबाधाबाधाभ्यां किञ्चित्कालस्थायि प्रातिभासिकम्. तच्च मोक्षपर्यन्तं स्थायि. एवम् अस्ति.

**सुधांशुशेखर शास्त्री :** परिभाषायाम् अन्यदपि समाधानम्. आगन्तुकदोषजन्यत्वं प्रातिभासिके, अनादिदोषजन्यत्वं व्यावहारिके इति तत्र वर्तते.

**विन्ध्येश्वरीप्रसाद :** अनिर्वचनीयख्यातौ यथा भुजङ्गो भाति कस्यचित् कृते भारामाला इत्यादिकमपि. तर्हि आविद्यकी वासना पृथक् - पृथक् कथं व्यवहर्तुं शक्यते ?

**पारसनाथ द्विवेदी :** तत्र रागादिरपि हेतु:. अन्ये सादृश्य-चाकचक्यादिदोष-रागादिसंस्कारहेतुवशात् कस्याञ्चिदेव शुक्तौ कस्यचिद् रजतस्य भ्रम:. कस्याञ्चिद् अन्यस्य उक्तहेतुवशात् रज्जभारामालादिभ्रम: यत्र रजतस्यापि भ्रम:. दशविधानाम् पुरुषाणाम् दशविधमेव तत्र रजतं जायते नतु एकं रजतम्.

**विन्ध्येश्वरीप्रसाद :** तर्हि भ्रमस्य उपादानत्वेन किं गृह्यते ?

**पारसनाथ द्विवेदी :** अविद्या.

**विन्ध्येश्वरीप्रसाद :** तर्हि अविद्ययैव यदि कार्यं सेत्स्यति अन्यकारणस्य न आवश्यकता.

**पारसनाथ द्विवेदी :** प्रतिपुरुषम् अविद्याभेद:. ''शुक्तिं न जानामि'' इत्याकारकम् अज्ञानम् अविद्या. ''शुक्तिं न जानामि'' इत्याकरकम् अज्ञानं प्रतिपुरुषं भिद्यते. अत: ''शुक्तिं न जानामि'' इत्याकारिका या अविद्या शुक्त्यवच्छिन्नचैतन्यनिष्ठा सा प्रतिपुरुषं भिद्यते अतो यस्य-यस्य यादृशो अनुराग: सादृश्यं चाकचक्यादिदोष: तस्य-तस्य तथा प्रतीति: भवति. नहि एकैव अविद्या सर्वेषां कृते.

**प्रह्लादाचार :** ''इदं रजतम्''इति यो भ्रमो मिथ्यारजतज्ञानस्य सत्यरजतज्ञानस्य को विशेष: इति प्रश्न: तै: उद्भावित:, भवद्भिश्च समाधानं विहितम्. तूलाविद्योपादानकं रजतं हि 'मिथ्यारजतम्' उच्यते. मूलाविद्योपादानकं भवति सत्यं रजतम् इति अयं तयो: विशेष:. अपिच ब्रह्मेतरज्ञानेन बाध्यं भवति तूलाविद्योपादानकं रजतम्. ब्रह्मज्ञानमात्रबाध्यं भवति मूलाविद्योपादानकं रजतम्. अपिच आगन्तुकदोषन्यत्वम् अस्ति मिथ्यारजतस्य, अनागन्तुकदोषो 'मूलाविद्या'ख्यो दोष:. तादृशदोषजन्यत्वम् अस्ति सत्यरजतस्य इत्येवं रीत्या अनेके विशेषा: अनयो:

मध्ये सन्ति इति हेतोः भेदो वक्तुं शक्यते इति उक्तम्. मन्ये यद्यपि एते विशेषाः वस्तुस्वभावे किमपि वैचित्र्यं नैव आपादयन्ति. अद्वैतसिद्धान्तएव उभयोः मिथ्यात्वं स्वीकृतम्. पारमार्थिकसत्यत्वम् उभयोः नास्ति. उभयोरपि मिथ्यात्वमेव. मिथ्यात्वं च सद्विलक्षणत्वं वा प्रितिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिकत्वं वा ज्ञाननिवर्त्यत्वं वा. किंवा भवतु तत् सर्वं उभयत्रापि वर्तते. वस्तुतस्तु विश्वमिथ्यात्वसाध-कानुमाने शुक्ति-रजतमेव दृष्टान्तीक्रियते. अतः तदेव मिथ्यात्वम् अत्रापि स्वीकृतम् वर्तते. एवञ्च ये विशेषाः भवद्भिः प्रतिपादिताः सन्ति तैः विशेषैः वस्तुस्वभावे वैचित्र्यं नैव आपादितं वर्तते. किन्तु केचन विशेषाः कश्चन भ्रमः सद्यः निवर्तते, अपरो भ्रमो दीर्घकालानन्तरं निवर्तते. तावता तयोः भ्रमत्वं नास्ति इति न. भ्रमत्वम् उभयत्र वर्ततएव. अथापि केचन विशेषाः लक्षितुं शक्यते इत्येव भवताम् अभिप्रायः इति अहं मन्ये. अतो व्यावहारिकं रजतम् इति एकस्य व्यवहारः प्रातिभासिकं रजतम् इति अपरस्य व्यवहारः. एवं रीत्या लोके अनभूयमानं तयोः किमपि वैलक्षण्यं प्रतिपादयितुं शक्यते. वस्तुतस्तु उभयोरेव मिथ्यात्वं समानमेव. उभयोरपि ज्ञानयोः भ्रमत्वं अद्वैतसिद्धान्ते अङ्गीकृतं वर्ततएव इति मे मतिः. अथापि अस्माकं जिज्ञासाविषयीभूताः अन्ये केचिद् विषयाः सन्ति अत्र.

"चक्षुषा रजतं पश्यामि" इति अस्माकम् अनुभवः. मिथ्यारजतस्थलेऽपि एवम् अनुभवः. "रजतज्ञानम् इदं चाक्षुषम्" इत्येव अनुभवः. अस्य ज्ञानस्य बाधः कदापि नास्ति. "नेदं रजतम्"इति बाधानन्तरमपि मया चक्षुषा किमपि मिथ्या रजतं दृष्टम् इत्यत्र बाधो नास्ति परन्तु अद्वैतसिद्धान्ते अस्य ज्ञानस्य साक्षिरूपत्वम् अङ्गीकृतम्. इदं रजतं 'साक्षिग्राह्यम्' इति उच्यते. सत्यरजतस्थले

यथा सत्यस्य रजतस्य चाक्षुषत्वम् अनुभूयते मिथ्यारजतस्थलेऽपि तस्य रजतस्य चाक्षुषत्वम् अनुभूयते. अनुभवे विशेषः कोऽपि नास्ति. एवं सति एकस्य साक्षिसिद्धत्वम् अन्यस्य च चाक्षुषत्वं कथम् उपवर्ण्यते ? इति कश्चन प्रश्नः.

अन्यश्च प्रश्नो मन्ये अत्रैव अन्तर्गतः. अस्य ज्ञानस्य इन्द्रियसन्निकर्षजन्यत्वन्तु निराकृतं भवति यदि रजतस्य साक्षिग्राह्यत्वं स्वीक्रियते. शुक्तावेव इन्द्रियसन्निकर्षो जातः प्रातिभासिकस्य रजतस्य प्रतिभासमात्रस्वरूपत्वात् प्रतिभासस्य तु आन्तरत्वात् प्रातिभासिके रजते चक्षुरिन्द्रियसन्निकर्षः सर्वथा असम्भावितः. किन्तु साक्षिणा तद्रजतं ग्रह्यते इति वक्तुं शक्यम्. यतोहि प्रातिभासिकं रजतम् आन्तरं भवति. आन्तरस्य सुख-दुःखादेः यथा साक्षिग्राह्यत्वं तथा अस्यापि आविद्यकस्य रजतस्य साक्षिग्राह्यत्वं सर्वथा उपपन्नं भवति. अतः चक्षुःसन्निकर्षः असम्भावितो अस्मिन् आविद्यके रजते. अतः ''चक्षुषा इदं रजतं पश्यामि'' इत्येवम् अनुभवस्य का गतिः अद्वैतसिद्धान्ते ? इति प्रश्नः.

**पारसनाथ द्विवेदी :** चक्षुषा गोचरीकृतायां शुक्तौ. रजतं तादात्म्यापन्नम् इति हेतोः ''चक्षुषा रजतं पश्यामि'' इति भवति प्रत्ययः इति मया लिखितम्. ननु रजतं चक्षुगोचरः इति हेतोः चक्षुर्गोचरीभूतायां शुक्तौ रजतं तादात्म्यापन्नम् इदमर्थे तादात्म्यापन्नत्वादेव रजतं पश्यामि इति भवति प्रत्ययः.

**के.ई.देवनाथन् :** आचार्याः ! तादात्म्यापन्नत्वं व्यावहारिकरजते अनिर्वचनीयरजतस्य भवति.

**पारसनाथ द्विवेदी :** तत्र तादात्म्यापन्नत्वं नास्ति. अधिष्ठाने शुक्तौ इदन्त्वेन ज्ञायमानायां तत्तादात्म्यम्.

**के.ई.देवनाथन् :** 'तादात्म्यं' नाम भेदसहः कश्चिद् अभेदः. सतु अनयोः शुक्ति-रजतयोः कथं भवति ? अनिर्वचनीयरजतस्य पुरोवर्तिन्या शुक्त्या कथं तादात्म्यम् ?

**पारसनाथ द्विवेदी :** अतएव यतः शुक्तिविषयिणी या अविद्या सा शुक्त्यवच्छिन्नचैतन्यनिष्ठा. शुक्तिरपि तादात्म्येन तत्रैव अध्यस्ता. तत्रैव शुक्तिविषयिणी अविद्यापि तादात्म्येन अध्यस्ता. अतः शुक्तिविषयिका अविद्या रजतरूपेण परिणतेति भवति इदमर्थतादात्म्यापन्नं रजतम्.

**बलिराम शुक्ल :** तादात्म्यापन्नं तत्रैव अनिर्वचनीयरजतं

**के.ई.देवनाथन् :** शुक्तिविषयिण्याः अविद्यायाः उपादेयं भवति रजतम्. उपादानोपादेययोः अभेदः, तदभिन्नाभिन्नत्वन्यायेन.

**पारसनाथ द्विवेदी :** इदमित्याकारकं ज्ञानं चाक्षुषञ्च अन्तःकरणवृत्तिश्च.

**के.ई.देवनाथन् :** तेषाम् प्रश्नो अयम् आसीत् : ''रजतम् पश्यामि'' इति अनुभवो वर्तते. तस्य उत्तरत्र बाधो नास्ति. तर्हि रजतांशे भवद्भिः साक्षिभास्यत्वम् उच्यते चेदपि रजतविषयकचाक्षुषांशे कथं निर्वाहः कर्तुं शक्यते ? इति.

**पारसनाथ द्विवेदी :** उत्तरकाले बाधो नास्तीति न वक्तव्यम्. ''नेदं रजतम्'' इति ज्ञानेन अविद्यापरिणामभूतयोः रजततद्भानस्य च बाधो भवत्येव.

**बलिराम शुक्ल :** आभ्यन्तरविषयानाम्...

**पारसनाथ द्विवेदी :** उत्तरज्ञानेन पूर्वज्ञानस्य बाधः सर्वैः अङ्गीक्रियते. एवञ्च शुक्तिनिश्चयेन उत्तरकालिकेन रजतस्य तद्गोचरभ्रमस्य च बाधो भवत्येव.

**के.ई.देवनाथन् :** अतः तद्विषयकं चाक्षुषत्वं कथम् ?

**सुधांशुशेखर शास्त्री :** तादात्म्यपन्नतया गृह्यते अतः ''चक्षुषा पश्यामि'' इति अनुभवो भवितुम् अर्हति.

**विन्ध्येश्वरीप्रसाद :** उत्तरत्र बाधः कथं नास्ति ? रजतसदृशम् अनुभूतम् इति बाधस्तु भवत्येव.

**के.ई.देवनाथन् :** रजतस्य बाधो भवति. चाक्षुषज्ञानस्य तु बाधो नास्ति.

**बलिराम शुक्ल :** चाक्षुषज्ञानन्तु तत्र भवत्येव. तादात्म्यापन्नरजतस्यैव तत्र भानं भवति, अविद्याजन्यत्वात्.

**पारसनाथ द्विवेदी :** न्यायमतेऽपि पूर्वज्ञानस्य उत्तरज्ञानेन बाधो भवति. तथैव अत्रापि भविष्यति. संस्कारमात्रावशेषो भवति. भवतु नाम. तेन स्मृतिः भविष्यति ''मया रजतं दृष्टम्'' इत्याकारिका. ज्ञानेन ज्ञानस्य बाधस्तु अङ्गीक्रियतएव.

**प्रह्लादाचार :** नहि. ज्ञानयोः उत्तरज्ञानेन पूर्वज्ञानस्य यो नाशः स न मिथ्यात्वापादकः.

**पारसनाथ द्विवेदी :** ज्ञानत्वेन ज्ञाननिवर्त्यत्वाद् मिथ्यात्वापादकत्वं तत्र अङ्गीक्रियते. स्वाश्रयनिष्ठत्वात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वन्तु तत्र अस्ति.

**के.ई.देवनाथन् :** 'बाध'शब्दस्तु अद्वैतिभिः नाशपर्यायतया उच्यते. नैयायिकैस्तु उत्पत्तिविघटकतया उच्यते. भेदो वर्तते.

**सुधांशुशेखर शास्त्री :** ज्ञानप्रयुक्तावस्थितिसामान्यविरहरूपज्ञाननिवर्त्यत्वम्. तादृशं ज्ञाननिवर्त्यत्वं मिथ्यात्वम् अङ्गीक्रियते.

**प्रह्लादाचार :** एवं. नतु उत्तरज्ञाननिवर्त्यत्वं पूर्वज्ञानस्य भवति.

**पारसनाथ द्विवेदी :** अन्यख्यातिविषये न पार्यते निश्चेतुम् अतएव पृच्छामि. इदं रजतम् आविद्यकं वा मिथ्याभूतं वा मायिकं वा बुद्धिवृत्तिरूपं वा तत् सद् वा असद् वा सदसद् वा. भवतां निबन्धे मया पठितं यत् तत् सदेव स्वरूपे किन्तु एतद्देशकालरूपेण च मिथ्या इति च.

**गो. श्या. म. :** देशादिवैशिष्ट्येन मिथ्यात्वारोपः वस्तुतस्तु रजतं सदेव.

**पारसनाथ द्विवेदी :** देशकालवैशिष्ट्येन.

**गो. श्या. म. :** एवम्.

**बलिराम शुक्ल :** वस्तुतस्तु बुद्धिवृत्तिरूपं रजतं सदेव.

**गो. श्या. म. :** बुद्धिः सत्या, बुद्धिवृत्तिरपि सत्या...

**के.ई.देवनाथन् :** 'अन्य'शब्देन विषयता स्वीकर्तुं शक्यते इति श्रीमद्भिः लिखितम् अस्ति परन्तु 'अन्य'शब्देन विषयः स्वीकर्तव्यः.

**पारसनाथ द्विवेदी :** विषयो भगवान् विषयता मायाजन्या.

**के.ई.देवनाथन् :** 'ख्यातिः'नाम विषयता. 'अन्य'शब्देनापि विषयता स्वीक्रियते

चेत् ''अन्या चासौ ख्यातिः'' इति विग्रहो न्याय्यः.

**पारसनाथ द्विवेदी :** 'ख्यातिः'नाम भानम्. कस्य भानम्? विषयतायाः इति. 'विषयता'नाम भगवत्स्वरूपभूते विषये 'विषयता'नाम कश्चिद् धर्मविशेषः सृज्यते मायया इति तेषाम् अभिप्रायः. तद्विषयकं यद् ज्ञानं तत् 'ख्यातिः' इति उच्यते.

**के.ई.देवनाथन् :** ...बुद्ध्या बहिः विषये क्षिप्यते. तेनतु शुक्तेः तिरोभावः भवति. तेनतु बुद्ध्या बहिःक्षिप्तस्य वृत्तिरूपस्य रजतस्य ख्यातिः भवति.

**गो. श्या. म. :** **''यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः, नश्वरं गृह्यमाणञ्च विद्धि माया मनोमयम्''**. तत्र 'नश्वरं' हेतुगर्भितं पदम् अस्ति. अर्थात् नश्वरत्वेन यद् गृह्यमाणं तद् मायामनोमयं विद्धि नतु गृह्यमाणमात्रं मायामनोमयम्. अयम् एको भेदः. अन्यच्च **''मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः अहमेव न मत्तोऽन्यद् इति बुद्ध्यध्वमञ्जसा''** इत्यपि वचनं तत्र विद्यते. उभयोः वचनस्य सामञ्जस्याय अस्माभिः एवं कल्प्यते यद् ''विषयो भगवान्—विषयता मायाजन्या''. 'विषयता'नाम, भगवति नाशाभावात्, नाश्यत्वेन यद् भगवतो रूपं दृश्यते तत् मायायाः प्रक्षेपणम्.

**पारसनाथ द्विवेदी :** अनित्यत्वादिधर्मविशिष्टं यद् रूपम् इति.

**गो. श्या. म. :** सत्यम्. अनित्यत्वादिधर्मविशिष्टो यद् भगवतः सदंशः अनुभूयते तस्य मायिकत्वम् भवति. अन्यच्च...

**पारसनाथ द्विवेदी :** तन् मायिकं वस्तुः कथं चक्षुषा गृहीतुं शक्यते?

**गो. श्या. म. :** तत्र वदामि. यथा केवलाद्वैतिभिः तादात्म्याध्यासो अङ्गीकृतः. चक्षुषा गृह्यमाणायां शुक्तिकायां तादात्म्याध्यासो रजतस्य. वयन्तु सर्वमपि समनस्केन्द्रियकं वस्तुमात्रविषयकं ज्ञानं सामान्यं ज्ञानं भवति इति अङ्गीकुर्मः. बुद्ध्या यदा अनुग्रहः क्रियते तदा सविकल्पात्मकं ज्ञानं ''घटोऽयम्'' ''पटोऽयम्'' इति भवति. बुद्धौ यदि सात्त्विकी अवस्था तदा विकल्पानां

कल्पितत्वं न भवति. यदा बुद्धौ तामसी अवस्था तदा मायया तत्र मोहो जातः इति उच्यते. तदा विकल्पाः तएव न भवन्ति ये विषये वर्तन्ते, अन्येऽपि केचन विकल्पाः मायया तत्र समानीयन्ते, बुद्धौच उत्पाद्यन्ते.

**पारसनाथ द्विवेदी :** तिरोहिताअपि धर्माः प्रादुर्भवन्ति.

**विन्ध्येश्वरीप्रसाद :** किन्तु आचार्याः ! श्रीमद्भागवते ''**त्वय्यद्वितीये भगवन्नयं भ्रमः**'' इति सर्वापि सृष्टिः भ्रमभूता स्वीकृता.

**गो. श्या. म. :** ''**त्वयि अद्वितीये भगवन्! अयं भ्रमः**'' कीदृशो भ्रमः ? नश्वरत्वेन यद् गृह्यमाणं, अत्यन्तभिन्नत्वेन गृह्यमाणं यत् च तत् सर्वं भ्रमः.

**विन्ध्येश्वरीप्रसाद :** सर्वेऽपि पञ्चभूताः भ्रमत्वेन स्वीकृताः.

**गो. श्या. म. :** यथा भ्रमत्वेन तथा सर्वाण्यपि पञ्चभूतानि भगवदात्मकत्वेनापि स्वीकृतानि सन्ति ''**भूमिरापो नलो वायुः खं मनो बुद्धिरेव च, अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा**'' तेषां भगवदात्मकत्वमपि श्रूयते मायिकत्वमपि श्रूयते. तदा यदि भगवतो मायायाश्च तादात्म्यम् अङ्गीक्रियते तदा सर्वं समाधानं भवेत्. नो चेत् विषयताविषययोः भेदः स्वीक्रियते तदा समाधानं भवेत्. नोचेद् एकस्यैव वाक्यस्य अवलम्बनेन सर्वेषां वाक्यानां समन्वयो न भवेत्.



# यथार्थख्यातिः

## श्री के. ई. देवनाथन्

सर्वापि बुद्धिः यथार्था इत्यत्र परैः क्रियमाणाः केचिद् आक्षेपाः अत्र संगृह्य समाधीयन्ते :

<u>यथार्थख्यातिविषयकाक्षेपसमाधने :</u>

१.ननु *सर्वस्य सर्वशब्दवाच्यत्वं भवद्भिः उच्यते, तत् न युक्तं, घटस्य 'पट'शब्दवाच्यत्वे विरोधात्. यदि घटावयवाः शुक्तौ सन्ति इति स्वीक्रियन्ते, तदा शुक्तौ घटत्वज्ञानं स्यात्. शुक्तौ रजतावयवानां बाहुल्यात् शुक्तौ यथा रजतप्रतीतिः तथा शुक्तौ घटावयवाअपि वर्तन्तइति शुक्तौ घटत्वप्रतीतिरपि कुतो न भवति? शुक्तौ "इदं रजतम्" इति प्रतीतिबलेन रजतावयवान् कल्पयितुः मते तत्र घटप्रतीत्यभावेन घटावयवकल्पनायाः दुष्करत्वात्. तथाच शुक्तौ घटावयवाः न सन्ति इति सर्वस्य सर्वात्मत्वं न युक्तम्* इति चेत्, न, वेदान्तिभिः सर्वस्य सर्वात्मत्वं सर्वशब्दवाच्यत्वं वा त्रिवृत्करणेन प्रतिपाद्यते अपितु भूते भूतान्तरावयवाः त्रिवृत्करणन्यायेन स्थाप्यन्ते. अतः शुक्तौ पृथिव्यां पृथिवीभूतघटावयवाः न सन्त्येव. नच प्रतिनिधिन्यायेन शुक्तौ घटाद्यवयवाः आपादयितुं शक्यन्ते इति वाच्यं, प्रतिनिधिन्यायेन हि सादृश्यं सिद्ध्येत्. तच्च समानावयवत्वप्रयुक्तम् इति उपापीपदाम. परन्तु समानावयवत्वे प्रमाणम् अपेक्षितम्. सोमाभावे पूतीकग्रहणं कार्यम् इति शास्त्रेण सिद्धे न्यायविदः तयोः समानावयवकत्वम् उपपादयामासुः रज्जुविषयकसर्पज्ञाने सति तदनुरोधेन रज्जौ सर्पावयवाः केचिद् भवन्ति इति न्यरूपि. प्रतीतिं शास्त्रं च विना समानेन भूतेन आरब्धे वस्तुद्वये प्रतिनिधिन्यायो न प्रवर्तते.

२.ननु शुक्तौ चूर्णितायां यथा शुक्त्यणवः उपलभ्यन्ते तथा रजताणवोऽपि उपलभ्येरन्. नच अल्पत्वाद् अनुपलब्धिः राजतावयवानाम् इति वाच्यम्, अल्पत्वेनैव राजतावयवानाम् उपलब्धेः आपत्तेः इति चेत्, न, नहि रजतावयवाः नाम सम्प्रतिपन्नरजताद् आनीय निवेशिताः अवयवाः इति आवेदयामः. एवञ्च चाकचक्यादिधर्मविशिष्टाः अवयवाः शुक्त्यणुषु मध्ये तत्र-तत्र विशीर्णाएव 'रजतावयव'शब्देन अभिधीयमानाः विराजन्तइति न कापि अनुपपत्तिः. एवञ्च शुक्तौ रजतावयवाः सन्ति इति पक्षे न दोषः.

३.ननु शुक्तौ रजतावयवसद्भावे रजतार्थिनः तत्र प्रवृत्तिः स्यात्. नच रजतांशानां तत्र अल्पत्वाद् रजतार्थी तत्र न प्रवर्तते इति वाच्यं, नहि कनकाणुप्रचुरं मधुपिष्टं परित्यजन्ति कनकार्थिनः. तथाच कथं रजतावयवाः शुक्तौ सन्ति इति स्वीक्रियते इति चेत्, न, रजतावयवाः शुक्तौ सन्ति इति शास्त्रविदएव विवेक्तुम् अर्हन्ति. तेतु सम्प्रतिपन्नशुक्तिशकले विद्यमानं रजतं कार्यक्षमं न भवति इति जानन्ति, अतो न प्रवर्तन्ते. अतो न दोषः. कनकाणुप्रचुर-मधुपिष्टस्थले ''कनकं मधुपिष्टम्'' इति उभयमपि भोज्यमिति तत्र प्रवृत्तिः भोजनार्थिनाम्. कनकार्थिनान्तु तत्र प्रवृत्तिः तत्रत्य कनकशकलानां विभागपूर्वकम् उपयोगो भावीति धिया. अतो विषमो दृष्टान्तः.

४.ननु *शुक्तिगतो रजतभागो गृह्यते चेद् ''इदं रजतम्'' इति ज्ञानं यथार्थं भवति, शुक्तिभागो गृह्यते चेद् ''न इदं रजतम्'' इति ज्ञानं तदपि यथार्थम् इति ज्ञानद्वयस्य च यथार्थत्वं वक्तुं शक्यते इति विशिष्टाद्वैतिनाम् आशयो न युक्तः, शुक्तिदर्शनानन्तरमपि पुरुषस्य तत्रस्थरजतांशग्रहणे ''इदं रजतम्'' इति प्रतीतेः आपत्तेः* इति चेन्, न, पूर्वमेव अस्य प्रश्नस्य समाहितत्वात्. तथाहि— ''न इदं रजतम्'' इति ज्ञानं कार्यक्षमरजतभेदं पुरोवर्तिषु विशीर्णेषु रजतावयवेषु विषयीकरोति, ''इदं रजतम्'' इति ज्ञानं पुरोवर्तिपदार्थमेव विषयीकरोति कार्याक्षमत्वाग्रहविशिष्टस्य रजतज्ञानस्य ''न इदं रजतम्'' इति ज्ञानस्य च व्यवहारद्वारैव बाध्यबाधकभावः. शुक्तिदर्शने सति रजतं न गृह्यते, शुक्त्यंशानां बाहुल्यात्

शुक्तिदर्शनाभिभूतत्वाद् रजतदर्शनस्य इति च पूर्वमेव प्रत्यपादि. एवञ्च अयं प्रश्नो न सङ्गतः. अत्र वेदान्तदेशिकपक्षरीत्या बाध्यबाधकभावो विलक्षणः.

५.ननु ''**तदेव सदृशं तस्य यत् तद् द्रव्यैकदेशभाक्**'' इति भाष्यं निर्युक्तिकम्. तेनहि ''यद् यत्सदृशं तत् तदेकदेशभाग्'' इति व्याप्तिः लभ्येत. सा न भवितुम् अर्हति, अन्यद्रव्यस्य अन्यद्रव्यैकदेशभाक्त्वायोगात्. नहि अन्यद्रव्यैकदेशः ततो विच्छिन्नो भूत्वा अपरद्रव्यं भजते इति कल्पयितुं युक्तम्. नच रजतैकदेशसमवेतैव शुक्तिः जाता इति वाच्यम्, एवं शुक्त्येकदेशसमवेतमेव रजतं जातम् इति वक्तव्यत्वात्. नच इष्टापत्तिः, शुक्त्युदयात् प्राक् रजतस्य शुक्त्येकदेशभाक्त्वाभावप्रसङ्गात्, तथैव रजतोदयात् प्राक् शुक्तेः रजतैकदेशभाक्त्वाभावाप्रसङ्गात् च. किञ्च त्रिवृत्करणं भूतानां श्रुतम् अस्ति. नहि शुक्तिरजतयोः द्विवृत्करणम् इति चेन्, न, नहि अन्यद्रव्यैकदेशो अन्यद्रव्यैकदेशतां भजति इति वदामो अपितु पूर्वं श्रुतप्रकाशिकादिग्रन्थसन्दर्भोपादानपुरस्सरं प्रतिपादितरीत्या धर्मविशेषविशिष्टा अंशाः अन्यत्र सन्ति इति विशिष्टाद्वैतिनां प्रक्रिया. अवयवातिरिक्तावयव्यनङ्गीकारेण रजतांशाएव 'रजत'शब्दवाच्याइति रजतं शुक्तौ वर्तते इति उच्यते. तथाच सम्प्रतिपन्नरजताद् अवयवाः आनीय शुक्तौ निवेशिता इति कथ्यते चेद् भवदीयः आरोपो लगेत्.

६.ननु *''शुक्तौ शुक्त्यंशभूयस्त्वप्रयुक्तः 'शुक्ति'व्यपदेशः'' इति मतं न युक्तं, तथाहि—शुक्त्यंशस्य कथं 'शुक्त्यंशः' इति नाम? नच शुक्त्यंशत्वादेव इति वाच्यम्, अवयविनि 'शुक्तिः' इति नाम्नि सिद्धे हि तदंशस्य शुक्त्यंशत्वं सिद्ध्यति, तदेव न सिद्धम् इति. अंशिनो द्रव्यस्य शुक्त्यंशभूयस्त्वे सिद्धे 'शुक्ति'व्यपेदशसिद्धिः, अंशिद्रव्यस्य 'शुक्ति'व्यपदेशे तदंशस्य शुक्त्यंशत्वसिद्धिः इति अन्योन्याश्रयः* इति चेन्, न, सिद्धान्तं यथावद् अज्ञात्वा कृतत्वात् चोद्यस्य. अवयवाः एवं संस्थानविशेषम् आपन्नाः 'अवयवि'शब्दार्थतां भजन्ते. एवञ्च ''अवयविनः 'शुक्तिः'इति नाम्नि सिद्धे'' इत्येव न युक्तं, शुक्त्यंशो नाम शुक्तित्वाश्रयो अंशः

शुक्तित्वञ्च धर्मविशेषः. एवञ्च बहुलशुक्त्यवयववानेव शुक्तिपदार्थ इति सिद्धान्ते अस्वीकारात् चोद्यम् इदं न युक्तम्.

७.ननु *''ज्ञानमात्रं सत्यम्'' इति सिद्धान्ते ज्ञानयोः बाध्यबाधकभावो न सम्भवति, अपिच शुक्तौ शुक्त्यंशभूयस्त्वात् 'शुक्तिः' इति ज्ञानं बाधकं तत्र रजतांशस्य अल्पत्वाद् ''इदं रजतम्'' इति ज्ञानं बाध्यम् इति वक्तुं न शक्यते भवन्मते उभयोरपि ज्ञानयोः यथार्थत्वाद्* इति चेन्, न, ज्ञानमात्रस्य सत्यत्वस्वीकारेऽपि अद्वैतिसम्मतबाधस्य अस्माभिः रजतज्ञाने अस्वीकारात्. अपिच अस्मन्मते व्यवहारस्यैव बाधस्वीकारात् न सर्वज्ञानयाथार्थ्यहानिः.

८.ननु *यद् उक्तं श्रुतप्रकाशिकायां ''न इदं रजतम्'' इति अत्र नञर्थः शुक्तित्वमेव यद् आकारग्रहणेन पूर्वप्रतिपन्नायाः प्रवृत्ते निवृत्तेः वा निवारणं सएव आकारो नञर्थः. सच आकारः प्रतियोगिसापेक्षः ''न इदं रजतम्'' इत्यादिशब्दैः तदनपेक्षैः शुक्त्यादिशब्दैः च व्यवह्रियते इति तद् अयुक्तम्. तथाहि, किं नञः शुक्तित्वम् अर्थः इति उच्यते? यद्वा ''न इदं रजतम्'' इति वाक्यस्थनञः? अथवा ''न इदं रजतम्'' इतिपदत्रयात्मकवाक्यस्य? नाद्यः, ''न घटः'' इत्यादावपि ''शुक्तिः घटः'' इति अर्थापत्तेः. न द्वितीयः पक्षः ''न इदं रजतम्'' इति वाक्यस्य ''इदं रजतं शुक्तिः'' इति अर्थापत्तेः. नच इष्टापत्तिः ''इयं शुक्तिः'' इति पुरोवर्तिद्रव्यमेव शुक्तित्वेन प्रतिपद्यते पुरुषो नतु रजतं शुक्तित्वेन. नच रजतत्वेन प्रतिभातम् इदं शुक्तिरेवेति तदर्थः इति वाच्यं, विकल्पासहत्वात्. रजतत्वेन प्रतिभातं वस्तु किं रजतं? यद्वा शुक्तिः? आद्ये ''न इदं रजतम्'' इत्यस्यैव भ्रमत्वं स्यात्. द्वितीये अन्यथाख्यातिमतप्रवेशः इति, शुक्तिरेव रजतत्वेन ख्यातेति अभ्युपगमात्. तृतीयपक्षे वाक्यार्थज्ञानस्य पदार्थज्ञानसापेक्षत्वात् प्रत्येकं पदार्थः कः इति जिज्ञासायां नञर्थः किं सादृश्यम्? उत अन्यत्वम्? उत अल्पत्वम्? उत विरोधित्वम्? उत अप्रशस्तत्वम्? अथवा अभावः? इति विकल्पाः. नच प्रथमे चत्वारः

पक्षाः रजतसदृशं रजताद् अन्यद् रजताद् अल्पं रजतविरोधि वा वस्तु शुक्तिरेव इति नियमाभावेन शुक्तित्वरूपवाक्यार्थाप्रसिद्धेः. न अन्त्यौ द्वौ विशिष्टाद्वैतिनां मते अभावानभ्युपगमाद्* इति चेन्, न, एतेषां विकल्पानां सर्वथा प्रसक्तत्वाभावात्. तथाहि— "न इदं रजतम्" इत्यत्र नञो भेदो अर्थो रजतपदार्थस्य तत्र स्ववृत्तिरजतत्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन अन्वयः. एवञ्च रजतसामान्यभेदो लभ्यते. सच सिद्धान्ते अनुयोगिगतासाधारण-धर्मरूपः. तत् मनसि निधायैव शुक्तित्वमेव इति ब्रूमः इति उक्तम्. नतु 'नञ्'मात्रस्य शुक्तित्वम् अर्थः इति अभिप्रेतं येन पूर्वोक्तरीत्या प्रश्नाः उद्भाव्येरन्. नच रजतभेदः शुक्तित्वरूपः चेद् घटो रजतभिन्नः इति प्रतीतिः कथं यथार्था स्याद्? रजतभेदस्य शुक्तित्वस्य घटे अभावाद् इति वाच्यं, तत्र-तत्र वर्तमानस्य रजतभेदस्य तत्तदसाधारणधर्मरूपत्वात्. एवञ्च शुक्ति-घटादिभेदेन रजतभेदस्य भिन्नत्वेऽपि न क्षतिः. यद् उक्तम् "अभावो न स्वीक्रियते विशिष्टाद्वैते" इति, तद् अयुक्तम् "**भावान्तरम् अभावो हि कयाचितु व्यपेक्षया**" इति निगदितरीत्या अतिरिक्ताभावस्यैव अस्वीकारात्.

९.ननु सत्ख्यातिमते पुरोवर्तिनि रजतस्य सत्यत्वेन ख्यात्युपपत्तावपि बाधानुपपत्तिः शुक्तिभूयस्त्वज्ञानस्य रजतज्ञानबाधकत्वेतु शुक्तिमध्यगतात्यल्परज-तज्ञानस्यापि शुक्तिभूयस्त्वज्ञानबाध्यत्वं स्यादिति चेन्, न. शुक्तिभूयस्त्वज्ञानं न बाधकम्. "इयं शुक्तिः" इति ज्ञानमेव बाधकम्. तच्च अभिभावकविधया स्वाव्यवहितोत्तरं रजतज्ञानोत्पत्तिं विरुणद्धि. रजतज्ञानं पूर्वं जातं चेद्, "इयं शुक्तिः" इति ज्ञानं पूर्वज्ञानाधीनप्रवृत्तिं बाधते इति स्वीकर्तव्यम्. एवञ्च शुक्तिमध्यगताल्परजतज्ञानस्य शुक्तिज्ञानबाध्यत्वापत्तिः नास्ति. तादृशाल्परजत-ज्ञानं न ग्रहणरूपं किन्तु शास्त्रपरिचयजन्यम्. प्रत्यक्षं रजतज्ञानं रजतांशस्य बलवता शुक्तिभागेन अभिभूतत्वात् न सम्भवत्येव.

१०.ननु *यथार्थख्यातिमते शुक्तिरजतस्य अकार्यकरणत्वं दुरुपपादं, शुक्तिशकलसम्भिन्नात्यल्परजतांशस्यापि विपणिगतरजतवद् अर्थक्रियाकारित्वा-

वश्यंभावात्. यदि उपलभ्यमानं रजतं अकार्यकरम् इत्येव उपलभ्येत तदा प्रवृत्तिरेव न स्यात्. यदिच कार्यकरम् इति उपलभ्यते तर्हि न स भ्रमः. यदि तथापि भ्रम इति उच्यते तर्हि अन्यथाख्यात्यापत्तिः. अतो रजतस्य अकार्यकरत्वोक्तिः व्यर्थैव* इति चेन्, न, रजतं हि तत्र रजतम् इत्येव उपलभ्यते. तस्य अकार्यकरत्वं न उपलभ्यते. एवञ्च कार्याक्षमत्वाग्रहसहितं रजतज्ञानं प्रवर्तकम् इति वयम्. एवञ्च प्रवृत्तेः न अनुपपत्तिः, नवा अन्यथाख्यातिप्रसक्तिः.

११.ननु *''इयं शुक्तिः''-''इदं रजतम्'' इति ज्ञानद्वयस्यैव सद्विषयकत्वम् अविशिष्टमिति ''इयं शुक्तिः'' इति ज्ञानं बाधकम् ''इदं रजतम्'' इति ज्ञानं बाध्यम् इति कुतः? विपरीतं कुतो न स्याद्?* इति चेन्, न, शुक्त्यंशस्य बलवत्त्वात् तज्ज्ञानं बाधकं, रजतांशस्य अल्पत्वात् तज्ज्ञानं बाध्यम् इति नियमस्य सम्भवात्.

१२.ननु *रजतार्थिप्रवृत्तेः विषयः कः? यदि रजतं, तर्हि न प्रवृत्तेः बाध उपपद्येत, रजतस्य तत्र सत्त्वाद्* इति चेन्, न. सत्यम्, ''इदं रजतम्'' इति रजतसामान्यविषयकज्ञानेन कार्याक्षमत्वाग्रहसहितेन प्रवृत्तिः जायत इति स्वीक्रियते. ''न इदं रजतम्'' इति ज्ञानेन कार्यक्षमरजतभेदविषयकेण सा प्रवृत्तिः बाध्यते इति स्वीकारेण दोषाभावः.

१३.ननु *शुक्तेरिव त्रिवृत्करणश्रुत्या घटादेरपि तेजोभागवत्त्वे सिद्धे तत्रापि रजतप्रतीत्यापत्तिः* इति चेन्, न, ''लक्ष्ये सिद्धे लक्षणानुसरणम्'' इतिवत् प्रतीतौ सत्यां तदुपपत्त्यनुसरणम्. अत्रहि सम्प्रतिपन्नघटादौ रजतप्रतीतिः नास्तीति तदापत्तिः न युज्यते. अपिच त्रिवृत्करणकाले रजतगतासाधारणधर्मरूप-चाकचक्यादिविशिष्ट-( रजतशब्दवाच्य )-पदार्थानां शुक्त्यंशहेतुभूतांशैरेव मिश्रणं न अन्येनेति अदृष्टनियतत्वाद् रजतांशानां घटादौ अभावेऽपि न क्षतिः.

१४.ननु *गवय-वल्मीकादौ गो-घटादिसादृश्यज्ञानप्रयुक्तप्रमायाः

उपपत्तिः भवन्मते न सम्भवति, त्रिवृत्करणन्यायस्य तत्र अप्रवृत्तेः समानभूतारब्धत्वाद् * इति चेन्, न, तत्र प्रतिनिधिन्यायेन ज्ञानस्य याथार्थ्योपपत्तेः. एवमेव मरुमरीचिकादौ जलभ्रमोऽपि उपपादनीयः.

प्रतिनिधिन्यायविषयकाक्षेपसमाधाने :

१५.ननु सोमाभावे पूतीकग्रहणं न सोमावयवसत्त्वनिबन्धनं किन्तु विधानादेव. अन्यथा ''सोमेन यजेत'' इति विधिनैव गतार्थत्वेन **''यदि सोमं न विन्देत पूतीकानभिषुणुयाद्''** इति विधिवैयर्थ्यापत्तेः. ''सोमाभावे'' इत्यंशस्यापि असाङ्गत्यापत्तेः. पञ्चीकरणप्रक्रियया सर्वत्र सर्वावयवसत्त्वेन व्रीह्यभावे नीवारादयएव प्रतिनिधीयन्ते, न श्यामाकादयः इति मीमांसकसिद्धान्त-भङ्गापत्तेः च. न खलु सादृश्यादेव प्रतिनिधिरिति न्यायवद्दर्शनम् किन्तु शास्त्रादेव. नहि रागप्राप्तान् पूतीकान् अन्यान् वा द्रव्यविशेषान् प्रतिनिधीकृत्य यागादिकम् अनुतिष्ठन् शास्त्रोक्तकारी स्यात्. **''ज्योतिष्टोमेन...''** इति वाक्यं प्रधानविधिः. तत्रहि विधेयो यागो द्रव्यविशेषम् अपेक्षते. **''सोमेन यजेत''** इति वाक्यं द्रव्यविशेषं समर्पयद् रागप्राप्तद्रव्यान्तरनिवर्तकतया नियमविधिः भवति. शब्दोपात्तसोमद्रव्याभावे किञ्चिद् द्रव्यं प्रतिनिधिः भवेत् चेत् अप्रतिषिद्धमेव प्रतिनिधीकर्तव्यम्. **''यदि सोमं न विन्देत''** इति वाक्येन सदृशप्रतिनिधिनियमः शास्त्रेणैव लभ्यतइति न सादृश्यात् प्रतिनिधित्वं पूतीकस्येति चेत्, न, ''सामान्यं तच्चिकीर्षा हि'' इत्यादिसूत्रभाष्य - शास्त्रदीपिका - भाट्टदीपिकादिग्रन्थप्रदर्शनपूर्वकं प्रतिनिधिन्यायः पूर्वमेव निरूपितः. नहि वयं सोमाभावे पूतीकग्रहणं सादृश्याद् इति वदामः किन्तु शास्त्रादेव. इदञ्च शास्त्रं नियमविधिरिति नियमार्थः क्वचिद् विधिः इति सूत्रभाष्ये व्यक्तम्. अयं भावः : सोमाभावे बहुषु सदृशेषु प्राप्तेषु पूतीकाएव अभिषोतव्या इति. एवञ्च सादृश्यं प्रतिनिधित्वे हेतुः. अतएव अस्य वाक्यस्य नियमविधित्वं सिद्धान्तितं युज्येत. अन्यथा शास्त्रेण पूतीकानामेव प्राप्तौ अन्येषां प्राप्त्यभावात् नियमकथनं व्यर्थं स्याद् इति.

अपिच **''ज्योतिष्टोमेन स्वर्गकामो यजेत''** इति वाक्यं प्रधानविधायकम्

इति न युक्तं ''**सोमेन यजेत**'' इतिहि उत्पत्तिविधिः इति सर्वसम्मतम्. किञ्च व्रीह्यभावे नीवाराएव प्रतिनिधित्वेन स्वीकार्या इति न स्यात् सर्वस्य सर्वावयववत्त्वे श्यामाकादयोऽपि उपादेयाइति अन्यद्रव्यस्य अन्यद्रव्यावयववत्त्वं न युक्तम् इत्यपि आक्षेपो न युक्तः. अस्माभिः पूर्वोक्तरीत्या नहि सर्वस्य सर्वात्मत्वम् उच्यते, भाष्ये ''**सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः**'' इत्यत्र न सर्वस्य सर्वात्मकत्वम् उच्यते किन्तु त्रिवृत्करणेन सर्वत्र भूतान्तरे भूतान्तरस्य सर्वस्य प्रसक्तिः अस्ति इति अर्थो विवक्षितः. अतएव शुक्तौ रजतप्रतीतिः, न घटादौ इति पूर्वम् उक्तम्. व्रीहीणां नीवाराणां च समानावयवकत्वम् अस्ति अतो व्रीह्यपचारे नीवारा उपादीयन्ते नतु अन्ये द्रव्यविशेषाः इति मीमांसकसम्मतम्. अत्र भावप्रकाशिकापक्षोऽपि प्रादर्शि.

<u>सर्वस्य सर्वात्मत्वासम्भवः इत्यत्र आक्षेपसमाधाने :</u>

१६.ननु *सर्वस्य सर्वात्मत्वं भवद्भिः उच्यते तन् न युक्तं, ब्रह्मणि जीवाभेदभ्रमे सति ब्रह्मणि जीवाभेदो विद्यते वा न वा? यदि जीवाभेदो न विद्यते तदा सर्वस्य सर्वात्मत्वम् इति त्यक्तं भवेत्. यदि जीवाभेदो ब्रह्मणि वर्तत इति स्वीक्रियते, तदा ब्रह्मणि जीवाभेदोऽपि वर्तते, तद्भेदोऽपि वर्तते भवन्मतरीत्येति भेदाभेदवादाङ्गीकारप्रसङ्गः* इति चेन्, न, ''सर्वस्य सर्वत्वम्'' इति शब्दस्य अर्थः पूर्वमेव विवृतः. भूतविषयएव त्रिवृत्करणं सम्भवति, अतो न अयं प्रश्नः उचितः. अपिच ''सर्वस्य सर्वत्वम्'' इत्यस्य वाक्यस्य घटस्य पटत्वम् अस्ति इति व्याख्यानं सर्वथा न उचितम्. नच भार्यायां जनन्यवयवाः सन्तीति भार्यागमने मातृगमनप्रसङ्गः स्याद् इति वाच्यम्, अवयवभूयस्त्वम् आश्रित्यैव लौकिक-शास्त्रीयव्यवहाराः प्रवर्तन्ते इति पूर्वमेव उक्तत्वात्. किञ्च ब्रह्मणि कथं जीवाभेदभ्रमः प्रत्यक्षरूपो भवितुम् अर्हति, अधिकरणस्य ब्रह्मणो अयोग्यत्वात्. अपरोक्षभ्रमविषयएव सिद्धान्ते त्रिवृत्करणन्यायप्रसरः क्रियते. परोक्षभ्रमविषयेतु अख्यातिरेव. ननु *त्रिवृत्करणश्रुतिः, पुराणादीनि च शुक्तिकायां रजतसद्भावे न प्रमाणं, तैः श्रुत्यादिभिः तेजोबन्नादीनां मिश्रत्वमेव प्रतीयते, न शुक्त्यादौ रजतादिसत्त्वम्* इति चेन्, न, सत्यम्, श्रुतिपुराणादीनि न शुक्त्यादौ रजतादेः सद्भावं

कण्ठतः प्रतिपादयन्ति. प्रतिपदार्थं तथाकर्तुम् अशक्यं च. तथापि श्रुत्यादिना तल्लभ्यते. तथाहि—भूतस्य भूतान्तरैः त्रिवृत्करणं श्रुतम्. 'भूतं' नाम तत्तदसाधारणधर्मविशिष्टावयवसमुदायः. तादृशसमुदायान्तरैः 'भूतान्तर'शब्दवाच्यैः मिश्रणविशेषो यदा तस्य भवति तदा भूयस्त्वम् आश्रित्य पृथिव्यादिव्यवहारः. तया पृथिव्या शुक्तिप्रभृतिः यदि उत्पादनीयः व्यष्टिसृष्टिदशायाम्, तदा त्रिवृत्कृत-पृथिवीगत-चाकचक्यादि तेजोधर्मविशिष्टा ( रजता ) वयवमिश्रितभूयः शुक्त्यवयवसमुदायः 'शुक्ति'शब्दाभिधेयो जायते. अतो न श्रुतेः विरोधः. किञ्च 'त्रिवृत्करणं' नाम न मिश्रणमेव केवलं किन्तु पृथक्स्थितिव्यवहारानर्हसंश्लेषविशेषः. अतएव उक्तं श्रुतप्रकाशिकायाम् ''**संहतत्वं समागतत्वं चेति अवस्थाद्वयम् अस्ति. 'संहतत्वं' नाम पृथक्स्थित्यर्ह-संयोगमात्रम्, समागतत्वं पृथक्स्थित्यनर्ह-संश्लेषविशेषः**'' इति.

१७.ननु *शुक्तौ रजतावयववद् अन्यावयवानामपि सत्त्वाद् अन्येषामपि प्रतीतिः स्यात्. अदृष्टवशात् शुक्तौ रजतावयवाः सन्ति न अन्यावयवाः इतितु न युक्तं, कार्यनिश्चयोत्तरकालीनत्वाद् अस्याः कल्पनायाः. एवञ्च अन्योन्याश्रयो रजतस्यैव प्रतीतिः इति सिद्धौ तदनुगुणादृष्टकल्पना, अदृष्टसिद्धौ च रजतस्यैव प्रतीतिः* इति चेन्, न. अत्रहि समाधानम् एवं भवितुम् अर्हति. तथाहि—न अयम् अन्योन्याश्रयः. शुक्तौ रजतस्यैव प्रतीतिः भवति, अतः तदवयवसत्त्वनियामकम् अदृष्टं कल्प्यते. शुक्तौ रजतस्यैव प्रतीतिः इति अनुभवसिद्धम्, अदृष्टकल्पनोत्तरकालीनत्वं तस्य न अस्तीति न अन्योन्याश्रयः. एवञ्च शुक्तौ यस्य प्रतीतिः भवति, तदनुगुणतया तत्सत्त्वनियामकम् अदृष्टं कल्पनीयम् इति क्व अन्योन्याश्रयः.

**सदृशे सदृशान्तरावयवसत्त्वविषयकाक्षेपसमाधाने:**

१८.ननु *सोमाभावे पूतीकग्रहणं श्रुतिचोदितम्. तत्र पूतीकेषु सोमावयवसद्भावएव नियामकः इति न्यायविद इति उक्तं, तद् अयुक्तम्. किं सोमावयवाः पूतीकेषु भूयांसः कल्प्यन्ते, उत समाः, उत अल्पीयांसः ? यदि भूयांसो अवयवाः कल्प्यन्ते तदा पूतीकाः 'सोम'शब्दवाच्याएव भवेयुः,

भवन्मते हि सम्प्रतिपन्नसोमेष्वपि सम्पूर्णतया सोमावयवाः न सन्ति, भूयांसएव सन्ति. यदि समाः सोमावयवाः पूतीकेषु कल्प्यन्ते, तदा पूतीकेषु सोमस्य च पूतीकस्य दर्शनं स्यात्, नहि अवयवसमत्वे अभिभावकाभिभाव्यभावः सम्भवति. यदि अल्पीयांसः सोमावयवाः पूतीकेषु सम्भवन्ति इति उच्यते, तदा पूतीकाः कथं सोमकार्यं कुर्युः? नहि अल्पीयो रजतावयवाः शुक्तिः रजतकार्यं कुर्यात्. श्रुतिप्रामाण्याद् अल्पसोमावयवकस्य पूतीकस्यापि कार्यकरत्वं स्वीक्रियते इति चेत्, तर्हि श्रुतिप्रामाण्यादेव अत्यन्तविविक्तानामेव सोमपूतीकानां एककार्यकरत्वं स्वीक्रियतां, किमर्थं सोमलतावयवानां पूतीकेषु स्वीकारेण* इति चेन्, न, सोमलतैव यागोपकारकत्वरूपकार्यकारी भवति परन्तु यदा सोमो न लभ्यते तदा शास्त्रं पूतीकान् प्रतिनिधित्वेन नियमयति. तत्र हि सदृशेषु बहुषु सत्सु पूतीका एक प्रतिनिधीकार्या इति नियमः क्रियते. अयम् अंशो मीमांसाभाष्यादिषु दृश्यते इति पूर्वमेव उक्तम्. भाष्यकारैरपि सादृश्यात् पूतीकाः प्रतिनिधीभवन्तीति न उक्तम् किन्तु ''**सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्, सोमावयवसद्भावाद्** इति न्यायविदो विदुः'' इति वदद्भिः तैः सदृशएव प्रतिनिधिः भवेद् इति न्यायसिद्धम् इत्येव अभाषि. एतदुक्तं भवति, सोमलता लभ्यते न चेत्, श्रुतिरेव पूतीकान् प्रतिनिधित्वेन विदधाति. तत्र 'सोमाभावः' इति कथनेनैव पूतीकाः सोमभिन्नाः इति लभ्यते. तत्र सदृशाः बहवः प्राप्ताः. तत्र पूतीकाएव अभिषोतव्या इति ''नियमार्थः क्वचिद् विधिः'', ''**तन्नित्यं तच्चिकीर्षा हि**'' इति सूत्रभाष्ये स्पष्टम्. एवञ्च पूतीकाः सोमलताभिन्नाः परन्तु सोमसदृशाः अतएव श्रुतिः तान् प्रतिनिधित्वेन नियमयति. एतेने सोमस्य भूयोवयवाः समावयवाः अल्पावयवाः वा पूतीकेषु न भवितुम् अर्हन्ति इति शङ्का निरवकाशा. सोमाभावे पूतीका अभिषोतव्या इति श्रुतिसिद्धम्. तत्र सादृश्यं प्रयोजकम्, अतएव नियमविधिः सार्थकः, सादृश्यस्य समानावयववत्त्वप्रयुक्तत्वम् इति च मीमांसकसम्मतम् इत्येव भाष्याशयात्. अतः कुत्रापि भाष्ये सोमावयवाः पूतीकेषु कल्प्यन्ते इति उक्तम्. अतः एवं प्रश्नो न युक्तः.

१९.ननु *घृत-तैलयोः अन्योन्यसदृशयोः अन्योन्यावयवसंयोगात्

अन्योन्यार्थक्रियया भाव्यम् * इति चेन्, न, ''यत्र यत्सादृश्यम् अस्ति तत्र तत्कार्यं सर्वं करोति'' इति न वदामः परन्तु तत्कार्येषु मध्ये कानिचन कार्याणि करोत्येव. घृतकार्यं दीपज्वालनं तैलमपि करोत्येव परन्तु तत्कार्यं सर्वं न करोति तैलं, तथात्वे घृत-तैलयोः परस्परं भेदएव न स्यात्. अवयवप्रयुक्तं सादृश्यं 'क'कार-'ख'कारयोः कथं सम्भवति इति प्रश्नोऽपि न युज्यते, शब्दस्य द्रव्यत्वस्वीकारात् , तत्र अवयववत्त्वसम्भवात्. शब्दस्य अद्रव्यत्वपक्षे कथम् इति चेद्, उच्यते. परिणामवादिनो वयम्. 'क'कारो नाम तादृशपरिणामविशिष्टद्रव्यम्. 'ख'कारो नाम तादृशपरिणामविशिष्टं द्रव्यमिति यथा कपालत्वावस्थावद् द्रव्यं घटत्वावच्छिन्नद्रव्यं च मृदेवेति तयोः सादृश्यं उपपद्यते तथा 'क'कार-'ख'कारस्थलेऽपि उपपद्यते. नच 'क'काराकारपरिणामयुक्तं 'ख'काराकारपरिणामयुक्तं च द्रव्यम् एकमिति कथं भेदघटितं सादृश्यम् इति वाच्यं, भेदस्य अवस्थायामेव उपपाद्यत्वात्. प्रकृतिकारणत्ववादे सर्वपदार्थानां प्रकृतिरूपैकद्रव्यत्वात् कार्याणां भेदस्य अवस्थाम् आदायैव उपपादनीयत्वात्.

**प्रवर्तकस्वरूपविषयकाक्षेपसमाधाने :**

२०.ननु * रजतार्थिनः शुक्तौ प्रवृत्तिः दृष्टा तत्र शुक्तिकायां रजतार्थिनः प्रवृत्तिं प्रति जनकं किं भूयसां शुक्त्यवयवानाम् अदर्शनम्? उत अल्पीयसां रजतावयवानां दर्शनम्? उत भूयः शुक्त्यवयवानाम् अदर्शनं अल्पीयसां शुक्त्यवयवानां दर्शनं च इति उभयं वा? इति विकल्पः. तत्र न आद्यः पक्षः, भूयसां शुक्त्यवयवानाम् अदर्शनं च सुप्तस्यापि वर्ततइति तस्यापि प्रवृत्तिः स्यात्. द्वितीयपक्षे रजतावयवानां अल्पीयस्त्वज्ञानं कारणं चेत् प्रवृत्तिः न स्यात्. रजतावयवानाम् अल्पीयस्त्वमेव अरजतत्वमिति तज्ज्ञानवतः प्रवृत्तिरेव न स्यात्. अल्पीयसां रजतावयवानां भूयस्त्वेन ज्ञानं प्रवर्तकम् इति चेत् अन्यथाख्यातित्वप्रसङ्गः. नापि भूयसां शुक्त्यवयवानाम् अदर्शनम् अल्पीयसां रजतावयवानां दर्शनं च इति उभयमेव कारणम् इति तृतीयः पक्षः युक्तः. किमपि तत्र अस्ति इति ज्ञानादपि प्रवृत्तिः स्यात्. भूयः शुक्त्यंशाः तत्र न ज्ञाताः, अल्पीयसां रजतावयवानां यत्किञ्चित्त्वेन ज्ञानं च वर्तत इति

आपत्तिः इयं भवति. तथाच श्रीभाष्यकारसिद्धान्ते प्रवर्तकस्वरूपं निर्वक्तुं न शक्यते* इति चेन्, न, शुक्त्यंशगतभूयस्त्वाग्रहणसहितं रजतांशग्रहणमेव प्रवर्तकम् इति स्वीकारात्. यथाश्रुतभाष्यार्थो अयम्. वेदान्तदेशिकैः कार्याक्षमत्वाग्रहसहित-रजतग्रहणमेव प्रवर्तकम् इति स्वीकृतम्. तत्रापि शुक्तित्वाग्रहणम् अभिप्रेतम्. एवञ्च निष्कृष्टम् इदं यत् शुक्तित्वाग्रहणसहितं कार्याक्षमत्वाग्रहणसहितं रजतांशग्रहणमेव प्रवर्तकम् इति यावत्. अत्र पूर्वोक्तविकल्पाः न अवसरं प्राप्नुवन्ति.

२१.ननु *कथं रजतज्ञानस्य भ्रान्तित्वम् उपपद्यते, अल्पांशग्रहणाद् इति चेत् ब्रह्मज्ञानस्यापि भ्रान्तित्वं स्याद्* इति चेन्, न, विफलव्यवहारहेतुज्ञानस्यैव भ्रान्तित्वाद् भ्रान्तित्वे अल्पांशविषयकत्वस्य अप्रयोजकत्वात्. भूयोंशाग्रहणं हि तत्र प्रयोजकम्.

२२.ननु *''पीतः शङ्खः''ज्ञानस्थले पित्तगतपीतिमानुलिप्तत्वात् शङ्खस्य तस्य ज्ञानस्य प्रमात्वम् उपपादितं भवद्भिः, तन् न युक्तं, शङ्खः पित्तीयपीतिमानुलिप्तः चेत् पार्श्वस्थेन कुतो न गृह्यते? सूक्ष्मत्वात् पित्तस्य तद्गतपीतिमा न गृह्यते इति चेन्, न, किम् इदं सूक्ष्मत्वात्? यदि अतीन्द्रियत्वम्, तदा भ्रान्तपुरुषस्य ''पीतः शङ्खः'' इति ज्ञानं न स्यात्. पित्तोपहतेन सामीप्यात् पित्तगतपीतिमा गृह्यते इति चेत् किम् इदं सामीप्यम्? इति पृच्छ्यते. इन्द्रियसन्निकर्षः चेत् सामीप्यं, तत् पित्तोपहतस्य पार्श्वस्थस्य च समानमेव. इन्द्रियसन्निकर्षभिन्नं सामीप्यन्तु न प्रयोजकं, तथात्वे परशरीरसमीपवर्तिनां दण्ड-कुण्डलादीनां दूरस्थेन ग्रहणं न स्याद्* इति चेद्, न. ''**पीतशङ्खादौतु नयनवर्तिपित्तद्रव्यसम्भिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते**'' इति भाष्ये पार्श्वस्थेन ''पीतः शङ्ख'' इति अग्रहणस्य निरूपितत्वात्. नहि पित्तोपहतस्य नायनरश्मिष्विव अन्यस्य नायनरश्मिषु पित्तद्रव्यसम्भेदो अस्ति, येन तस्यापि ''पीतः शङ्खः'' इति ज्ञानं जायते इति आक्षेपः कर्तुं शक्यते. अतः सामीप्यमपि उपपादितमेव. आधुनिकवैज्ञानिकाअपि इममेव पक्षं प्रतिपादयन्ति यत् पुरुषनयनगत-पित्तद्रव्यसम्भिन्नाः नायनरश्मयः

तत्पुरुषस्यैव पीतिमानं ग्राहयन्ति, नतु अन्यपुरुषस्य इति यावत्. एवञ्च पीतशङ्खदृष्टान्तो न यथार्थख्यातिपक्षविरुद्धः.

**पुनः केषाञ्चित् प्रश्नानां समाधानम् :**

**प्रश्नः :** ''इदं रजतम्'' इति ज्ञानं यदि यथार्थं स्यात्, तदा ''न इदं रजतम्'' इति विशेषदर्शिनां ज्ञानस्य विषयः कः? कथं च तयोः ज्ञानयोः बाध्य - बाधकभावः?

**समाधानम् :** सम्प्रतिपन्नशुक्तौ ''इदं रजतम्'' इति ज्ञानं भ्रम इति उच्यते. तच्च शुक्तौ रजतावयवानां सत्त्वात् तत्र इन्द्रियसन्निकर्षस्य अबाधात् यथार्थमेव. ये विशीर्णाः रजतावयवाः पुरोवर्तिनः ते 'इदं'शब्दार्थः, एवञ्च ''न इदं रजतम्'' इत्यस्य विषयः कः? इति प्रश्ने कार्यक्षमत्वसम्पादकशक्तिमद्रजतभेदः इति ब्रूमः. नच ''इदं रजतम्'' इति ज्ञाने रजतसामान्यं विषयः, तथाच रजतसामान्यविषयकं ज्ञानं कथं वा रजतविशेषभेदविषयकं ''न इदं रजतम्'' इति ज्ञानं प्रतिबध्नीयाद् इति वाच्यम्, व्यवहारबाधस्यैव स्वीकारात्. नहि ''इदं रजतम्'' इति ज्ञानोत्तरं जायमानं ''न इदं रजतम्'' इति ज्ञानं पूर्वोत्पन्नस्य ज्ञानस्य उत्पत्तिं विघटयति इति वक्तुं शक्यम्. एवञ्च ''न इदं रजतम्'' इति ज्ञानं पुरोवर्तिनि विशीर्णरजतावयवसमुदाये कार्यक्षमत्वसम्पादक - शक्तिविशिष्टरजतभेदावगाहिभूतं पूर्वज्ञानाधीनां प्रवृत्तिं बाधत इत्येव वक्तव्यम्. ''इदं रजतम्'' इति ज्ञानेन रजतांशे कार्याक्षमत्वाग्रहसहितेन प्रवृत्तिः जायते इति मतस्थितिः. यदि प्रथमं ''न इदं रजतम्'' इति ज्ञानं जायते, ततः परम् ''इदं रजतम्'' इति ज्ञानं न उत्पद्यते, रजतभेदस्य तत्र शुक्तित्वरूपत्वात्, भूयसः शुक्त्यंशस्य ग्रहणे तदभिभूतत्वात् रजतांशो न गृह्यते. परन्तु तदा ''न इदं रजतम्'' इति अत्र इदमा शुक्तिभागो विवक्षित इति वक्तव्यम्. अयं टीकाकृतां पक्षः. अथवा पूर्वोक्तरीत्या कार्यक्षमरजतभेदे पुरोवर्तिनि गृहीते

कार्याक्षमत्वाग्रहसहितं रजतज्ञानं प्रवर्तकभूतं न जायते. कार्याक्षमम् ''इदं रजतम्'' इतितु तत्त्वविदां ज्ञानं भवत्येव. अयमेव ज्ञानयोः बाध्य-बाधकभावः सिद्धान्तीष्टः. नच कदाचित् ''इदं रजतम्'' इति ज्ञानोत्तरं ''न इदं रजतम्'' इति ज्ञानं न उत्पद्यते शुक्तिरजतस्थले तत्र किं निदानम् इति वाच्यम्, रजतांशाल्पत्वाग्रहणे सति भूयः शुक्त्यंशाग्रहणे तथाप्युपपत्तेः.

**प्रश्नः** : ''इदं रजतम्'' इति अत्र इदमा पुरोवर्तिभूताः विशीर्णाः रजतावयवाः गृह्यन्ते चेद् ''न इदं रजतम्'' इत्यत्र 'इदं'शब्देनापि तएव ग्राह्याः, तेषु कार्यक्षमरजतभेदः तेन ज्ञानेन विषयीक्रियते. परन्तु ''इयं शुक्तिः'' इति ज्ञाने विषयो रजतम् इति वक्तुं न शक्यते, रजते शुक्तित्वस्य बाधात्. अतः तज्ज्ञाने इदमा शुक्ति-रजतसमुदायः स्वीकर्तव्यः इति. तदपि न युक्तं, तादृशसमुदाये शुक्तित्वस्य बाधितत्वात्. शुक्त्यंशे शुक्तित्वस्य सत्त्वेऽपि रजतांशे तस्य अभावाद्, उभयं न एकम् इति प्रतीतेः सार्वजनीनत्वात्. एवञ्च ''इयं शुक्तिः'' इति ज्ञाने विषयः इदमंशः कः? इति प्रश्नोऽस्ति.

**समाधानम्** : अत्र ब्रूमः : ''इदं रजतम्'' इति ज्ञानस्थले इदमा पुरोवर्तिरजतमेव निर्दिश्यते. ''इयं शुक्तिः'' इति ज्ञाने पुरोवर्तिशुक्त्यंशाएव विषयः. कथं भिन्नविशेष्यकत्वे तयोः ज्ञानयोः बाध्यबाधकभावः? इति प्रश्नो न कार्यः. अभिभावकविधयैव ''इयं शुक्तिः'' इति धीः ''इदं रजतम् इति ज्ञानं निरुणद्धि इति स्वीकारात्. ''न इदं रजतम्'' इत्यत्र नञर्थः कः इति टीकापरामर्शे इदमर्थः शुक्तिरेव इति आयाति.

एवञ्च अस्मिन् निबन्धे तत्र-तत्र ईषद्विलक्षणतया प्रतिबध्य-प्रतिबन्धकभावस्य प्रदर्शितत्वेऽपि अयमेव समाधिः

युक्ततमः इति विभावनीयम् प्रेक्षावद्भिः.

प्रश्नः : आस्तां त्रिवृत्करणेन सर्वे सर्वत्र सङ्गताः इति. तथापि शुक्तौ ''इदं रजतम्'' इति ज्ञानं दोषेणैव जायते, दोषेणैव सन्निकृष्टस्य शुक्त्यंशस्य अग्रहणम् उपपादनीयम्. एवञ्च विशेषदर्शिनां ज्ञानस्थले ''न इदं रजतम्'' इति ज्ञाने रजतांशस्य सन्निकृष्टस्य अविषयत्वाय तत्रापि दोषजन्यत्वं वक्तव्यम्. एवञ्च भ्रम-प्रमयोः दोषजन्यत्वाविशेषेण अविशेषापत्तिः इति.

**समाधानम् :** ''न इदं रजतम्'' इति ज्ञाने ''इयं शुक्तिः'' इति ज्ञाने वा रजतांशाग्रहणं बलवत्सजातीयग्रहणप्रयुक्तं, नहि दोषप्रयुक्तम्. अतो न इयम् आपत्तिः युज्यते. नच अभिभवोऽपि दोषएवेति दोषजन्यत्वं विशेषदर्शिज्ञाने सम्भवत्येव इति वाच्यं, तादृशाभिभवस्य सर्वेषु मतेषु स्वीकार्यत्वात्. नहि तारशब्दग्रहणे तदभिभवात् मन्दशब्दाग्रहणे तारशब्दग्रहणं दोषजन्यम् इति वदन्ति लोकाः.

अपि च दोषः साक्षाद् ''इदं रजतम्'' इति ज्ञानं प्रति न हेतुः. शुक्त्यंशस्य भूयसो ग्रहणं प्रति दोषः प्रतिबन्धकः. तेन शुक्त्यंशे अगृहीते रजतांशः सन्निकृष्टो गृह्यते इति यावत्.

प्रश्नः : शुक्तौ रजतांशस्येव अन्यांशस्यापि सत्त्वात् कुतः शुक्तौ रजतस्य ज्ञानं, न अन्येषाम् ? इति.

**समाधानम् :** अत्र किञ्चिद् विशदय्यते. सिद्धान्ते अवयवावयविनोः भेदो न स्वीक्रियते. तेजसो अवयवसङ्घातरूपस्य तादृशस्य पार्थिवस्य च मिश्रणे तथा अन्येषां च भूतानां मेलने भूयस्त्वात् 'तेज' आदिव्यपदेशः. इदानीं शुक्तौ रजतावयवाः सन्ति इत्यस्य अयम् अर्थः : त्रिवृत्करणकाले रजतस्य शुक्तेः वा अभावेऽपि

रजताद्यंशहेतुभूताः तत्समानाः रजताद्याकारपरिणामवन्तो अवयवाः सन्त्येव. ते सम्प्रतिपन्नरजतादौ अधिकतया भवन्ति. शुक्त्यादिषु अल्पतया भवन्ति. 'रजतावयवा' नाम रजतासाधारणधर्मविशिष्टाः अंशाः. ते सम्प्रतिपन्नरजतेऽपि सन्ति, शुक्त्यादावपि वर्तन्ते. एवञ्च त्रिवृत्करणकाले चाकचक्यादि( रजत )धर्मविशिष्टाः तथा वैश्वानर-जाठर-सुवर्णादिगतधर्मविशेषविशिष्टाः च तेजोंऽशाः संहताः 'तेजः'शब्दार्थभाजः तादृशैः पृथिव्यादिभिः पञ्चीकृताः भवन्ति. तैः पञ्चीकृतैः पृथिव्यादिभिः व्यष्टि-सृष्टिः (ब्रह्माण्डादिसृष्टिः) भवति. एवञ्च तथा सृष्टौ प्रवर्तितायां सत्यां शुक्तौ चाकचक्यादिधर्मविशिष्टांशइव अन्यांशोऽपि भवतु इति प्रश्नो न युज्यते. तेजसि मूलभूते बहवो अंशाः, तेषु मिश्रणकाले सर्वेऽपि अंशाः कस्मिंश्चित् पृथिवीविकारे कथं भवेयुः ? अतः शुक्तौ रजतस्यैव भानं नतु अन्यस्य सर्वस्य इति. यदि रजतासाधारणधर्मस्य चाकचक्यादेरिव अपरस्य धर्मस्य शुक्तौ कस्यचित् पुरुषस्य ग्रहणम्, तदा भवत्येव शुक्तौ तादृशी मतिः. यः पूर्वं रजतं जानाति स्म, तस्य शुक्तौ रजतांशग्रहणे सति भवति व्यवहारः ''इदं रजतम्'' इति तथैव अन्यधर्मं जानतः भवत्येव तादृशी व्यवहृतिः इति.

**प्रश्नः** : देहात्मभ्रमे कथं त्रिवृत्करणादिना निर्वाहः कर्तुं शक्यते ?

**समाधानम् :** सत्यं, सर्वं ज्ञानं यथार्थम् इति प्रतिज्ञा. परन्तु देहधर्मस्य आत्मनि, आत्मधर्मस्य देहे वा त्रिवृत्करणादिना प्रतिपादनस्य अशक्यत्वात् तत्र प्राभाकरसम्मता अख्यातिरेव. एवं **''नाम ब्रह्मेत्युपासीत''** इति दृष्टिविधिस्थले निरवयवस्य ब्रह्मणो नाम्नि सत्त्वस्य दुरुपपादत्वात् तत्रापि अख्यातिरेव. सर्वथापि अन्यथाख्यातिः नास्ति. एवं ''ह्रदो वह्निमान्'' इति परोक्षभ्रमस्थले अख्यातिरेव. तथैव अन्येषु केषुचित् स्थलेषु भेदाग्रहम् आदाय निर्वाहः कृतः. उक्तं च वेदान्तदेशिकैः **''प्रायो बुद्धिर् यथार्था**

**श्रुतिविदभिमता क्वापि भेदाग्रहादि**'' इति. अत्र 'भेदाग्रहादि' इत्यनेन अन्यथाख्यातिरपि ग्राह्या इति केचित्.

<u>उपसंहारः</u> :

अस्मिन् निबन्धे श्रीभाष्यकारसिद्धान्तो यथामति समर्थितः. यद्यपि भाष्यकाराणाम् अन्यथाख्यातिवादः इष्टः इति तदीयैः कैश्चिद् ग्रन्थैः लभ्यते इति भाति; तथापि, श्रीमन्नाथमुनिमिश्रसिद्धान्तो यथार्थख्यातिः, साच भाष्यकारैः प्रदर्शिता इति वेदान्तदेशिकैः तत्त्वमुक्ताकलापादौ प्रतिपादनेन सएव पक्षः सिद्धान्तिनां सर्वेषाम् अभिमतः.



# चर्चा

## यथार्थख्यातिः

प्रा. श्री के. ई. देवनाथन्

**यज्ञेश्वर शास्त्री :** देवनाथन् महाभागाः ! मम बुद्धौ नैव प्रविशति यथार्थख्यातिः. सम्मन्यताम् अहम् परमो नास्तिकः. त्रिवृत्करणे न विश्वसिमि. भवता यत् सृष्टिकरणस्य विवरणं कृतं सोऽपि न विश्वसिमि. शुक्तौ रजतम् अनुभवामि. तत्र भवद्भिः उक्तम् अर्थक्रियाकारित्वक्षमताभावः. तर्हि कथं व्यवहारो व्याहन्यते. मयातु अनुभूयते, सर्वैरपि अनुभूयते ''शुक्तौ रजतं'' भ्रान्तिः. सर्वं सर्वात्मकम् इतरेतरात्मकं वा मन्यते चेद् अहं नैव विश्वसिमि, तत्र, कथं भवद्भिः अस्य भ्रमस्य विवरणं...

**के. ई. देवनाथन् :** सर्वोऽपि ख्यातिवादः पामराणां नास्ति. सम्प्रतिपन्नशुक्तौ यद् रजतज्ञानं भवति तज् ज्ञानन्तु अनुभवसिद्धम्. तज्ज्ञानं वयमपि न अपलपामः. सम्प्रतिपन्नशुक्तौ यद् रजतज्ञानं जायते तद् रजतज्ञानं किं विषयकम् इत्यत्र चर्चा क्रियते चेद्... भाष्यकारैस्तु, अस्माकं भाष्यकारइति न वदामि, आरम्भकाले एवम् उक्तम् अस्ति. ''**श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः**'' (ब्र.सू.भा.१।१।१म.सि.). श्रुतिः, स्मृतिः, सूत्रमपि ''**त्रयात्मकत्वात्तु भूयस्त्वाद्**''(ब्र.सू.३।१।२) **इति तेनाभिधाभिधा**'' (ब्र.सू.भा.१।१।१म.सि.) इति श्लोकीकृतम्. एतत् सर्वमपि स्वीकृत्य तैः निर्वाहः कृतः. अयं निर्वाहक्रमः श्रौतः. अयं क्रमः पामरैः न स्वीक्रियतां, नास्तिकम्मन्यैः न स्वीक्रियतां, तत्र वस्तुस्थितिः एवमेव अस्ति.

**यज्ञेश्वर शास्त्री :** व्यवहारे कथम्? एकेन पामरेण प्रश्न: कृत:. भवन्त: विद्वांस: इति. तत्र प्रश्नस्य किं समाधानम्?

**के. ई. देवनाथन् :** ''इदं रजतम्''इति ज्ञानं जायते. तत् सर्वानुभवसिद्धम्. अस्मिन् ज्ञाने को विषय: इति श्रौतक्रम: आश्रित्य भाष्यकारा: वदन्ति. तत्रतु विवेचकानामेव अयं विषय:. पामराणां कृतेतु न अयं विषय:.

**पारसनाथ द्विवेदी :** भ्रमो भवति इतितु व्यवह्रियतएव.

**के. ई. देवनाथन् :** अस्माभिस्तु 'भ्रम'शब्दार्थ: कश्चिद् उच्यतएव. 'भ्रम'शब्दार्थ: तार्किकैरपि एकरूपेण न उक्तं किल! अन्यथाख्यातिवादे तैरपि बहूनि लक्षणानि उक्तानि सन्ति. अस्माभिरपि एकं लक्षणम् उच्यते.

**सुधांशुशेखर शास्त्री :** भवद्भि: उक्तम् ''इदं रजतम्''इत्यस्य ज्ञानस्य यद्धि रजतं ज्ञायते सच तत्तत्कार्याक्षम:. कार्याक्षमं रजतम् ''इदं रजतम्''इत्याकारस्य ज्ञानस्य विषय:.

**के. ई. देवनाथन् :** तथा न. कार्याक्षमत्वाग्रहविशिष्टम् ''इदं रजतम्''इति ज्ञानं प्रवर्तकम् इति वदाम:. ''इदं रजतम्''इति ज्ञानस्यतु रजतमेव विषय:. रजतस्य भागा: अल्पा: भवन्ति. तै: भागै: कटकादिकं निर्मीय कार्यं कर्तुं न शक्यते. अयं न जानातीति प्रवर्तते. यदा कार्याक्षमत्वग्रहो भवति तदातु न प्रवर्तते. अत: कार्याक्षमत्वग्रहाभावविशिष्ट:.

**पारसनाथ द्विवेदी :** रजतांशो अल्प:, शुक्त्यंशो अधिक: तर्हि कथम् 'इदम्' इत्याकारकज्ञानेन अधिकांशो न ग्रह्यते अल्पांशएव ग्रह्यते?

**के. ई. देवनाथन् :** दोषवशाद् इति उक्तम्.

**पारसनाथ द्विवेदी :** दोषवशात्तु रजतस्य उत्पत्ति: क्रियताम्...

**के. ई. देवनाथन् :** उत्पत्ति: क्रियते चेद् उपादानकारणं, निमित्तकारणं ...कारणत्रयवादिन: कारणद्वयवादिन: नियम: आगच्छति. अत्रतु कस्यापि उत्पत्ति: नास्ति.

**पारसनाथ द्विवेदी :** ''इदं रजतम्''इत्यत्र दोषवषात् शुक्त्यंशस्य अग्रहणम् इति

भवद्भिः उक्तम्. "इयं शुक्तिः" इति उत्तरकाले यज्ज्ञानं जायते तत्रापि तेनैव दोषेन "इयं शुक्तिः"इति ज्ञानं न स्यात् "रजतम्" इत्याकारकं ज्ञानं स्यात्.

**के. ई. देवनाथन् :** स दोषो अस्ति चेत् कथम् "इयं शुक्तिः" इति ज्ञानं जायते? "इयं शुक्तिः"इति ज्ञानात् प्राक् स दोषो अस्ति चेत् तज्ज्ञानमेव न भवति. अतएव भ्रमस्थले इदन्त्वेन किल निर्देशः क्रियते! शुक्तित्वेन निर्देशः चेत् भ्रमएव न भवति.

**विन्ध्येश्वरीप्रसाद :** "पीतः शङ्खः" इत्यत्र भवन्मते का ख्यातिः? यतः तत्र त्रिवृत्करणश्रुतिः न प्रवर्तते, प्रतिनिधिन्यायोऽपि न प्रवर्तते.

**के. ई. देवनाथन् :** "पीतः शङ्खः"इत्यत्र त्रिवृत्करणं न प्रवर्तते इति भवद्भिः उक्तम्. तत्र त्रिवृत्करणं न प्रवर्तते इत्यस्य कारणं न उक्तम्. तत्रापि प्रवर्तयितुं शक्यते परन्तु न प्रवर्तते इत्येव वयं वदामः. कारणम् किम्? इति उक्तौ, "पीतः शङ्खः"इत्यत्र पित्तद्रव्ये पीतरूपम् अस्ति, शङ्खस्तु श्वेतः. तत्र भाष्यकारैः उक्तं नायनरश्मयः तत्र गच्छन्ति, द्रव्यं स्पृशन्ति, पित्तद्रव्यसंव्वलिताः मिश्रीभूताः नायनरश्मयः तत्र गत्वा पुरोवर्तिनं शङ्खम् आच्छादयन्ति. ततः शङ्खगतं श्वैत्यम् अभिभूतं भवति (द्र.ब्र.सू.भा.१।१।१।म.सि.). तत्र प्राभाकररीतिः अस्माभिरपि स्वीकृता. प्रकरणपञ्चिकायामपि तथैव अस्ति. अस्माकं भाष्येऽपि तथैव उक्तम् अस्ति.

अस्मिन् विषये अन्यैः कश्चित् प्रश्नः कृतो वर्तते. यदि पित्तगता पीतिमा शङ्खगततया भवद्भिः दृश्यते इति उच्यते तर्हि अन्येन कुतो न दृश्यते? तत्र "अतिसामीप्याद्"इति उक्तम् अस्ति. यतो अस्यैव चक्षुरश्मयः पित्तसंव्वलिताः भवन्ति अन्यत्र...

**विन्ध्येश्वरीप्रसाद :** यावद्दोषो अत्र बाधो नास्ति.

**के. ई. देवनाथन् :** अनुभवसिद्धम्. अनुभवे सति प्रश्नो न कर्तव्यः.

**विन्ध्येश्वरीप्रसाद :** अत्र बाधो न प्रतीयते. ''अयं शङ्खः''इति ज्ञाने सति दृष्टिद्वारेण पीतिमा दृश्यते.

**के. ई. देवनाथन् :** बाधः प्रतीयते चेदपि तज्ज्ञानं भवति इति नैयायिकाः.



# काश्मीर शैवसिद्धान्तके विशेष परिप्रेक्ष्यमें शुद्धाद्वैतवादाभिमत ख्यातिविचारकी समीक्षा

**प्रो. श्रीराजेन्द्र मिश्र**

**उपक्रम :**

'ख्याति'शब्द मूलतः विवेकका पर्याय है. व्यवहारज्ञानके क्षेत्रमें यह शब्द सविकल्पक प्रत्यक्षका अर्थ देता है. निर्विकल्पक ज्ञानको दर्शनमुखेन न तो प्रमा माना गया है और न ही अप्रमा. अतएव निर्विकल्पक ज्ञानसे प्रामाण्य-विनिश्चयका प्रश्न ही नहीं उठता. प्रमाण्यका निश्चय सदैव सविकल्पकप्रमासे ही सम्भव होता है. न्यायमुक्तावलीमें स्पष्टतः कहा गया है ''**न प्रमा नापि भ्रमः स्यान् निर्विकल्पकम्**''.

विविध दार्शनिक सम्प्रदायोंमें सविकल्पक ज्ञानको लेकर जो व्याख्यापक्ष उभरे हैं सामान्यतः उसीको 'ख्यातिवाद' कहा जाता है. इस व्याख्यामें भ्रमात्मक ज्ञानके मूल्याङ्कन अथवा समीक्षा को प्रमुखता दी गई है. क्योंकि उसीके निरसन अथवा निराकरण के अनन्तर प्रमात्वका निश्चय हो पाता है. इस प्रकार, ख्यातिवादकी भूमिका यथाकथञ्चित् प्रामाण्यवाद तथा अनुव्यवसाय से जुड़ी प्रतीत होती है. यद्यपि, विवेकपर्याय होनेके कारण 'ख्याति' एक विध्यात्मक शब्द (positive term) है; परन्तु, वैचारिक प्रक्रियाके स्तरपर वह उपलक्षण जैसा बन गया है भ्रम, भ्रमज्ञान अथवा भ्रान्तिज्ञान (Illusion)का. क्योंकि भ्रान्तिके निराकरणसे ही ख्यातिका उदय होता है. ठीक उसी प्रकार जैसे अन्धकारपटलको निरस्त कर उदित होता है सूर्य.

भारतवर्ष विख्यात है अपनी द्वादश दर्शनपरम्पराओंकेलिए. इनमें साङ्ख्य-योग, न्याय-वैशेषिक तथा पूर्वमीमांसा-उत्तरमीमांसा (वेदान्त) तो आस्तिक दर्शन हैं. अन्य ६ (माध्यमिक, योगाचार, वैभाषिक, सौत्रान्तिक, आर्हत एवं लौकायतिक) वेदप्रामाण्यको न माननेके कारण 'नास्तिक-दर्शन' कहे गये हैं. इन समस्त दर्शनोमें यद्यपि विचार-विषय दो ही हैं : प्रमेयमीमांसा तथा प्रमाणमीमांसा. तथापि इन्हीं दो विषयोंके पारस्परिक खण्डन-मण्डनसे प्रत्येक दर्शनका अपना पृथक् स्वरूप भी निश्चित हुआ है. किसीका प्रमेय अद्वैततत्त्व है तो किसीका द्वैत तो किसीका बहुत्व. किसीके प्रमाण चार हैं तो किसीके पांच तो किसीके छ; और, कोई एक ही प्रमाणके प्रति आस्थावान् है. वैचारिक स्वतन्त्रता, पूर्वपक्षका समादरपूर्वक युक्तियुक्त खण्डन तथा स्वपक्ष अर्थात् सिद्धान्तपक्षका, निरुत्तरित कर देनेवाला प्रतिपादन — भारतीय दर्शनपद्धतियोंका वैशिष्ट्य है.

प्रमाणमीमांसा आस्तिक एवं नास्तिक दोनों ही दर्शनोंको अभीष्ट है. क्योंकि बिना प्रमाणके 'प्रमा' अर्थात् शुद्धज्ञानकी प्रतिष्ठा असम्भव है. इसी प्रकार प्रमेयान्तर्गत व्याख्यात आत्मादि कई तत्त्व भी सभी दर्शनोमें समान रूपसे समीक्षित हुए हैं. हां, कुछ ऐसे प्रमेय भी हैं जो किसी एक ही दर्शनपद्धतिकी पहचान कराते हैं जैसे आर्हत दर्शनका अनेकान्तवाद, बौद्धोंका अभाव-प्रमाण तथा आर्यसत्यचतुष्टय, मीमांसाका अपूर्वसिद्धान्त, साङ्ख्यका प्रकृति-पुरुषयौगपद्य अथवा चार्वाकोंका काष्ठदहनन्यायेन प्रतीत देहात्मैक्यवाद.

सौभाग्यसे ख्यातिवाद भी सर्वदर्शनाभीष्ट विवेच्य विषय है, सम्भवतः ज्ञानमीमांसाका अङ्गभूत होनेके कारण. पांच प्रकारके ख्यातिवाद तो प्रायः सर्वविदित हैं.

**''आत्मख्यातिरसत्ख्यातिरख्यातिः रख्यातिरन्यथा।**
**तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्॥**

**योगाचारा माध्यमिकास् तथा मीमांसका अपि।**

**नैयायिका मायिनश्च पञ्चख्याती: क्रमाज्जगु: ।।''**

(न्या.को.)

वस्तुत: ख्यातिवादका भी क्रमिक पल्लवन हुआ दीखता है. उपर्युक्त पञ्चविध ख्यातिवाद आचार्य आदिशङ्करके युग तकके हैं जबकि रामानुज, मध्व, निम्बार्क, वल्लभ एवं गौराङ्ग महाप्रभुका उदय भी नहीं हुआ था. अत: यह माननेमें कोई विप्रतिपत्ति नहीं होनी चाहिये कि शङ्करोत्तर युगमें भी ख्यातिवादकी तात्त्विक समीक्षासे अनेक नई उपलब्धियां हुईं. ये उपलब्धियां वेदान्तके अवान्तर सम्प्रदायों तथा काश्मीर शैवदर्शन की देन है, जो निस्सन्देह आचार्य शङ्कर (आठवीं शती ई.)के बादकी दार्शनिक परम्परायें हैं.

यदि शङ्करपूर्व एवं शङ्करोत्तर पल्लवित ख्यातिवादोंका उनके नामान्तरसहित साकल्येन परिगणन किया जाय तो चौदह सम्मत ख्यातिवादों तथा छ नामान्तरोंके साथ उनकी सङ्ख्या बीस सिद्ध होती है. इन समस्त ख्यातिवादोंमें भ्रमनिरूपणका प्राधान्य है और इस भ्रमनिरूपणकी उपलब्धि है : प्रस्थानसम्मत सम्यक् ख्याति (शुद्धज्ञान). जैसा प्रारम्भमें कहा गया है कि 'ख्याति' शब्द कथमपि भ्रमवाचक नहीं है, प्रत्युत वह प्रत्यक्षमात्रके सविकल्पक पक्ष अथवा ज्ञानमात्रकी सञ्ज्ञा है. श्रीमद्भागवत् (११.११.२.) में बड़ी स्पष्टतासे कहा गया है कि स्वप्नके समान संसार भी यथार्थ न होकर आत्माकी ख्याति मात्र है. यहां 'ख्याति'शब्द प्रतीतिमात्रमें पर्यवसित है. और इसी प्रतीतिपरक अभिप्रायपर समस्त दार्शनिक ख्यातिवादोंकी प्रतिष्ठा भी है.

आचार्य प्रभाचन्द्र सूरिने उपर्युक्त ख्यातिवादोंकी गणना अन्यप्रकारसे की है जिनमें क्रमश: 'विवेकख्याति', 'अख्याति', 'असत्ख्याति', 'प्रसिद्धार्थख्याति', 'आत्मख्याति', 'अनिर्वचनीयख्याति', 'अलौकिकार्थख्या-

ति' तथा 'विपरीतार्थख्याति' के नाम आये हैं.

आचार्य बच्चूलाल अवस्थीने दार्शनिक सम्प्रदायोंको दृष्टिमें रख कर विविध ख्यातिवादोंका जो परिचय दिया है वह अत्यन्त सुस्पष्ट प्रतीत होता है. विषय-विवेचनदृष्ट्या मैं उसे यथावत् उद्धृत कर रहा हूं :

१. शुद्ध अख्यातिवादी चार्वाक दार्शनिक हैं जो भौतिक शरीरमें विद्यमान चैतन्यको मदके समान मानते हैं. उन्हें निर्विषयख्यातिवादी तथा निरालम्बनख्यातिवादी कहा जाता है.

२. परन्तु निर्विषय अथवा निरालम्बन ख्यातिवादियोंमें मुख्यत: शून्यवादी तथा विज्ञानवादी बौद्ध दार्शनिक आते हैं. पृथक्तया शून्यवादियोंका असत्ख्यातिवाद तथा विज्ञानवादियोंका आत्मख्यातिवाद प्रसिद्ध है. आत्मख्यातिवादको ही स्वख्यातिवाद तथा विज्ञानाकारख्यातिवाद भी कहा गया है.

३. साङ्ख्य-योग दर्शनको सदसत्ख्यातिवादी अथवा प्रसिद्धार्थख्यातिवादी कहते हैं.

४. वैशेषिक, द्वैतवेदान्त तथा जैनदर्शन का ख्यातिसिद्धान्त विपरीतख्यातिवादके नामसे प्रसिद्ध है.

५. न्यायदर्शन, भाट्टमीमांसा तथा दाक्षिणात्य शैवदर्शनमें अन्यथाख्यातिवाद मान्य है जो प्रकारान्तरसे विपरीतख्यातिवाद ही है.

६. कुमारिल-मीमांसा तथा प्रभाकर-मीमांसा के मतोंको 'विवेकाख्यातिवाद' कहा जाता है जो सामान्यत: अख्यातिवाद नामसे सुप्रतिष्ठित है. प्रभाकरको अख्यातिवादी कहा जाता है परन्तु वह यथार्थख्यातिमें सविशेष प्रतिष्ठित है.

७. आचार्य मण्डन मिश्रने अभेदख्यातिवादको प्रतिष्ठित किया है.

८. अलौकिक ज्ञानलक्षणा प्रत्यासतिद्वारा भ्रमकी व्याख्या करनेके कारण न्याय तथा कुमारिलमीमांसा को अलौकिकख्यातिवादी

भी कहा जाता है.

९. व्याकरणदर्शनका बुद्धिसत्ख्यातिवाद सत्ख्यातिवादका ही नामान्तर है.

१०. अद्वैत शाङ्करवेदान्त अनिर्वचनीयख्यातिवादका समर्थक है.

११. प्रभाकरमीमांसा तथा विशिष्टाद्वैत वेदान्त दोनों यथार्थख्यातिवादी हैं परन्तु इस वर्गमें विशेष रूपसे रामानुजके मतको लेकर उसे सत्ख्यातिवाद कहा जाता है.

१२. शुद्धाद्वैतवेदान्तमें अन्यख्यातिवाद मान्य है.

१३. प्रत्यभिज्ञा शैवदर्शनका ख्यातिवाद व्यावहारिक ख्यातियोंमें सङ्कुचितख्यातिवाद है परन्तु पारमार्थिक दृष्टिसे, प्रत्यभिज्ञाके अभावकी व्याख्या वह 'अख्याति' नामसे करता है. वस्तुतः यह सतखातिवादका ही रूपान्तर है.

वस्तुतः 'अख्याति'का अभिप्राय भी एक नहीं है. जो सविकल्पक प्रत्यक्षको प्रमावर्गमें नहीं लेते उनकेलिए वह सविकल्पकाभावमात्र है. आत्मज्ञानरूप अद्वैतख्यातिके पक्षधरोंकी दृष्टिमें 'अख्याति'का अर्थ है : अविद्याजनित व्यावहारिक तथा प्रातिभासिक प्रत्यय. मीमांसामें यह शब्द विवेकाख्याति अथवा असंसर्गाग्रह के सन्दर्भमें प्रयुक्त है जबकि प्रत्यभिज्ञा-शैवदर्शनमें शिवाद्वैतबोध न होना ही अख्याति है.

प्रस्तुत आलेखमें शैव प्रत्यभिज्ञादर्शन एवं वाल्लभवेदान्त को अभिमत ख्यातिवादोंका युगपद विवेचन अभीष्ट है. दोनो दर्शनसरणियोंके ख्यातिविचारमें कोई साम्य अथवा अन्तःसम्बन्ध है अथवा हो सकता है अथवा नहीं यह तो विद्वत्समज्या-निर्णयाधीन है. परन्तु मेरा विनम्र प्रयास है दोनों मतोंको सम्प्रदायोचित सन्दर्भमें निरूपित करना. एक तथ्य सर्वथा सुस्पष्ट है. वह यह कि काश्मीरका प्रत्यभिज्ञादर्शन एवं शुद्धाद्वैतवेदान्तमत दोनों शङ्करोत्तरयुगीन होनेके कारण, अन्य दर्शनों एवं मत मतान्तरोंकी

तुलनामें, अभी भी अल्पव्याख्यात एवं अल्पहृदयङ्गत रहे हैं.

काश्मीरी शैव प्रत्यभिज्ञादर्शन :

काश्मीरका प्रत्यभिज्ञा दर्शन यद्यपि आचार्य उत्पलदेवद्वारा प्रतिष्ठापित माना जाता है. तथापि उसकी परम्परा उत्पलसे भी पूर्ववर्तिनी सिद्ध होती है. त्र्यम्बक सम्प्रदायोत्पन्न आचार्य सोमानन्दको स्वयं उत्पलदेव शिवदृष्टिवृत्तिके मङ्गलाचरणमें अपना गुरु बतलाते हैं.

**''श्रीत्र्यम्बकसद्वंशमध्यमुक्तामयस्थितेः ।**
**श्रीसोमानन्दनाथस्य विज्ञानप्रतिबिम्बकम् ।।''**
( ईश्वरप्रत्यभिज्ञावि.वि.मङ्गल.२ )

**''ईश्वरप्रत्यभिज्ञोक्तविस्तरे गुरुनिर्मिते ।**
**शिवदृष्टिप्रकरणे करोमि पदसङ्गतिम् ।।''**
( शिवदृष्टिविवृति, मङ्गलश्लोक ३ )

**''इति प्रकटितो मया सुघट एष मार्गो नवो ।**
**महागुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा ।।''**
( ईश्वरप्रत्यभिज्ञाकारिका ४.२६ ).

यद्यपि उत्पलदेवने अपने पिताका नाम 'उदयाकर' बताया है[१], परन्तु अभिनवगुप्तने तन्त्रालोकमें उन्हें सोमानन्दका ही पुत्र एवं शिष्य बताया है[२]. इससे स्पष्ट है कि 'सोमानन्द'का ही नामान्तर 'उदयाकर' भी रहा होगा. आचार्य उत्पलके पुत्र एवं शिष्य लक्ष्मणगुप्त, जो भट्टेन्दुराजके समसामयिक थे, महामाहेश्वर आचार्य अभिनवगुप्तके प्रत्यभिज्ञागुरु थे. भट्टेन्दुराजसे भी अभिनवने अलङ्कारशास्त्रकी शिक्षा प्राप्त की थी[३].

काश्मीरक शैव परम्परामें यह मान्य है कि सिद्ध वसुगुप्तको साक्षात् श्रीकण्ठ अर्थात् भगवान् शिवसे ही प्रत्यभिज्ञाज्ञान प्राप्त हुआ था. वसुगुप्तसे ही यह ज्ञान भट्ट कल्लटको प्राप्त हुआ. शिवसूत्रविमर्शिनीमें

आचार्य क्षेमराज स्वयं यह तथ्य प्रकाशित करते हैं. ''वसुगुप्तनामा **गुरुः एतानि( शिवसूत्राणि ) च सम्यगधिगम्य भट्टश्रीकल्लटाद्येषु सच्छिष्येषु प्रकाशितवान्**''.

इस प्रकार प्रत्यभिज्ञादर्शनकी परम्परा स्वयं भूतभावन शिव ( श्रीकण्ठ )से प्रारम्भ होकर भट्टकल्लट एवं सोमानन्द के माध्यमसे विकसित हुई. इस परम्पराके विकासमें उत्पलदेव, लक्ष्मणगुप्त ( पुत्र ) राजानक रामकण्ठ ( उत्पल शिष्य ) अभिनवगुप्त तथा क्षेमराजका विलक्षण योगदान है. विभ्रमाकर ( उत्पलके दूसरे पुत्र ) पद्मानन्द ( सहाध्यायी ) मनोरथगुप्त आदि भी उसी परम्पराकी अग्रिम कड़ी हैं. चूंकि भट्ट कल्लट एवं अभिनव का समय राजतरङ्गिणि एवं क्षेमेन्द्र के प्रामाण्यसे सुनिश्चित है अतः यह कहा जा सकता है कि प्रत्यभिज्ञा शैवदर्शनकी प्रभविष्णुताकी अवधि ई. सन् ८२५ से १०२५ बीच रही होगी[४].

वल्लभवेदान्तमें कृष्णभक्तिकी प्रतिष्ठा 'पुष्टितत्त्व'के रूपमें हुई है. इस दृष्टिसे प्रत्यभिज्ञा-शैवदर्शन शुद्धाद्वैतका सहोदर प्रतीत होता है. क्योंकि इस दर्शनमें भी परमसत्ता अथवा मोक्ष-प्राप्तिकेलिए भक्तिलक्ष्मीकी ही सर्वोपरि प्रतिष्ठा की गई है. भक्तिश्रीसे सम्पन्न व्यक्तिके समान न कोई ऐश्वर्यवान् है और न भक्तिरहित जैसा निपट दरिद्र! यद्यपि मोक्षप्राप्तिकेलिए इस दर्शनमें भी आगमसम्मत अनुपाय, शाम्भव उपाय, शाक्त उपाय तथा आणव उपायको पूर्ण मान्यता दी गई है तथापि आचार्य उत्पल 'अनुपाय'पर ही आश्रित दीखते हैं जिसमें महेश्वरके साक्षात् शक्तिपातवश सद्यः महेश्वरतावाप्तिकी सम्भावना बनी रहती है. महेश्वरकी यही अहैतुकी कृपा ( शक्तिपात ) वाल्लभ वेदान्तकी पुष्टिके समकक्ष प्रतीत होती है. आचार्य उत्पल कहते हैं :

**''न ध्यानतो न जपतः स्याद् यस्याविधिपूर्वकम्।**
**एवमेव शिवाभासः तं नुमो भक्तिशालिनम्॥''**
**''भक्तिलक्ष्मीसमृद्धानां किमन्यद् उपयाचितम्।**

**एतया वा दरिद्राणां किमन्यद् उपयाचितम्॥''**

(शिवस्तोत्रावली २।१, २०।११)

यदि आचार्य उत्पलका प्रामाण्य स्वीकार करें तो भक्तिभाव संवलित शिवाद्वैतज्ञान ही प्रत्यभिज्ञा सम्प्रदायका एकमात्र लक्ष्य सिद्ध होता है. भक्तिसमन्वित शुद्धाद्वैत ही वाल्लभवेदान्तका भी एकमात्र लक्ष्य है. इस प्रकार पुष्टितत्त्वके रूपमें प्रतिष्ठित शिवभक्ति तथा कृष्णभक्ति और उन्ही दोनोंसे संवलित कृष्णाद्वैत तथा शिवाद्वैत क्रमशः दोनों सम्प्रदायोंमें तुल्यप्रतिष्ठ दीखता है.

आचार्य उत्पल भक्तिसमान्वित अद्वैतके ही पक्षधर हैं, शुष्क ज्ञानमात्रके नहीं[५]. वह परमेश्वरसे भी बढ़ कर उसकी भक्तिको श्रेय देते है[६]. आत्मा एवं परमात्मा (शिव) की प्रत्यभिज्ञा एवं उसकी परिपूर्ण अहन्ताका सतत विमर्श, शैवदर्शनाभिमत छत्तीस तत्त्वोंके क्रियाकलापोंके माध्यमसे, परमेश्वर शिवका ही लीलोल्लास मानते हुए आचार्य उत्पल शिवाद्वैतका अनुभव करते हैं. उल्बण शिवभक्ति संवलित अद्वैतसिद्धि ही भोग एवं मोक्ष दोनोंका स्रोत है. इस शिवाद्वैतके सिद्ध होते ही दुःख भी सुखरूपताको प्राप्त हो जाता है, विष भी अमृत बन जाता है और संसार बन्धन भी मोक्षरूप हो जाता है. ऐसे सिद्ध भक्त परमहंस-स्थितिमें अनिर्वचनीय अद्वैतानन्दका अनुभव करते हैं. आचार्य उत्पलने अपनी लम्बी आयुमें[७] सभवतः स्वयं इस शिवाद्वैतसुखका अनुभव किया था :

**''दुःखान्यपि सुखायन्ते विषमप्यमृतायते।**
**मोक्षायते च संसारो यत्र मार्गः स शाङ्करः॥''**
**''साक्षात्कृतभवद्रूपप्रसृतामृततर्पिताः।**
**उन्मूलिततृषो मत्ता विचरन्ति यक्षारुचि॥''**

(शिवस्तोत्रावली २०।१२, १२।४)

उपर्युक्त समस्त विवरण, काश्मीरी प्रत्यभिज्ञाशैवदर्शनकी परिचयात्मक प्ररोचनामात्र माने जा सकते हैं. अभी इन विवरणोंमें ख्यातिवादकी पृष्ठभूमि भर प्रतिबिम्बित है. उसका स्वरूप अभी भी व्याख्येय ही है. प्रत्यभिज्ञादर्शन सैद्धान्तिक विशदीकरण उत्पलकी कालजयी कृतियों — शिवस्तोत्रावली, ईश्वरप्रत्यभिज्ञाकारिका, ईश्वरप्रत्यभिज्ञाकारिका-वृत्ति, ईश्वरप्रत्यभिज्ञाविवृति (टीका) सिद्धित्रयी (अजडप्रमातृसिद्धि, ईश्वरसिद्धि, सम्बन्धसिद्धि) तथा शिवदृष्टिवृतिमें साङ्गोपाङ्गतया उपलब्ध होता है. आचार्य उत्पलके प्रथम तीन ग्रन्थों तथा उनपर लिखी गई आचार्य अभिनवकी विमर्शिनी एवं विवृतिविमर्शिनी को मिला कर ही प्रत्यभिज्ञा दर्शनका शास्त्रपञ्चक बनता है.

प्रत्यभिज्ञादर्शनमें परमेश्वर चिद् आनन्द इच्छा ज्ञान एवं क्रियाशक्तियों से सम्पन्न तथा सदैव सृष्टि, स्थिति, संहार, तिरोधान और अनुग्रहरूप पञ्च कृत्योंका कर्ता माना गया है ‘‘**आत्मैव सर्वभावेषु स्फुरन्निर्वृत्तचिद्विभुः, अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः**’’ (शिवदृष्टिः १।२).

इस दर्शनमें शिवसे लेकर पृथ्वी पर्यन्त ३६ तत्त्वों, ११८ भुवनों, समस्त स्थूल-सूक्ष्म भावों तथा शिवसे लेकर सकल पर्यन्त सात प्रमाताओंका विकास एक ही परमसत्तासे निरूपित किया गया है. बन्धन-मोक्ष, बद्ध-मुक्त, शिव-शक्ति सबको एक ही परमेश्वरका लीलाविलास बताया गया है. फलतः शाङ्करवेदान्तके ‘‘ब्रह्म सत्यम्’’ अथवा ब्रह्माद्वैततत्त्वकी ही भांति यह दर्शन भी ‘शिवाद्वैत’की प्रतिष्ठा करता है. यद्यपि दोनोंमें बड़ा अन्तर है. उत्पलदेव स्वयं इस दर्शनको ‘अद्वयवाद’, ‘ईश्वराद्वयवाद’, ‘शिवाद्वैत’, ‘शिवाद्वय’, ‘शक्तिमद्वाद’ अथवा ‘शैवदर्शन’ कहते हैं. पति (पशुपति) पाश एवं पशु के सङ्घटकत्रयकी प्रधानतावश इसे ‘त्रिकदर्शन’ भी कहा जाता है. परन्तु आचार्य उत्पलकी ही कृति ‘ईश्वरप्रत्यभिज्ञा’की प्रसिद्धिवश यह दर्शन कालान्तरमें ‘प्रत्यभिज्ञादर्शन’ नामसे प्रख्यात हो गया.

प्रत्यभिज्ञादर्शनके अनुसार जीव (पशु) वस्तुतः शिव ही होता है. परन्तु संसारमें आकार अपने मूलस्वरूप अर्थात् शिवत्वको भूल जाता है तथा अपने स्थूल, सूक्ष्म अथवा कारण शरीरको ही अपना स्वरूप समझने लगता है. ऐसे बद्धजीवको अपने मूलस्वरूप शिवत्वकी पहचान करानेके कारण ही यह दर्शन 'प्रत्यभिज्ञादर्शन' कहा जाता है. 'प्रत्यभिज्ञा' (प्रति + अभि + ज्ञा) का अर्थ है ऐसी पहचान कि जिसमें तत्ता एवं इदन्ता की युगपत् प्रतीति होती है : "**तत्तेदन्तावगाहिनी प्रतीतिः प्रत्यभिज्ञा**" 'प्रति'का अर्थ है प्रतीप अथवा विपरीत. 'अभि'का अर्थ है आभिमुख्य, आमने-सामने. 'ज्ञा'का अर्थ है ज्ञान अथवा प्रकाश. अतएव विस्मृततत्त्वका अभिमुख रूपसे ज्ञान होना ही 'प्रत्यभिज्ञा' कहा जाता है. 'प्रतीपम्'का तात्पर्य इतना ही है कि अपनी आत्माका पूर्वमें भी अवभास होता है, ऐसा नहीं है कि पहले उसका अस्तित्व विद्यमान न रहा हो. क्योंकि वह तदनवच्छिन्न रूपसे प्रकाशित रहनेवाला तत्त्व है. अपनी ही स्वातन्त्र्यशक्तिके विलाससे असीमित (अबाधित, अविभक्त) होते हुए भी वह सीमित (बाधित, विभक्त) सा प्रतीत होता है. अतएव 'प्रत्यभिज्ञा'का अर्थ है : पूर्वमें भात(ज्ञात) वस्तुका सम्प्रति भासमानके साथ एकीकरण! आचार्य अभिनव कहते हैं :

> "**प्रतीपम् आत्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा. 'प्रतीपम्' इति स्वात्माभासो हि न अननुभूतपूर्वो अविच्छिन्नप्रकाशत्वात् तस्य. सतु तच्छक्त्यैव विच्छिन्नइव विकल्पितइव लक्ष्यते इति वक्ष्यते.**"
>
> (ईश्वरप्रत्यभिज्ञाविमर्शिनी)

यद्यपि आचार्य सोमानन्द, उत्पलदेव, अभिनवगुप्त तथा क्षेमराज ने प्रत्यभिज्ञाकी व्याख्यायें भिन्नरीतिसे की हैं तथापि उन सबका निर्गलितार्थ एक ही प्रतीत होता है. वह यह कि आत्मामें माहेश्वर्यकी अनुभूति ही प्रत्यभिज्ञा है. महेश्वर ही समस्त प्राणियोंकी आत्मा है. क्योंकि उन (प्राणियों) की समस्त क्रियाएं उनकी इच्छा, ज्ञान, एवं क्रियादि

शक्तियोंसे सञ्चालित होती हैं. यह आत्मा स्वप्रकाश, पूर्वसिद्ध, पुराण तथा समस्त कार्योंकी सिद्धिका समाश्रयभूत है. परन्तु ऐसा स्वसंवेदनसिद्ध आत्मा शिवरूप होते हुए भी मोह (मायाशक्ति अथवा मल) वश अपने ऐसे असीमित ऐश्वर्यको सर्वथा विस्मृत कर देता है. और जब इसका वही असाधारण प्रभाव या सामर्थ्य अभिज्ञापित होता है अर्थात् जब उस आत्माकी अबाधित ज्ञान एवं क्रिया शक्तियोंका अनुसन्धान होता है तो निश्चय ही उसकी प्रत्यभिज्ञा निरूपित होती है "**किन्तु मोहवशाद् अस्मिन् दृष्टेऽपि अनुपलक्षिते, शक्त्याविष्करणेन इयं प्रत्यभिज्ञा उपदर्श्यते**" (ई.प्र.का.१।३).

आचार्य क्षेमराज स्व-स्वरूपसे अनभिज्ञको ही संसारी जीव (पशु अथवा बद्ध) तथा अपनी वास्तविक शक्तियोंसे प्रत्यभिज्ञातको शिव मानते हैं: "**तथाशक्तिदरिद्रः संसारी उच्यते. स्वशक्तिविकासेतु शिवएव**" (प्रत्यभिज्ञाहृदयम् पृ.५.९) इस प्रकार, प्रत्यभिज्ञाशास्त्रका लक्ष्य है जीवको उसके वास्तविक शिवस्वरूपका प्रत्यभिज्ञान कराना ताकि वह सीमितताके निकृष्ट क्षेत्रसे ऊपर उठकर असीमित ऐश्वर्यके उत्कृष्ट क्षेत्रका आनन्दानुभव कर सके.

प्रत्यभिज्ञादर्शनकी ज्ञानमीमांसा सर्वथा स्पष्ट है. शङ्करके ब्रह्माद्वैतकी तरह यहां भी शिवाद्वैतकी प्रतिष्ठा है. परन्तु शाङ्करवेदान्त जैसा विवर्तवादका उलझाव यहां नहीं है. इस दर्शनकी मान्यता है कि समस्त जगत्प्रपञ्चका मूल है एक परमसत्ता (परमशिव) जो प्रकाशविमर्शरूप है. अवभासित अथवा अभिव्यक्त होना (Manifestation) उसका निसर्ग है. कर्तृत्व (Creativity) उसका ऐश्वर्य है. यदि वह परमसत्ता अवभासित होनेमें असमर्थ होती तो वह चैतन्याधिष्ठान आत्मा न होकर घटादिकी भांति जड़ वस्तु होती. जैसा कि तन्त्रालोकमें आचार्य अभिनव कहते हैं: "**अस्थास्यद् एकरूपेण वपुषा चेन् महेश्वरो महेश्वरत्वं संवित्त्वं तदात्यक्षद् घटादिवत्**" (३.१००). वस्तुतः वह महेश्वर (परमशिव) असीमित रूपोंमें

अवभासित होनेकी समर्थ्यसे युक्त संवित्स्वरूप है. इसके विश्वोत्तीर्ण रूपमें अहम् तथा इदम् ( = विश्व ) अभेदरूपमें अवस्थित हैं. अर्थात् परमशिवके चिन्मयरूपके साथ पदार्थोंका तादात्म्य होनेके कारण उनका भी चिन्मय ही रूप होता है[८]. अहम् उस महेश्वरका प्रकाशरूप है तथा उस अहन्ताकी अनुभूति (Awareness) उसका विमर्शरूप है. वही विमर्श उस परमशिवकी स्वातन्त्र्यशक्ति भी कहा जाता है. इसीमें चराचर जगत् सूक्ष्मरूपमें अवस्थित रहता है, नन्हें बीजमें वटवृक्षकी तरह. परमशिवकी शक्ति ही 'चिति', 'पराशक्ति' अथवा 'परा-वाक्' कही जाती हैं. यही शक्ति विश्वके रूपमें विकसित होती है. यह जगद्विकास ही परमशिवका विश्वमयरूप कहा जाता है. **''यथा न्यग्रोधबीजस्थ: शक्तिरूपो महाद्रुम: तथा हृदयबीजस्थं विश्वम् एतत् चराचरम्''** ( परा.३४ ).

वस्तुत: विश्वोत्तीर्ण तथा विश्वमय दोनों ही स्थितियोंमें परमार्थता एक ही मूलसत्ताकी होती है. विश्वोत्तीर्णरूपमें जो परमशिव है, महेश्वर अथवा शिवभट्टारक है, विश्वमय रूपमें भी वस्तुत: वही है. जब वह परमशिव जगत् रूपमें अपना विकास करना चाहता है तो स्वयंसे अभेदात्मना अवस्थित प्रमाता एवं प्रमेयों ( तत्त्वों ) को अपनी स्वातन्त्र्यशक्ति( विमर्श )की महिमासे स्वयंको ही आधार बना कर पृथग् उन्मीलित कर देता है. कैसे? नगरदर्पणवत्. ऊन्मीलनका तात्पर्य है : पूर्वावस्थितका ही प्रकटीकरण, जो सृष्टिसे पूर्व प्रकाशैकात्म्य रूपमें अवस्थित है. जगद्विकास छत्तीस तत्त्वोमें विभक्त है. इस प्रकार प्रत्यभिज्ञादर्शनमें सृष्टि शाङ्कर वेदान्तके ब्रह्मविवर्त जैसी नहीं है प्रत्युत वह परमशिवकी आनन्दशक्तिका स्फारमात्र है. परमशिवकी स्वातन्त्र्यशक्तिका विलास है. स्वका उन्मीलन है जो अभिन्न होते हुए भी भिन्न दीखता है दर्पणमें प्रतिबिम्बित नगरके समान.

अभिनव तथा क्षेमराज दोनों ही विश्वप्रञ्चको महेश्वरकी उसी स्वातन्त्र्यशक्ति( विमर्श )का हेतु मानते हैं[९].

निष्कर्ष यह है कि प्रत्यभिज्ञा दर्शनमें परमसत्ता (परमशिव, महेश्वर) का अर्थ है शिव एवं शक्ति (अथवा प्रकाश एवं विमर्श) का सामरस्य. परन्तु यह सामरस्य दो पृथक् तत्त्वोंका नहीं प्रत्युत एक ही वस्तुके दो पक्षोंका है. मूल तत्त्व तो शिवाद्वैत ही है. विश्वोत्तीर्ण दशाका ही नाम है 'शिव' तथा विश्वमय दशाका नाम है 'शक्ति'. शिव प्रकाशरूप है तथा शक्ति विमर्श रूप! प्रकाशरूप शिव नित्यसत्तारूप अहन्ताका परिचायक है जिसके अभावमें किसी भी वस्तुका अस्तित्व ही सम्भव नहीं होता. विमर्शरूप शक्तिका तात्पर्य है अकृत्रिम अथवा स्वाभाविक रूपसे अहंका विस्फुरण या प्रतीति.

परन्तु परमसत्ताके ये दोनों पक्ष शिव तथा शक्ति (अथवा प्रकाश एवं विमर्श, विश्वोत्तीर्ण एवं विश्वमय) पूर्णतः अद्वैत हैं, कथमपि भिन्न नहीं. जैसे अग्निसे उष्णता, जलसे शीतलता, पुष्पसे सौरभ सर्वथा अभिन्न अथवा समरस होते हैं. ठीक उसी प्रकार शिव तथा शक्ति तत्त्व भी पूर्णतः अभिन्न हैं. ''**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी, न हिमस्य पृथक् शैत्यं नाग्नेगैष्ण्यं पृथग् भवेत्**'' (शिवदृष्टि : ३.२.७).

**प्रत्यभिज्ञादर्शनाभिमत ख्यातिका स्वरूप :**

प्रत्यभिज्ञादर्शनमें शिव-शक्ति अथवा प्रकाश-विमर्शकी यह अद्वैतानुभूति ही 'शिवाद्वैत'के नामसे जानी जाती है. यही प्रत्यभिज्ञा है, अर्थात्, पशुको (जीव) अपने पशुपतित्वका प्रत्यभिज्ञान. आत्माको अपने माहैश्वर्यका बोध होना. यही यथार्थज्ञान है. इस प्रत्यभिज्ञाकी प्रतीति न होना अथवा शिवाद्वैतताकी अनुभूति न होना ही इस दर्शनमें अख्याति मानी जाती है.

**वाल्लभ वेदान्ताभिमत ख्यातिस्वरूप :**

वाल्लभवेदान्त मूलतः अन्यख्यातिवादी दर्शन है. अन्यख्यातिको परिभाषित करते हुए आचार्य बालकृष्ण कहते हैं : ''**इन्द्रियेण गृह्यमाणाद्**

विषयात् शुक्त्यादिरूपाद् अन्यस्य रजतादे: ख्याति: अन्यख्याति: इति उच्यते'' (प्रमेयरत्नार्णव:). यह एक प्रकारकी बुद्धिवृत्ति है जिसे 'विपर्यास' कहा जाता है. विपर्यासकी व्याख्या करते हुए महाप्रभु वल्लभाचार्य कहते हैं ''विपर्यासो भिन्नार्थप्रतिपादक:''. और भिन्नार्थकी व्याख्या आचार्य बालकृष्ण करते हैं ''इन्द्रियसंयुक्ताद् अर्थाद् भिन्नो अर्थ:''. इस प्रकार इन्द्रियसंयुक्त अर्थ(शुक्ति)से भिन्न रजतरूप अर्थकी प्रतीति ही अन्यख्याति है. इसकी साङ्गोपाङ्ग प्रक्रिया स्पष्ट करते हुए गोस्वामी पुरुषोत्तम कहते हैं :

> ''तत्र पूर्वोत्पन्नस्य अनुभवस्य संस्कारात्मना स्थितस्य उद्बोधकै: प्राबल्ये मायिकार्थाकारवती बुद्धिवृत्ति: मायया बहि: क्षिप्यते. तदा सा पुरोवर्तिनं सर्वतो अंशतो वा आवृत्य बहि: अवभासते इति मायिकस्य अन्यस्यैव ख्यानाद् 'अन्यख्याति:'इति अत्र व्यवह्रियते''.

अन्यख्यातिका वाल्लभवेदान्तीय सिद्धान्त सर्वथा स्पष्ट है. परन्तु शुद्धाद्वैतमतमें अख्यातिका सन्दर्भ गोस्वामी पुरुषोत्तमचरणने विवेचित किया है जो प्रत्यभिज्ञादर्शन-सम्मत अख्यातिके नामसाम्यवश व्याख्येय प्रतीत होता है.

काश्मीरशैव तथा वाल्लभ अख्यातिवादोंका तुलनात्मक स्वरूप :

गोस्वामी श्रीपुरुषोत्तमचरणकी दृष्टिमें अन्यख्यातिकी प्रासङ्गिकता मात्र अल्पज्ञान सम्पन्नोमें है. जो तत्त्वज्ञान अथवा यथार्थ ज्ञानसे विरहित हैं उन्हींको अन्यख्याति होनी सम्भव है. परन्तु जो पूर्णज्ञानी अथवा पूर्णयोगी हैं उन्हें शुक्तिमें रजतका भ्रम भला क्यों होगा? वे तो तत्त्वविद् हैं, यथार्थज्ञाता हैं. अत: उन्हें अन्यख्याति क्यों होगी! वस्तुत: उनके सन्दर्भमें तो अख्याति ही उचित है. अर्थात् उनके सन्दर्भमें तो भ्रमाभाव ही उचित है : ''तद् अस्माकम् अभीष्टं परं कश्चिद् विशेषो अस्ति. ''अनागतमतीतञ्च...''(भाग.पुरा.१०।६१।२१) इत्यादिवा-

क्यात्. अतः तेषां ज्ञानस्य यथार्थत्वात् तत्र उक्ता अख्यातिः उचिता, न सर्वत्र''.

उपर्युक्त सन्दर्भमें निश्चय ही गोस्वामीजी 'अख्याति'शब्दका प्रयोग भ्रमात्मक ज्ञानके अभाव अर्थमें कर रहे हैं. परन्तु प्रत्यभिज्ञादर्शनमें प्रयुक्त अख्याति ठीक इसके विपरीत अर्थमें प्रयुक्त परिलक्षित होती है. शिव-शक्तिका, आत्मा-परमात्माका, पशु-पशुपतिका अथवा प्रकाश-विमर्शका अद्वैत ही मूलतः ख्याति अथवा यथार्थज्ञान है. इस अद्वैत अथवा प्रत्यभिज्ञा की अननुभूति ही शैव दर्शनमें अख्याति अथवा सङ्कुचितख्याति मानी गई है. इस प्रकार, वाल्लभ वेदान्त तथा शिवाद्वैत मतोमें प्रतिष्ठित अख्याति, सञ्ज्ञाबलेन तो उभयनिष्ठ सिद्ध होती है परन्तु दोनोंकी अन्वर्थनामता सर्वथा भिन्न है. शुद्धाद्वैतकी अख्याति भ्रमाभाव है जबकि शिवाद्वैतकी अख्याति पूर्णत भ्रममात्र है.

प्रत्यभिज्ञादर्शनमें भी अन्यान्य दर्शनोंकी तरह अज्ञानको ही बन्धनका कारण माना गया है. परन्तु इस ज्ञान-अज्ञानके स्वरूप एवं क्रियाकलापादिके विषयमें उसका मतैक्य अन्य दर्शनोंसे सिद्ध नहीं होता. प्रत्यभिज्ञादर्शनमें परमसत्ताकी अभिन्न शक्ति भगवती परावाक् (चित्-शक्ति) ही क्रमशः पश्यन्ती, मध्यमा एवं वैखरी रूपमें परमसत्तासे एक्य प्राप्त सूक्ष्मतम ज्ञानका स्थूलतम रूपमें आभासन करती है. अतः इसमें ज्ञाता, ज्ञान एवं ज्ञेय में परमार्थतः अभेद होता है. ज्ञाता ही ज्ञानके माध्यमसे ज्ञेय रूपमें अवस्थित होता है. इस ज्ञानका, अपने पूर्ण अबाधित सामर्थ्यके साथ प्रकाशित होना ही शिवदशा है परन्तु भेदरूपतया, अपूर्ण एवं सङ्कुचित सामर्थ्यके साथ स्फुरित होना ही अज्ञान तथा जीवदशा मानी गई है. अतएव प्रत्यभिज्ञामें अज्ञान, ज्ञानका अभाव नहीं प्रत्युत ज्ञानका सीमिततया प्रकाशन मात्र है. यही अज्ञान, जाड्य अथवा अविद्या है. यह अज्ञान ही स्वरूप विकासस्थितिमें ज्ञान बन जाता है. वस्तुतः ज्ञान एवं अज्ञान-दोनों ही परमसत्ताकी स्वतन्त्र इच्छाकी

लीलामात्र है ''**स्वात्मप्रकाशकत्वेनविद्या, जगत्प्रकाशकत्वेन अविद्या**''.

उपसंहार :

इसी सन्दर्भमें यह दर्शन त्रिविध मलों (आणव, मायीय तथा कर्म) की भी व्याख्या करता है. ये त्रिविध मल भी परमेश्वरेच्छया माया शक्तिद्वारा अवकल्पित होते हैं. इस प्रकार मायाके पञ्चविध कञ्चुकोंसे आवेष्टित होकर चित्, आनन्द इच्छादि शक्तियोंके सङ्कोचनके साथ कला विद्यादि रूपोंको धारण करना ही शिवका पशुभाव, तथा इनका निवारण ही मोक्षभाव है. इसलिए प्रत्यभिज्ञादर्शनमें मोक्षप्राप्तिसे किसी अवस्थान्तर या लोकान्तरकी प्राप्ति जैसी उपलब्धिका व्याख्यान नहीं. वस्तुत: माहैश्वर्यकी अनुभूति ही मुक्ति है. जीवकी शिवतावाप्ति ही मुक्ति है.

---------

**सन्दर्भ :**

१. ''जनस्यायत्नसिद्ध्यर्थम् उदयाकरसूनुना, ईश्वरप्रत्यभिज्ञेयम् उत्पलेनोपपादिता'' ई.प्र.का.४।१८.

२. त्रैयम्बकप्रसरसागरशायिसोमानन्दात्मजोत्पलजलक्ष्मणगुप्तनाथ:'' तन्त्रा ३७.६१.

३. ''भट्टेन्दुराजचरणाब्जकृताधिवास - हृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्'' ध्वन्या-लोकलोचन.

''तद्दृष्टिसंसृतिच्छेदि प्रत्यभिज्ञोपदेशिन:, श्रीमल्लक्ष्मणगुप्तस्य गुरोर्विजयते वच:'' मालिनीविजयवार्तिक, मङ्गल. २.

४. ''अनुग्रहाय लोकानां भट्टश्रीकल्लटादय:, अवन्तिवर्मण: काले सिद्धा भुवमवातरन्'' राज. ५।६६.

''श्रुत्वाभिनवगुप्ताख्यात् साहित्यं बोधवारिधे:'' क्षेमेन्द्र.

५. ''शुष्ककं मैव सिद्धेयमैवमुच्येय वापितु, स्वादिष्ट - परकाष्ठाप्त - त्वद्भक्तिरसनिर्भर:''

६. न विरक्तो न चापीशो मोक्षाकाङ्क्षी त्वदर्चक:, भवेयमपि तूद्रिक्तभक्त्यासवरसोन्मदो मुक्तिसञ्ज्ञा विपक्वाया भक्तेरेव त्वयि प्रभो, तस्यामाद्यदशारूढा मुक्तकल्पा वयं तत:'' शिवस्तोत्रावली.

७. ''मूढोऽस्मि दुःखकलितोऽस्मि जरादिदोषभीतोऽस्मि शक्तिरहितोऽस्मि तवाश्रितोऽस्मि, शम्भो तथाकलय शीघ्रमुपैमि येन सर्वोत्तमां धुरमपोज्झितदुःखमार्गः'' शिवस्तोत्रावली ११।८.

८. ''तदुत्तीर्णशिवभट्टारकस्य प्रकाशैकवपुषः प्रकाशैकरूपाएव भावाः'' प्रतिज्ञाहृदयम् पृ.५०.

९. ''चितिः स्वतन्त्रा विश्वासद्धिहेतुः'' प्रत्य.सू. १.
''सर्वएवायं विश्वप्रपञ्च आनन्दशक्तिस्फारः'' तन्त्रालोक पृ. २०१
''स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति'' प्रत्य. सूत्र. २.



# चर्चा

## काश्मीर शैव सिद्धान्तके विशेष परिप्रेक्ष्यमे शुद्धाद्वैतवादाभिमत ख्यातिविचारकी समीक्षा

डॉ. श्रीराजेन्द्र मिश्र

**बलिराम शुक्ल :** प्रत्यभिज्ञादर्शनकी अख्याति और प्रभाकरसम्मत अख्याति में क्या अन्तर है?

**राजेन्द्र मिश्र :** ज्ञानमीमांसाका जितना क्षोदक्षेम अन्यदर्शनोमें हुवा है उस स्तरपर प्रत्यभिज्ञादर्शनमें हमको प्राप्त नहीं होता है. मैनें बहुत खोजा पर इस विषयमें तुलनात्मक विवेचन प्राप्त नहीं हुवा. परन्तु जहां-जहां भी प्रकारान्तरसे ख्यातिके सन्दर्भमें निरूपण प्राप्त होता है वहां प्रत्यभिज्ञादर्शनके आचार्य निःसन्दिग्धरूपसे बतलाते हैं कि प्रत्यभिज्ञाकी अनुभूति न होना, शिवाद्वैतकी अनुभूति न होना यही अख्याति है. आचार्य बच्चुलाल अवस्थीजीने इसकेलिये 'सङ्कुचितख्याति'शब्द कहींसे ढूंढा है. उनको कहीं मिला होगा. और मैने जो व्याख्याएं यहांपर की उसमें आपने देखा होगा कि परमसत्ताकी जो शक्तियां हैं उनका सङ्कोचन ही जीवदशाकी ओर हमको ले आती है. अतः उन्होंने 'सङ्कोचन'शब्दका जो प्रयोग ख्यातिके सन्दर्भमें किया है तो वह मेरी समझसे अनुचित नहीं है. आप उसको 'सङ्कुचितख्याति' भी मान सकते हैं.

**विन्ध्येश्वरीप्रसाद :** यहां भ्रमप्रतीतिकेलिये 'अख्याति' शब्दका प्रयोग हुवा हो ऐसा नहीं लगता है.

**बलिराम शुक्ल :** मुझको भी ऐसा ही लगता है. यहां 'ख्याति'शब्दका प्रयोग ज्ञानाभावके अर्थमें हुवा लगता है.

**यज्ञेश्वर शास्त्री :** ख्यातिकी चर्चा इस दर्शनमें हुई ही नहीं है.

**सु. शे. शास्त्री :** मान्यवर! जीवको प्रत्यभिज्ञा न होना, शिवाद्वैतका बोध न होना यह तो अख्याति है. आपने यह जो प्रतिपादन किया वह ठीक ही है. परन्तु ''इदं रजतम्'' इत्यादि भ्रमस्थलोंमें जैसे अन्यदर्शन विभिन्न मतोंको उपस्थापित करते हैं ऐसे शिवाद्वैतवाद क्या प्रतिपादन करता है? क्या ''इदं रजतम्''को वह दो ज्ञान मानता है? अथवा एक मानता है अथवा दृश्यमान रजतको सत् मानता है, असत् मानता है, सदसत् मानता है? इन सब बातोंको हम जानना चाहते हैं.

**राजेन्द्र मिश्र :** प्रत्यभिज्ञादर्शनमें मुझको इस सम्बन्धमें कोई निरूपण प्राप्त नहीं हुवा है.

**सु. शे. शास्त्री :** एक बात आपने कही कि शाङ्करवेदान्तमें जैसे ब्रह्मातिरिक्तको मिथ्या मानते हैं वैसे काश्मीरशैवाद्वैतवादमें नहीं मानते. विवर्तवाद नहीं मानते. तो विज्ञानभैरवमें, जो कि शिवाद्वैतवादका ही ग्रन्थ है, कुछ वाक्य ऐसे मिलते हैं कि ''**यत्सकलं रूपम्** ...'' भगवान्‌का जो सकल रूप दिखलाई देता है वह भ्रान्तिकल्पितम् ऐसा लिखा है. वहां ऐसे स्पष्ट शब्द हैं. और तीन-चार इकठ्ठे श्लोक हैं. ये विज्ञानभैरवके शब्द हैं. तो अब यदि शैव दर्शनमें हम प्रपञ्चको मिथ्या न मानें तो विज्ञानभैरवके उन श्लोकोंकी सङ्गति कैसे बैठेगी? क्योंकि इधर कहा जा रहा है कि शिवका जितना भी स्वतन्त्रविलास है वह सत्य है वह भी प्रामाणिक है.

**गो. श्या. म. :** इस विषयमें मुझको ऐसा लगता है कि काश्मीरके शैवप्रत्यभिज्ञादर्शनकी दो शाखाएं हैं : केवलाद्वैतवादी और

शुद्धाद्वैतवादी. उस तरहका प्रभेद वहां काश्मीरके विद्वानोमें रहा ऐसा नहीं है. जब वे नीचे मैदानमें आये तब भी उनके ग्रन्थोंमें इस तरहका मतभेद विद्यमान ही रहा है. कुछ ग्रन्थकारोंने केवलाद्वैतवादी झोंकसे सारे प्रत्यभिज्ञादर्शनकी व्याख्या की. कुछ ग्रन्थकारोंने शुद्धाद्वैतवादी झोंकसे व्याख्याकी. न केवल इतना, अपितु महाराष्ट्रके सन्त ज्ञानेश्वरने एक 'अमृतानुभव'ग्रन्थ लिखा. उसमें ''**भाष्यकारांचि वाट पूसुनि**'' कहके गीताकी 'ज्ञानेश्वरी' व्याख्या लिखी. और जब उनके गुरुने कहा कि यह तो तुमने श्रीशङ्कराचार्यके अनुसार लिख दिया. तुम्हारा जो अनुभव है वह लिखो. तो उन्होंने 'अमृतानुभव' ग्रन्थ लिखा. उसमें पूराका पूरा काश्मीरप्रत्यभिज्ञादर्शन है. उसमें भी विद्वानोंको मतभेद हो गया कि इसमें केवलाद्वैतवाद है या शुद्धाद्वैतवाद. यह विवाद वहां अभी तक चल रहा है.

**सु. शे. शास्त्री :** उसमें दो मत तो अभी प्रसिद्ध हैं. हम लोगोंको ग्रन्थोंमें मिलता भी है. काश्मीरमें शैवाद्वैतवाद चलता है. और दाक्षिणात्य परम्परामें शैव विशिष्टाद्वैतवाद चलता है.

**गो. श्या. म. :** वस्तुतः दो नहीं तीन मत हैं, श्रीकरका दर्शन विशेषाद्वैतवादी है.

**के. ई. देवनाथन् :** मया भोजकारिकाः दृष्टा. भोजकारिकाः शैवसम्प्रदायप्रतिपादिकाः भवन्ति. शिवार्कमणिदीपिका अप्पय्यदीक्षितानां श्रीकण्ठसम्प्रदायस्य प्रवर्तको ग्रन्थः. तत् त्यजतु. सः शिवविशिष्टाद्वैतपरः ग्रन्थः. इदानीं भोजकारिकाः शैवदर्शनग्रन्थः. तत्र भवद्भिः उक्तं : ''**शक्तिः त्रिविधा, मलं कर्म माया इति**'' परन्तु तत्र उक्तम् अस्ति ''**मलं कर्म च माया च मायोत्थम् अखिलं जगत्**''. कलाविषये भवद्भिः पञ्चकलाः उक्ता. पतिः पशुः पाशम् एतत्

त्रितयम् अस्ति परन्तु तत्र शिवस्यापत्तिः जीवस्य मोक्षः इति भवद्भिः उक्तम्. तत्रापि स्वीकृतम् अस्ति, शिवो जीवः इति. परन्तु सदाशिवप्राप्तिः मोक्षः इति उक्तम् अस्ति. भवद्भिः शिवत्वापत्तिः इति उक्तम्. अतः केचन भेदाः सन्ति.

गो. श्या. म. : शैवानां द्वादश सम्प्रदायभेदाः सन्ति.

सु. शे. शास्त्री : अन्येषु ग्रन्थेषु सदाशिवतोऽपि अग्रे परमशिवतत्त्वं तैः स्वीकृतम्.

गो. श्या. म. : ''पाशयुक्तो भवेज् जीवः पाशमुक्तो सदाशिवः''.

सु. शे. शास्त्री : ततोऽपि अग्रे परमशिवस्य वर्णनम् अस्ति.

गो. श्या. म. : परमशिवः, सदाशिवः, शिवः एवं शिवत्रैविध्यं तत्र प्रतिपादितम् अस्ति.

राजेन्द्र मिश्र : अहं तावत् स्वीकरोमि अनुभवामि च यद् यथा वेदान्तमतस्य उत्तरोत्तरः प्रतिष्ठा वर्धते, विकासः संलक्ष्यते तेनैव प्रकारेण काश्मीरोद्गतस्य शैवसिद्धान्तस्यापि क्रमिको विकासः परिलक्ष्यते. अस्मिन् निबन्धे ये आचार्याः मया निरूपिता वर्तन्ते ते प्रायेण एकसूत्रनिबद्धाः दृश्यन्ते. आवसुगुप्तात् क्षेमराजं यावत् सर्वेऽपि गुरुशिष्यपरम्परया सम्बद्धाः आसन्. अतएव सर्वेषां विचारेषु ऐकमत्यं परिलक्ष्यते. परन्तु उत्तरवर्तिनो ये काश्मीरकाः आचार्याः वर्तन्ते यथा क्षितिकण्ठः इति. येषां ग्रन्थाः न संस्कृतभाषायाम् उपलभ्यन्ते अपितु लोकभाषासु परिलक्ष्यन्ते. तेषाम् आचार्याणां मतेषु किञ्चिद् वैभिन्यं परिलक्ष्यते. अनेनैव प्रकारेण दाक्षिणात्यशैवसिद्धान्तेऽपि वैभिन्यं वर्तते. अतएव इदं स्वीकर्तुं शक्यते यद् वेदान्तमतवद् अत्रापि प्रतिपदं वैभिन्यं वर्ततएव. अतएव विकासः सञ्जातः.

गो. श्या. म. : सङ्गीतरत्नाकरकारने सृष्ट्युत्पत्तिके वर्णनमें केवलाद्वैतवादी व्याख्यान और शुद्धाद्वैतवादी व्याख्यान दोनों शैवसिद्धान्तको पकड़ कर किये हैं.

सु. शे. शास्त्री : मदीयं निवेदनम् एवं वर्तते. वस्तुतो यः खलु वेदान्तसिद्धान्तः सएव शिवाद्वैतस्य सिद्धान्तः. 'सिद्धान्त'शब्देन तत्त्वम् उच्यते. तत्त्वं एकम्. काश्मीरशैवदर्शनेऽपि अद्वैततत्त्वं वर्तते अत्रापि अद्वैततत्त्वं वर्तते. इदानीं, तत्र मया यः प्रश्नः समुपस्थापितः, तत्र प्रपञ्चस्य सत्यत्वम् अङ्गीक्रियते केवलाद्वैते मिथ्यात्वम् उररीक्रियते. तत्र ब्रह्मभिन्नं सर्वं मिथ्या इति वेदान्तसिद्धान्तः. काश्मीरशैवाद्वैतवादो ब्रूते शिवात्मकः प्रपञ्चः सत्यः. एतेषां कथनं यद् ब्रह्मभिन्नं सर्वं मिथ्या. तर्हि ब्रह्मात्मको यदि प्रपञ्चः स्यात् तर्हि तत् सत्यो वा मिथ्या वा. तत्र तैरपि अङ्गीकरणीयं भवति. वेदान्तसिद्धान्ते स्वीक्रियते "**सर्वं खल्विदं ब्रह्म**" इति बाधसामान्याधिकरणम् आश्रित्य सर्वं ब्रह्मात्मकम् इति अभ्युपेति अस्माभिः. तर्हि सर्वमपि सत्यमेव. ब्रह्मात्मना सत्यम्. इदानीम् अवलोक्यतां, तत्र ब्रह्मात्मना सत्यम् उररीकृतम्, ब्रह्मभिन्नतया मिथ्यात्वम् उररीकृतम्. यद्धि ब्रह्मभिन्नं तन् मिथ्या. यदि हि ब्रह्मात्मकं तर्हि सत्यम्. तत्र तावद् शिवाद्वैतवादेऽपि अयमेव सिद्धान्तो अनुसृतः. शिवाद् भिन्नं यदि किञ्चित् प्रतीयते तर्हि मिथ्या. शिवात्मना यदि किञ्चित् प्रतीयमानं वर्तते तर्हि तत् सत्यम्. अतो विज्ञानभैरवादौ यद् भ्रान्तेः निरूपणं वर्तते तत्र तादृशो दृष्टान्तः उपस्थापितः तस्य अयम् अभिप्रायः : भैरवस्य यत् सकलं रूपं तद् यदि भैरवात् पृथक्तया प्रतीयमानं वर्तते तर्हि तद् भ्रान्तिकल्पितं वर्तते. शिवात्मना यदि प्रतीतिः जायते तर्हि सत्यम्. अतः तयोः दर्शनयोः नास्ति भेदः. एवमेव वाल्लभवेदान्तेऽपि. अद्वैतवेदान्तिनः कथयन्ति ब्रह्मभिन्नं मिथ्या. वल्लभाचार्याः कथयन्ति ब्रह्मभिन्नत्वं परित्यज्यताम्. ब्रह्मभिन्नं यदि अस्ति तदा मिथ्यात्वम् आयाति. ब्रह्मभिन्नमेव नास्ति किमपि! अतो ब्रह्मात्मना सत्यत्वं तेषां सिद्धान्ते आगतम्. अतः

काश्मीरशैवाद्वैतवादः अद्वैतवादः शुद्धाद्वैतवादः इति त्रयाणाम् ऐकमत्यम् अस्मिन् अंशे भवति.

**बलिराम शुक्ल :** काश्मीरशैवदर्शने ब्रह्मभिन्नत्वमेव अप्रसिद्धम्. अतो ब्रह्मभिन्नं मिथ्या इति कथनस्य आवश्यकतैव नास्ति.

**सु. शे. शास्त्री :** मास्तु किन्तु तात्पर्यं तत्रैव. ब्रह्मभिन्नं नास्ति तर्हि सत्यमेव.

**के. ई. देवनाथन् :** महान् भेदो मया तत्र दृष्टो अद्वैतपक्षे शुद्धाद्वैतपक्षे काश्मीरशैवपक्षेऽपि "ब्रह्म एकमेव तत्त्वम्" इति अस्तु. ब्रह्मभिन्नं मिथ्या इति त्रयोऽपि वदन्तु परन्तु कश्चिद् भेदो वर्तते. ब्रह्मभिन्नं सर्वं मिथ्या इत्यस्य शाङ्करमते अर्थः एवं भवति : 'सर्व'शब्दितो यो वर्तते सः सर्वोऽपि आरोपितो मिथ्या. बाधार्थसामानाधिकरण्यस्थले सर्वत्वं त्यज्यते परन्तु एतेषां पक्षे विवर्तवादो नास्ति. ब्रह्मभिन्नस्य मिथ्यात्वं न स्वीक्रियते. ब्रह्मभिन्नस्य ब्रह्मात्मकत्वम् अङ्गीक्रियते. ब्रह्मतादात्म्यापन्नत्वं स्वीक्रियते. तत्रतु तादात्म्यापन्नन्तु बहु वस्तु वर्तते. नानात्वस्य निषेधो नास्ति.

**सु. शे. शास्त्री :** यद्यपि प्रक्रियायाम् अस्ति भेदः. तत्र मया किमपि न उच्यते. भवद्भिः यथा निरूपितं तत्र 'सर्व'शब्दस्य परित्यागो भवति. भवतु. किन्तु ब्रह्मैव अस्ति इत्याकारकं ज्ञानं तत्र जायते. तस्य किं तात्पर्यम् ? ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वम्. तर्हि ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वं यथा अत्र आयाति तथैव तत्रापि ब्रह्मात्मकम् इत्याकरके ज्ञानेऽपि ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वम् आयाति.

**के. ई. देवनाथन् :** नहि. तत्र भेदो वर्तते. अद्वैतिभिः उच्यते ब्रह्मसत्तातिरिक्तसत्ताभावः. ब्रह्माधीनसत्ताभिन्नसत्ताभावो अन्यैः उच्यते. अतो जगतो या सत्ता सा ब्रह्माधीना.

**सु. शे. शास्त्री :** यदि ब्रह्मैव एतद्रूपेण आगतं यदि एतेषाम् अयं सिद्धान्तः तर्हि ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वम् आगतम्.

**बलिराम शुक्ल :** नैव आगतम्. ब्रह्मसत्ता भवद्भिः पारमार्थिकी स्वीकृता.

सु. शे. शास्त्री : एतैरपि ब्रह्मसत्ता पामार्थिकी अङ्गीक्रियते.

बलिराम शुक्ल : एतेषां मते जगतः सत्तापि पारमार्थिकी. भवतां मते जगतः सत्ता व्यावहारिकी सत्ता. अतो ब्रह्मातिरिक्तता जाता.

प्रह्लादाचार : मन्ये ब्रह्मसत्तारिक्तिसत्ताभावो द्वेधा वर्णयितुं शक्यते. ब्रह्मसत्ताभिन्ना सत्तैव नास्ति इति हेतोः ब्रह्मसत्तातिरिक्तसत्ता-भावः. ब्रह्मासत्तातिरिक्ता पारमार्थिकी सत्ता जगतो नास्ति अतो ब्रह्मसत्तातिरिक्तसत्ताभावः. अथवा ब्रह्मसत्ता या पारमार्थिकी सत्ता सैव वर्तते जगति. यतोहि ब्रह्मजगतोः परिणाम्युपादानोपादेयभावः स्वीकृतो वर्तते ततो हेतोः ब्रह्मनिष्ठा या पारमार्थिकी सत्ता सैव जगति वर्तते. अतो ब्रह्मसत्तातिरिक्तसत्ताभावो जगतः. एवञ्च 'ब्रह्मसत्तातिरिक्तस-त्ताभावः'इति शब्दः समानः परन्तु दर्शनयोः प्रतिपादनविषये...

के. ई. देवनाथन् : ब्रह्मसत्तारिक्तसत्ताभावः इत्येव नास्ति. ''**यदधीना च यत्सत्ता तत् तदित्येव भण्यते**'' इति भामतीवाक्यं परन्तु अधीनत्वघटितएव परिष्कारो वर्तते. ब्रह्माभिन्नसत्ताभिन्नसत्ता-कत्वाभावः. इयं या व्यावहारिकी सत्ता वर्तते घटादिषु सा ब्रह्मसत्ताधीना. अरोपाधिष्ठानस्य ब्रह्मणो अभावे एतेषां सत्ता तथा न भवति इति कृत्वा व्यावहारिकी सत्ता ब्रह्मसत्ताधीना परन्तु भिन्ना.

गो. श्या. म. : वयं हि शुद्धाद्वैतवादिनो ब्रह्मणः कैवल्ये सर्वथा अविप्रतिपन्नाः परन्तु केवलाद्वैतवादस्य कैवल्ये महत्येव विप्रतिपत्तिः अस्माकं विद्यते. ततोहि आचार्यचरणानाम् इयं पंक्तिः सर्वथा अवधेया ''**ब्रह्मणः सर्वरूपत्वम् अवयुज्य निरूपितम्, अलौकिकं तत् प्रमेयं न युक्त्या प्रतिपद्यते**''( त.दी.नि.१।६२ ). बाधार्थसामानाधिकरण्यविषयेऽपि आचार्यचरणानां स्वोपज्ञे प्रकाशे ईदृशी विवेचना समुपलभ्यते : '' 'अवयुज्य' जड़-जीवौ पृथक्कृत्य. नाम ''**ऐतदात्म्यम् इदं सर्वं स**

**आत्मा तत् त्वम् असि**'' इति इदमा निर्दिश्यमाने विषयप्रपञ्चे सर्वस्य ऐतदात्म्यं मायावादिभिः न अङ्गीक्रियते, तत्रतु बाधार्थसामानाधिकरण्यमेव तैः अङ्गीक्रियते. तदा ''**तत् त्वम् असि**'' इत्यत्रापि बाधार्थसामानाधिकरण्यं कुतो न अङ्गीक्रियते? कुतः तत्र भागत्यागलक्षणया ''तत् त्वमेव असि'' इत्येवम् अङ्गीक्रियते? एवम् एकमेव वचनं कुतो अवयुज्य द्विधा व्याख्यातम्? तत्र आचार्यचरणाः प्रतिपादयन्ति यत् ''सर्वं ब्रह्म'' इति वक्तुं जीवस्य ब्रह्मता निरूपिता. ननु एकस्मिन्नपि वाक्ये अस्तु वाक्यभेदः तथा सत्यपि श्रुतिः जीवस्य ब्रह्मतामेव बोधयेत. सा श्रुतिबोधितापि ब्रह्मता पुनः अभिधया साक्षाद् अनुपपन्नेति भागत्यागलक्षणया अखण्डमेव वाक्यार्थं बोधयति इति अङ्गीक्रियते. तत्र यदि एवमेव श्रुतिविवक्षितं चेद् आचार्यचरणाः कथयन्ति ''**साधु बुद्धिमतां बकबन्धप्रयासो वृत्तः. उपदेशफलम् आयुष्मतां किं वृत्तम् इति अनुसन्धेयं, ब्रह्मभावेन अधिकधर्माभावाद्, देहादिभेदबोधनेनापि दोषनिराकरणसम्भवात् च. ततो व्यर्थः प्रकरणभेदमपि अङ्गीकृत्य महावाक्यत्वेन उपदेशप्रयासः. तर्हि श्रुतिः कथम् एवं निरूपयति इति चेत् तत्र आह 'अलौकिकं तत् प्रमेयं न युक्त्या प्रतिपद्यते**'' ( त.दी.नि.प्र.१।६२ )तेन यदि जगतो ब्रह्मात्मकत्वं बाधार्थसामानाधिकरण्येन तदा जीवस्यापि अभेदो बाधार्थसामानाधिकरण्येन वक्तव्यः. यदि जीवस्य अभेदः तथा न भवति चेत् तदा जडस्यापि अभेदो बाधार्थसामानाधिकरण्येन मा भूद्. तत्रापि अभेदएव स्वीकरणीयः इति आचार्याणाम् अभिप्रायः.

**प्रह्लादाचार :** विद्वद्भिः सर्वैः चर्चाकाले सर्वेऽपि विषयाः प्रतिपादिताः सन्ति. अस्मिन् अधिवेशने त्रिभिः विद्वद्वरैः स्वीयं मतम् अत्यन्तं समर्थया रीत्या उपस्थापितं वर्तते.

अनिर्वचनीयख्यातिवादः श्रीपारसनाथद्विवेदीमहाभागैः

प्रतिष्ठापितः. तत्र अनिर्वचनीयत्वञ्च सत्त्वेनन असत्त्वेन सदसत्त्वेन वा निर्वक्तुम् अशक्यमेव. तादृशस्य अनिर्वचनीयस्य सदसद्विलक्षणस्य रजतस्य प्रातिभासिकत्वेन अङ्गीकारो तस्मिन् सिद्धान्ते. तस्य भानं कीदृशं भवति ? तस्य चाक्षुषत्वं निराकृत्य तस्य ज्ञानस्य साक्षिरूपत्वं तैः प्रतिपादितं वर्तते. एवं रीत्या तन्मते सतः ख्यातिरेव, असतः ख्यातिः नास्ति. सत्ख्यातिवादिनः ते इत्यपि तैः वक्तुं शक्यते परन्तु सत्स्वरूपम् अनिर्वचनीयम् इत्येव प्रतिपाद्यते. यथा अन्येषु सिद्धान्तेषु तथा सत्ख्यातिः इति न अहं वक्तुं प्रभवामि. यतोहि विशिष्टाद्वैतदर्शने सत्प्रभेदाः न सन्ति. सद् एकस्वरूपमेव भवति. तस्मात् भ्रान्तिज्ञाने यत् सत् भासते तदेव सत् अन्यदापि भासते. तयोः सतोः स्वरूपविषये स्वभावविषये तैः भेदो न क्रियते. अद्वैतदर्शनेतु सतएव ज्ञानम् अङ्गीक्रियते, अत्यन्तासतः ख्यातिः तैः न अङ्गीक्रियते. परन्तु सोऽयं सत्पदार्थो न भवति पारमार्थिकसत्पदार्थो अथवा व्यावहारिकसत्पदार्थः इत्येव तत्सिद्धान्तस्य वैशिष्ट्यं भवति. अतो मन्ये अनिर्वचनीयख्यातिरपि सत्ख्यातिरेव. 'सत्ख्याति' शब्दप्रयोगे अस्पष्टता भवेद्, 'अनिर्वचनीयख्याति'पदप्रयोगेतु सत्ख्यातिस्वरूपं अद्वैतमतेऽपि स्पष्टम् उक्तं भवति इति हेतोः 'अनिर्वचनीयख्याति'शब्दः तत्सिद्धान्ते प्रयुज्यते इति अहं मन्ये.

विशिष्टाद्वैतसिद्धान्तः श्रीमद्भिः देवनाथाचार्यैः प्रतिपादितः. तन्मते अख्यातिवादोऽपि अङ्गीकृतो विलक्षणः सत्ख्यातिवादोऽपि अङ्गीकृतः. सर्वेषु निदर्शनेषु एकविधएव ख्यातिप्रकारः इति नास्ति. क्वचित् 'सत्ख्यातिः' वक्तुं न शक्येत. यथा ''पीतः शङ्खः''इति भ्रमकाले सत्ख्यातिः न युज्यते. 'सत्ख्याति'शब्देन तस्मिन्नेव वस्तुनि विद्यमानाः अंशाः भासन्ते चेत् 'सत्ख्यातिः'. शुक्तौ विद्यमानाः रजतांशाः

भासन्ते इति हेतोः ''इदं रजतम्''इति ज्ञानं 'सत्ख्यातिः'इति तैः उच्यते. ''पीतः शङ्खः''इति ज्ञानं यदा भवति तदानीं शङ्खगताः पीतांशाः नैव भासन्ते किन्तु नायनरश्मिवृत्तयः पीतांशाः भासन्ते. एवञ्च नयनरश्मिगतपीतत्वस्य एवं शङ्खस्य च यो असंसर्गः सो न गृहीतः. वस्तुतस्तु तत्र ज्ञानद्वयम् अस्ति. पीतत्वज्ञानम् एकं शङ्खज्ञानम् अन्यत्. तयोः ज्ञानयोः स्वरूपतो विषयतः च भेदो न गृहीतः इति हेतोः ''पीतः शङ्खः''इति ज्ञानं जायतइति अस्मिन् अंशे तेषां ख्यातिवादः प्राभाकरख्यातिवादएव. परन्तु अन्यत्र यत्र-यत्र शक्यते तथा तत्र त्रिवृत्करणवादो वा पञ्चीकरणप्रक्रिया वा अनुसर्तुं शक्यते, प्रतिनिधिन्यायो वा वक्तुं शक्यते तत्र सर्वत्रापि विभिन्नएव सत्ख्यातिवादः तत्सिद्धान्ताभिमतः तैः निरूपितः.

श्रीराजेन्द्रमिश्रमहाभागैः शैवदर्शनसम्मतः ख्यातिवादः प्रकटीकृतः. परन्तु एतद्विषये अस्माकं सर्वेषामपि जिज्ञासा वर्तते. भवतु नाम इदं सांसारिकम् अस्माकं ज्ञानं यद् भवति तज्ज्ञानं शैवसिद्धान्ते अख्यातित्वेन निरूप्यतइति परन्तु भ्रमत्वेन व्यवहारकाले यज् ज्ञानं जायते तस्य ज्ञानस्य स्थितिः कीदृशी? इति अस्मिन् विषये आस्माकं सर्वेषां जिज्ञासा वर्तते. मन्ये कालान्तरे शैवदर्शनविज्ञानिनः तादृशाः यदि भवन्ति तत्र एतस्मिन् विषयेऽपि अस्माकं संशयोऽपि परिहृतो भवति इति विदुषां पुरतो विशेषं वक्तुं न प्रभवामि इति उक्त्वा अहं विरमामि.

---

## संगोष्ठ्युत्तरलेखनम्

**डॉ. श्रीराजेन्द्र मिश्र**

यद्यपि तत्त्वमीमांसादृष्ट्या शङ्करवेदान्त तथा काश्मीर प्रत्यभिज्ञादर्शन अभिन्नसे

प्रतीत होते हैं और इसीलिये प्रत्यभिज्ञादर्शनकी जगद्विषयक धारणा अद्वैतके मिथ्यात्ववादके सर्वथा समान लगती है. फिरभी दोनोंमें अन्तर है. वह अन्तर यह है कि प्रत्यभिज्ञादर्शनमें संसारकी व्याख्या किसी 'विवर्तवाद'के सहारे नहीं की गई है. अतएव उसमें अद्वैतवेदान्त जैसा पारमार्थिक एवं व्यावहारिक सत्ताका दृष्टिभेद भी नहीं है.

कठिनाई यह है कि प्रत्यभिज्ञाकी परमसत्ता (परमशिव) तथा सृष्टिविषयक सारी मान्यताएं हैं तो एक जैसी, परन्तु प्रत्यभिज्ञादर्शन व्यावहारिक जगत् (विमर्श)को परमशिव (प्रकाश)का विवर्त नहीं मानता. और विना विवर्तस्वीकृतिके जगत्की सत्ताकी सम्यक् व्याख्या कर पाना कठिन है.

परमतत्त्व शिव है जो स्वतन्त्र है, अद्वितीय है, सच्चित् है तथा शिवमय है. वह शिवसे इतर नहीं, उसका विवर्त भी नहीं, उससे पृथक् नहीं. प्रत्युत दर्पणमें प्रतिबिम्बित नगरके समान ही शिवमें अवभासित है. वस्तुत: शिव ही विषय एवं विषयी—दोनों रूपोंमें भिन्नतया प्रतीत होता है, जबकि वह भेद है नहीं.

यहीं प्रत्यभिज्ञादर्शन अद्वैतसे सर्वथा अलग हो जाता है. अद्वैतमें सत्ताके दो रूप हैं—पारमार्थिक तथा व्यावहारिक. व्यवहार परमार्थका विवर्त है जैसे रज्जुमें सर्प अथवा शुक्तिमें रजत. परन्तु प्रत्यभिज्ञामें सत्ता एक ही है—परमार्थ तथा व्यवहार दोनों ही रूपोंमें, सर्पमय रज्जु या रजतमय शुक्ति ही परमसत्ता है. जब विवर्त है ही नहीं तो ख्यातिका प्रश्न ही नहीं उठता.

अद्वैतमें विवर्तका हेतु है माया, जो कि अनिर्वचनीय है. अत: शुक्ति-रजत एवं रज्जु-सर्प सन्दर्भमें होनेवाले भ्रान्तज्ञानको वहां अनिर्वचनीयख्याति माना गया है. परन्तु प्रत्यभिज्ञादर्शनमें भ्रान्ति है ही नहीं—शिवाद्वैततत्त्व मात्रकी प्रतिष्ठाके कारण.

प्रत्यभिज्ञादर्शनका परमशिव विषय-विषयीभावसे परे है. फिर भी वह

विषय एवं विषयी दोनोंका अधिष्ठान है. फलत: इस दर्शनमें शिवतत्त्वसे भिन्न जगत्की व्याख्या ही सम्भव नहीं. जबकि अद्वैत वेदान्तमें ब्रह्म (परमार्थ)से भिन्न जगत् (व्यवहार)की व्याख्या सम्भव है — विवर्तवादके माध्यमसे. अद्वैतवेदान्तमें परमार्थ (ब्रह्म) तो अन्तिम सत्य (Ultimate reality) है ही, व्यवहार(जगत्) भी निर्बाध अवधिमें (for the time being) सत्य है, विवर्तरूपमें ही सही. रज्जु अथवा शुक्ति तो सत्य हैं ही, जब तक सर्पत्व अथवा रजतत्व सरीखे भ्रान्तज्ञानका अपलाप न हो जाय, रज्जु तथा शुक्ति में सर्प तथा रजत का ज्ञान भी सत्य है.

प्रत्यभिज्ञादर्शनमें ऐसा नहीं है. शिवका स्पन्दमात्र होनेके कारण जगत् शिवमें यूं अवस्थित है जैसे समुद्रमें उसकी तरङ्गें. केवलाद्वैत वेदान्त तरङ्गको सागरजलका विवर्त मानता है. अत: उसकी सत्ताके ज्ञानका प्रश्न उठता है. परन्तु प्रत्यभिज्ञा तरङ्गयुक्त सागरको भी 'सागर' ही मानता है.

वेदान्तमें माया ब्रह्मकी अभिन्न शक्ति है जो सदसद्विलक्षण अतश्च अनिर्वचनीय है. परन्तु प्रत्यभिज्ञामें शिवकी शक्ति, शिवसे अभिन्न होते हुए भी, अनिर्वचनीय नहीं है. केवलाद्वैतका ब्रह्म जगत्का कारण नहीं, परन्तु प्रत्यभिज्ञाका शिव विशुद्ध चेतन, कूटस्थ, नित्य तथा अपरिणामी होते हुए भी जगत्का कारण भी है, सर्वथा शुद्धाद्वैतके कृष्णतत्त्वकी तरह.

यहां दोनों तथ्य परस्पर विरोधी प्रतीत हो सकते हैं कि यदि शिव कूटस्थ, नित्य तथा अपरिणामी है तो परिणामी जगत्का कारण कैसे? इस प्रश्नका उत्तर देते हुए आचार्य अभिनव कहते हैं कि परिणामी जगत् शिवकी स्पन्दशक्ति मात्रका परिणाम है. स्पन्दशक्ति ही वस्तुत: परिवर्तन (world creation) का कारण है. परन्तु इस स्पन्दजन्य परिवर्तन(सृष्टि)के बावज़ूद परमशिवकी स्थितिमें कोई अन्तर नहीं आता. वह एकरूप तथा विश्वातीत ही रहता है. इस स्थितिमें द्वैत एवं अद्वैत दोनों ही नहीं रहते **''न द्वैतं नापि चाद्वैतम्''** (तन्त्रालोक).

अद्वैतवेदान्तके परब्रह्ममें न तो परमशिव जैसी स्पन्दशक्ति है और

नहीं ब्रह्मकी मायाशक्तिका शिवाभिन्न शक्तिके साथ कोई साम्य; अत: प्रत्यभिज्ञा दर्शनमें परमशिवकी प्रतिष्ठा अद्वैत ब्रह्मसे भी परतर सिद्ध होती है तथा शुद्धाद्वैतके कृष्णतत्त्वके समकक्ष.

विवर्तवादमें परमार्थत: कारणसे कार्यको अभिन्न माना गया है परन्तु व्यवहारत: कारणसे कार्य भिन्न प्रतीत होता है. यही उसका मिथ्यात्व है. परन्तु प्रत्यभिज्ञादर्शनमें इस कार्यकारण-सम्बन्धकी प्रभूत व्याख्या नहीं की गई है, बस अपनी मान्यताओंको स्पष्ट शब्दोंमें उपन्यस्त कर दिया गया है.

यद्यपि प्रत्यभिज्ञादर्शनकी जगद्विषयक सोच, अद्वैतवेदान्त जैसी ही है तथापि वह उसकी व्याख्या विवर्तवादके माध्यमसे नहीं करता. आखिर क्यों? यह प्रश्न अनुत्तरित है. या तो प्रत्यभिज्ञा दर्शन जगत्को परमशिवका विवर्त मानता ही नहीं (क्यों कि उसकी दृष्टिमें तो जगत् 'दर्पणनगरवत्' शिवमें प्रतिबिम्बित है. यह एक विलक्षण दृष्टान्त है. रज्जुमें सर्पका अथवा शुक्तिमें रजतका भ्रमात्मक ज्ञान तो सम्भव है परन्तु दर्पणमें प्रतिबिम्बित नगरके ज्ञानमें भ्रम कैसा? दर्पण (परमशिव) भी सत्य है, नगर (जगत्) भी सत्य है और दोनों सत्य एकाकार हैं, विषय एवं विषयी के अधिष्ठानकी एकताके कारण.

केवलाद्वैतके भ्रमज्ञानमें सर्प एवं रज्जु अथवा शुक्ति एवं रजत के अधिष्ठान परमार्थत: भिन्न होते हैं, व्यवहार मात्रमें अभिन्न प्रतीत होकर मिथ्याध्यासकी सृष्टि करते हैं. परन्तु प्रत्यभिज्ञामें यह मिथ्याध्यास है ही नहीं, इसीलिये वहां 'भ्रमात्मकज्ञान'की भी कोई सत्ता नहीं, कोई विवाद नहीं, कमसे कम जगत्की सत्ताके सन्दर्भमें. परन्तु इसका यह अर्थ कतई नहीं कि प्रत्यभिज्ञादर्शनमें मिथ्याध्यासकी अवधारणा है ही नहीं.

प्रत्यभिज्ञादर्शनमें परमशिवको स्वतन्त्र एवं स्वप्रकाश (प्रकाशात्मा) कहा गया है. जो स्वतन्त्र है वह जड़ नहीं होगा. आचार्य अभिनव स्पष्टत: कहते हैं कि **''स्वतन्त्रं हि स्वप्रकाशत्वम् उच्यते. जाड्यं परप्रकाश्यत्वम् उच्यते''** (तन्त्रालोक). अर्थात् मात्र स्वतन्त्र वस्तु ही प्रकाशात्मा होती है

जबकि जड़ वस्तु प्रकाशार्थ पराधीन होती है. पराधीन वस्तुकी स्वतन्त्र सत्ता होती ही नहीं. जिसमें चैतन्य नहीं वह 'अवस्तु' है, वेदान्तके इस मतको क्षेमराज भी स्वीकार करते हैं शिवसूत्रविमर्शिनीमें.

विश्वकी समस्त वस्तुएं परिज्ञानार्थ (चेतन) आत्मामें अध्यस्त हैं और आत्माका भी अभिमान (अयमहम्) अनात्मा अर्थात् अचेतन (जड़) शरीरमें होता है. अद्वैतवेदान्त इसीको मिथ्याध्यास मानता है. आचार्य क्षेमराज भी इस प्रकारके अभिमानको अज्ञानमूलक ही मानते हैं. इस प्रकार, सिद्धान्तमें तो प्रत्यभिज्ञादर्शन भी मिथ्याध्यास अथवा अज्ञानको मान्यता प्रदान करता है परन्तु जगत्की सत्ताके सन्दर्भमें वह वेदान्तके विवर्तको नहीं मानता है. जगद्विषयक उसकी अवधारणा सर्वथा शुद्धाद्वैतके ही समान है.

मेरा अन्तिम निष्कर्ष मेरी अपनी समझपर आधारित है. इसका कोई सटीक सन्दर्भ मैने काश्मीर प्रत्यभिज्ञादर्शनके ग्रन्थोंमें अभी तक नहीं देखा है. यदि विद्वज्जन शुक्ति-रजत अथवा रज्जु-सर्प दृष्टान्तों द्वारा ही, प्रत्यभिज्ञादर्शनका भ्रान्तिज्ञान विषयक दृष्टिकोण जानना चाहते हैं तो मैं कहूंगा कि शुक्तिको शुक्ति न समझना (प्रत्युत उसे रजत समझना) प्रत्यभिज्ञाकी दृष्टिमें अख्याति अथवा सङ्कुचितख्याति ही है. यहां 'ख्याति'का अर्थ है ज्ञान तथा 'अख्याति'का अर्थ है अज्ञान. परन्तु प्रत्यभिज्ञादर्शनका यह अख्यातिवाद प्राभाकर मीमांसकोंके अख्यातिवादसे सर्वथा भिन्न होगा.



# श्री व ल्ल भ वे दा न्ता भि म ता अ न्य ख्या ति:
# श्रीमद्भागवतनिरूपितविकल्पख्यातिः च*

डॉ. श्रीविन्ध्येश्वरीप्रसादमिश्रो 'विनयः'

निगमागमसच्छास्त्र-वेद्यायानन्तरूपिणे ।।
बहुकल्पविकल्पाभ्यां विविक्तायात्मने नमः ।।१।।
वाङ्मनोबुद्ध्यतीतं यत् कल्प्यते बहुधा पुनः ।।
वादिभिः ख्यायते तत्त्वं तमद्वैतमुपास्महे ।।२।।
श्रीमद्भागवतं रसामृतनिधिर्विद्याऽवगाहावधिः
प्रेम्णः कोऽपि विधिर्निषेधरहितः संसाररोगौषधिः ।।
पुण्यानां प्रणिधिस्तथा प्रतिविधिर्दुर्वासनानामथ -
प्राज्ञानामधिकारिणामनुपधिः स्वात्मा परः शेवधिः ।।३।।
तदाश्रित्यात्र सन्दर्भे तदन्तःसाक्ष्यसम्मता ।।
'विकल्पख्याति'रित्याख्या ख्यातिर्नूत्ना विभाव्यते ।।४।।
प्रसङ्गेऽस्मिन् विपश्चिद्भिर् अन्यैर्या उररीकृताः ।।
ख्यातयस्ताः समादाय वल्लभोक्ता समीक्ष्यते ।।५।।

इह ख्यातिवादविमर्शम् अन्तरेण भ्रमभातपदार्थानां शुक्तिकाकलधौत - रज्जुभुजङ्ग - मृगमरीचिका - पीतशङ्ख - द्विचन्द्रादीनां व्याख्यानं तदद्वारेण च

*वाल्लभे वेदान्ते श्रीमद्भागवतमहापुराणस्य सर्वसन्देहवारकं प्रामाण्यं, भगवन्नामात्मकत्वं, भगवति परमस्नेहजनने अनितरसाधारणमुपकारकत्वं च स्वीकृतम् अस्ति. तस्मिन्नेतस्मिन् ग्रन्थराजे न केवलं स्पृहणीयं हि अप्रतिमं वैदुष्यमपितु महाभावं च वहतां तत्र श्रीविध्येश्वरीप्रसादमहाभागानाम् अतिविस्तृतस्य अस्यालेखपत्रस्य प्रस्तूयमाने सचर्चकि आलेखसंकलने समावेशनं नूनं महते गौरवायैव. तथापि अन्यैरपि आलेखपत्रैः तत्तत्ख्यातिवादानां विमर्शस्य कृतत्वादेव चर्चितविषयाणामेव पुनरुक्त्या प्रतिपिपादयिषितविषये मतेः विषयान्तरसञ्चारो मा भूद् इति कतिचन तादृशाः अंशाः नेह संगृह्यन्ते (सम्पा.).

**''नेह नानास्ति किञ्चन''** ( बृह.उप. ४।४।१९ ) **''एकमेवाद्वितीयं''** ( छान्दो.उप.६। २।१ ) **''मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति''**( बृह.उप.४।४।१९ ) **''यत्र हि द्वैतमिव भवति तदितरेतरं पश्यति यत्रत्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयद्''** ( तत्रैव २।४।१२ ) इत्यादिश्रुतिसहस्रप्रोक्तस्य प्रपञ्चमिथ्यात्वस्य च साङ्गत्यं दुरन्वयमिति वेदान्तराद्धान्तस्य स्वयं सूत्रकृद्भगवद्बादरायणसन्दृब्धस्य समन्वयप्रस्थानापरपर्यायस्य श्रीमद्भागवतस्य अभिमता ख्यातिरपि उन्नेतव्या तत्तत्सम्प्रदायाभिनिवेशनिरपेक्षा तदन्तःसाक्ष्यविग्रहेदम्प्रथमतयेति हरिगुरुकृपया किञ्चिद् उच्यते.

अथ का पुनः ख्यातिः ?, कतिधा ?, कैः-कैः च ?, कीदृशी अभ्युपगता ? इति जिज्ञासायांम् अस्ति सङ्क्षेपः. 'ख्यातिर्'नाम प्रतीतिः. साच सद्विषयिणी असद्विषयिणी सदसद्विषयिणी वा मूलतः त्रिधा. वादिनस्तु केचन चतुर्धा केचित् पञ्चधा अन्ये सप्तधा इति अभिप्रयन्ति. तद् यथा आह श्रीजयन्तभट्टः **''तथाहि भ्रान्तबोधेषु प्रस्फुरद्वस्तुसम्भवात्, चतुष्प्रकारा विमतिः उपपद्येत वादिनाम्. विपरीतख्यातिः असत्ख्यातिः आत्मख्यातिः अख्यातिः''** ( न्या.मं.प्रमा.प्रक. ) इति. अन्येतु एवं जगदुः **''आत्मख्यातिः असत्ख्यातिः अख्यातिः ख्यातिरन्यथा तथा अनिर्वचनख्यातिः इत्येतत् ख्यातिपञ्चकं, विज्ञानशून्यमीमांसातर्काद्वैतविदां मतम्''** ( 'मीमांसा' इति पदेन अत्र तदेकदेशिनः प्राभाकरा अभिमताः. 'अद्वैतविदां' भाष्यकृद्भगवत्पादशङ्कराचार्यसिद्धान्तजुषाम् ) इति. एतदतिरिक्तं सदसत्ख्यातिं सांख्या आर्हताः च, विपरीतख्यातिं भट्टप्रघट्टकानुवर्तिनो मीमांसकाः, सत्ख्यातिं श्रीरामानुजमतानुयायिनो विशिष्टाद्वैतवेदान्तिनः, पूर्वोक्तविलक्षणाम् असत्ख्यातिम् आनन्दतीर्थीया द्वैतवेदान्तिनो अन्यख्यातिं श्रीवल्लभाचार्यचरणानुगामिनः शुद्धाद्वैतवेदान्तिनः च इति अस्य उपबृंहणम् अवगन्तव्यम्.

अथ अभिनवाम् अन्यख्यातिम् उद्भावयामासुः श्रीमद्वल्लभाचार्यानुगाः शुद्धाद्वैतधीधनाः. तत्स्वरूपम् आह श्रीमान् पुरुषोत्तमो **''...शुक्तिरजतादिस्थले मायया बहिःक्षिप्तबुद्धिवृत्तिरूपं ज्ञानमेव अर्थाकारेण ख्यायते इति मन्तव्यम्. अतः प्रबलसंस्कारेण प्रबलोद्बोधकसामग्र्या वा सहकृता माया बुद्धिं बहिः क्षिपति न इतरथेति न सर्वदा तदापत्तिः इति. तस्माद् अन्यख्यातिरेव सर्वजनीना.''** ( ख्या.वा.पृ. ३४ ).

इमामेव विस्पष्टं विशदीकृतवान् तत्र भवान् बालकृष्णभट्टोऽपि. तच्च यथा ''तत्र मनःसंयुक्तचक्षुरिन्द्रियेण शुक्तेः संयोगे तज्जन्यं सामान्यज्ञानं... संशयादीनां सर्वेषां ज्ञानानां पूर्वं सम्भवति. ततः उद्भूतसत्त्वगुणस्य बुद्ध्या साहित्ये प्रमात्मकं ज्ञानं 'निश्चय'शब्दवाच्यम् उद्भवति... संशयादीनि ज्ञानानि बुद्धिः उत्पादयति... तत्र चक्षुःशुक्तिसंयोगे सामान्यज्ञानोत्तरं माया भगवतः शक्तिः तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदा 'इयं शुक्तिः' इति बोधो न जन्यते, तमसाहि अज्ञानस्य उत्पादितत्त्वात्. तथाच पदार्थयाथात्म्यस्फुरणा-भावाद् मायामोहिता बुद्धी रजतसंस्कारप्राबल्याच् चाकचक्यादिधर्मसादृश्यम् आदाय रजतं तत्र निर्माति. तदिदं बौद्धमेव रजतं बुद्ध्या विषयीक्रियते नतु सामान्यज्ञाने चक्षुर्विषयीभूतम् इति विवेकः, तदानीं रजतस्य अभावात् सामान्यज्ञानानन्तरं बुद्ध्या रजतोत्पादनात्. अतः सामान्यज्ञानेतु शुक्तिरेव विषयीभूता तस्यैव सामान्यज्ञानं, विशेषज्ञानन्तु बुद्धिकृतमिति तत्र बौद्धमेव रजतं विषयीभवति इति निष्कर्षः... एवं सति इन्द्रियेण गृह्यमाणाद् विषयात् शुक्तिरूपाद् अन्यस्य रजतादेः ख्यातिः 'अन्यख्यातिः' इति उच्यते. तदिदं भ्रमात्मकं ज्ञानं बुद्धिवृत्तिरूपं 'विपर्यास'शब्दवाच्यम्.'' ( ख्या.वि. ).

एवं दृष्टान्तप्रक्रियां व्याख्याय दार्ष्टान्तिकं प्रपञ्चम् एते '' 'विषयता मायाजन्या विषयो भगवान्'( सुबो.२।९।३३ ) 'विषयताजनितं ज्ञानं भ्रमात्मकं विषयजनितं प्रमा'( तत्रैव २।९।३३ )'' इत्यादिस्वाचार्योक्तीन् पुरस्कृत्य 'माया'शब्दस्य भेदचतुष्टयम् उपकल्प्य भ्रमभातपदार्थानाम् आन्तरालिकत्व-क्तोक्तेः तात्पर्यम् उपधार्य, ''इन्द्रिय-विषययोः सम्बन्धे सामान्यज्ञानानन्तरं यद् बुद्धौ व्यामोहिका माया मायिकं पदार्थं निर्माय बुद्धिविषयीकारयति तद् बौद्धं ज्ञानं भ्रमात्मकं, तद्विषयः च मायिको बौद्धो घटादिरेव मिथ्या नतु भगवत्कृत-प्रापञ्चिक-घटपटादिः, तस्य ब्रह्मात्मकत्वाद्'' ( प्रमे.रत्ना.-ख्या.वि.पृ.८६ )इत्यादिभिः वचनैः प्रपञ्चसत्यत्वं निर्धारयन्ति.

अपिच, रामानुजाचार्यप्रतिपादितां सत्ख्यातिमपि एते 'अख्यातिः' इति शब्दान्तरेण अधिकारिभेदेन अभ्युपगच्छन्ति ''तस्माद् ये पूर्णज्ञानिनः पूर्णयोगिनो वा तेषां सर्वत्र सर्वप्रत्यक्षम् अतः तेषां ज्ञानस्य यथार्थत्वात् तत्र उक्ताः अख्याति उचिता न सर्वत्र, अन्येषान्तु संस्कारप्राबल्येन मायया बुद्धिरेव बहिः क्षिप्यतइति रजतादिधर्माणामेव प्रतिभानमिति अन्यख्यातिरेव उचिता, 'अन्य'पदस्य सदृशवाचकत्वेन अनुभूतसदृशधर्माणामेव ख्यानात् तस्माद्

**अख्यात्यन्यथाख्याती विभागेन मन्तव्ये.''** ( ख्या.वा. ).

अनिर्वचनीयख्यातिं भाष्यकार-भगवत्पादवर्त्मानुयायिनाम् अभिधानान्तरेण प्रक्रियाभेदेन वयम् अभ्युपगच्छामः. श्रीमद्भागवतस्य समन्वयप्रस्थानत्वेऽपि केवलाद्वैतपद्धतेरेव परमार्थतया अभ्यङ्गीकारात्. प्रक्रियाभेदस्तु, तस्य पुराणशरीरत्वेन सगुण-साकारब्रह्मणो भगवत्तत्वापरपर्यायस्य तल्लीलादीनां च अभ्यर्हितत्वेन निबन्धनपरत्वाद् भक्तिशास्त्रत्वेनापि च सर्वोत्कृष्टत्वेन प्रथितत्वाद् वयम् उत्प्रेक्षामहे इति उपरिष्टाद् दर्शयिष्यते. यद्यपि श्रीमद्भागवतप्रस्थाने अनिर्वचनीयम् इति शब्दशो न ख्यातिप्रसङ्गम् उपलभामहे तथापि अत्रापि अधिकारिभेदात् सविशेष-निर्विशेषोभयथा परिगृह्यमाणस्य ब्रह्माद्वयवादस्यैव अभ्युगमात् सर्वविधप्रपञ्चस्य मायाकर्तृकत्वात् तथात्वे च असकृद्भ्रमरूपेणैव समाम्नानात् 'पारमार्थिक'-'व्यावहारिक'-'प्रातिभासिका'ख्य-सत्तात्रैविध्याङ्गीकाराद् मायायाः तत्कृतप्रपञ्चस्य च कैवल्यसम्मतभक्तियोगेन ज्ञानयोगेन वा बाध्यत्वाद्; अथच, एकस्मिन् काले प्रतीयमानत्वाद् उत्तरस्मिंश्च अप्रतीयमानत्वात् ''सदन्यत्वे सति असदन्यत्वे सति सदसद्रूपान्यत्वम् अनिर्वचनीयत्वं न जातु निराकर्तुम् ईश्महे. तथापि वेदान्तस्य तर्कप्रस्थानोपगत-शुद्धज्ञानाधिकारिमात्रोपयिकेन राद्धान्तेन न भक्त्याश्रयस्य परब्रह्मापरपर्यायस्य भगवतः तन्नामरूपलीलादीनाम् अवतारप्रसङ्गानां च सम्यक्त्वं निर्वोढुं पार्यतइति केवलाद्वैतस्यैव प्रस्थानान्तरभूत-श्रीमद्भगवतोक्तसन्दर्भविग्रहां विकल्पख्यातिमेव सद्यस्तराम् अध्यवस्यामः.

अथ विकल्पख्यातिप्रतिष्ठापनात् पूर्वं श्रीमद्भागवतमहापुराणमेव स्वसिद्धान्तस्य प्रमाणपरमत्वेन अभ्यपुगच्छतां तत्र-तत्र तस्यैव विप्रकीर्णवचनजातान् पुरस्कुर्वतां जगन्मिथ्यात्वं श्रुतिस्मृत्यपरोक्षम् अद्वयब्रह्मवादं च उपहसतां स्वयं 'ब्रह्मवादी'त्यभिधानम् उद्वहतां शुद्धाद्वैतिनाम् अन्यख्यातिमपि स्वतर्कनिकषोपल आधाय निष्कर्षफलताम् आनयामः.

तत्र ब्रूमः : शुक्तिरजतादिभ्रमव्याख्याने चक्षुःशुक्तिसंयोगे प्रथमं मनसा तस्य 'इदम्' इति सामान्यं ज्ञानं, तदनु सत्त्वादिगुणसहितया बुद्ध्या तारतम्येन अनेकप्रकारकं ज्ञानं संशय-प्रमाद्यात्मकम् इति भवतः प्रत्यक्षप्रक्रियैव न साधीयसी, प्रमाणाभावात् ''सङ्कल्पविकल्पात्मकं मनो अध्यवसायात्मिका बुद्धिः'' इति तयोः लक्षणयोः च सार्वजनीनत्वात्. उक्तञ्च श्रीमद्भागवतेऽपि

“वैकारिकाद् विकुर्वाणान् मनस्तत्त्वम् अजायत यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः” (३।२६।२७), “मनएव मनुष्यस्य पूर्वरूपाणि शंसति” (४।२९।६६), “अविद्यया मनसा कल्पितास्ते” (५।१२।९), “तत्कर्मसङ्कल्पविकल्पकं मनो”(११।२।३८), “रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः, ततः कामो गुणध्यानाद् दुःसहःस्याद्धि दुर्मतेः” (११।१३।१०)-इति.

किञ्च इदन्त्वाच्छिन्नं सामान्यज्ञानं भवदुक्तं भवेन् निर्विकल्पकमेव तत्त्वदृष्ट्या, नामजात्यादियोजनाशून्यत्वात् तथात्वे ग्रहणं च एतस्य सङ्कल्पविकल्पात्मना मनसा इति कथं सङ्घटते?

यदपि उच्यते “तत्र चक्षुःशुक्तिसंयोगे सामान्यज्ञानोत्तरं माया भगवतः शक्तिः तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदा ‘इयं शुक्तिः’ इति बोधो न जन्यते... तथाच पदार्थयाथात्म्यस्फुरणाभावाद् मायामोहिता बुद्धी रजतसंस्कारप्राबल्यात् चाकचक्यादिधर्मसादृश्यम् आदाय रजतं तत्र निर्माति. तदिदं बौद्धमेव रजतं बुद्धया विषयीक्रियते... एवं सति इन्द्रियेण गृह्यमाणाद् विषयात् शुक्त्यादिरूपाद् अन्यस्य ख्यातिः ‘अन्यख्यातिः’ इति” तत्रापि प्रश्नसम्भावना न न अवसरति. अत्र व्यामोहिकया मायया सदृशादृष्टरूपोद्बोधसामग्रीप्राबल्यस्यैव सहकारित्वात् प्रथमं शुक्तिस्वरूपबोधस्य निराकरणं, तदनु तद्भिन्नया बुद्धया रजताद्युत्पत्तिः इति गौरवम्. कथं न एकयैव मायया तद् उभयस्यापि निर्वाहकत्वम् आवरण-विक्षेपशक्तिद्वयद्वारेण इति अभ्यनुमोदनीयम्? अपिच विप्रकृष्टत्व-धर्मोद्भासित्व-नीलपृष्ठेतर- शुक्तिका-भाग-सम्मुखीनत्वाद्या उपाधयोऽपि कथन्तरां न गृह्यन्ते भ्रमभानसामग्रीत्वेन? ग्रहणेच आसां क्व अन्तर्भावः, किं मायाकार्ये उत बुद्धिव्यवसाये? आद्ये, व्यामोहकत्वे अन्यस्य अपेक्षितत्वान् न मायायाः मायात्वम्. द्वितीये भ्रमापहारे बौद्धरजतबाधवद्-विप्रकृष्टत्वादीनामपि बाधसम्भवात्. तच्च न अनुभूयतइति असङ्गतिः. तथाच दार्ष्टान्तिके यद् अन्यख्यातिः स्वीक्रियेत तदा ब्रह्मव्यतिरिक्तान्यस्य सत्तास्वीकृतिरपि आपद्येत. तथात्वेच शुद्धाद्वैतस्यैव हानिप्रसङ्गः इति श्रीमद्भिः स्वयं निर्णेतव्यम्.

अपिच, ऋजुस्वान्ता अत्र भवन्तः श्रुतिस्मृतिसहस्रसमर्थितं श्रीमद्भागवतशास्त्रेणापि च तत्ख्यातिनिरूपणावसरे अस्माभिः वक्ष्यमाणरीत्या

सडिण्डिमम् उद्घुष्टं सर्वविधप्रपञ्चस्य भ्रमरूपत्वं न निर्भ्रमम् अङ्कयन्ति स्वहृदयपटले स्वाभ्यूहितब्रह्मवादभङ्गभिया, नवा सर्वथा निराकुर्वन्ति श्रीमद्भागवतादौ स्वाभ्यर्हितत्वेन स्वीकृते प्रमाणनिचये तस्य असकृत् समाम्नानादिति ग्रहणनिराकरणोभययपक्षयोः मध्ये सुव्यक्ता दोलायमानता भवतां, तद् यथा च अभ्यूचुः वेदस्तुतिसुबोधिन्यां महाप्रभवः श्रीमद्वल्लभाचार्याः :

**"'इदं जगत् सत्, सत्त्वेन प्रतीयमानत्वात्, ब्रह्मवद्' इति अनुमानम्. तदपि दूषयन्ति. अयं विकल्पो विशिष्टकल्पना जगतः सत्त्वरूपा, प्रातीतिकी नतु परमार्थरूपा, व्यवहारमात्रत्वे-नापि प्रतीतिसिद्धौ वास्तवसत्यत्वकल्पनायां प्रयोजनाभावात्. ननु अनादिः अयं संसारः. सर्वेषां च अत्र सद्बुद्धिः. अतो ज्ञायते सदेव इति. तत्र आह 'अन्धपरम्परया' इति. अन्धपरम्परापि परम्परा नच अत्र चक्षुष्मत्परम्परेति प्रमाणम् अस्ति प्रत्युत महतां बुद्ध्या 'असदेव इदम्' इति आभासते."**
( भाग.पुरा.१०।९७।३६ ).

इत्यस्य व्याख्यायाम् आचार्यचरण-चरणानुवर्ती लालुभट्टोपनामा श्रीबालकृष्णभट्टश्च "**अतो ज्ञायते इन्द्रियविषययोः सम्बन्धे सामान्यज्ञानानन्तरं यद् बुद्धौ माया मायिकं पदार्थं निर्माय बुद्धिविषयीकारयति तद् बौद्धं ज्ञानं भ्रमात्मकम्. तद्विषयश्च मायिको बौद्धो धटादिः. अयमेव बुद्धौ भातः पदार्थः 'आन्तरालिकी सृष्टिः' इति उच्यते. तस्यैव मिथ्यात्वं नतु भगवत्कृतप्रापञ्चिकघटपटादेः. अतो महता यत्नेन परिदृश्यमानप्रपञ्चस्य मिथ्यात्वं दूरीकृतवान् भगवान् भाष्यकारः**" ( बालकृ.ग्रन्था.पृष्ठ.८६ ).

भगवत्कृतप्रपञ्चस्य सत्यत्वं बौद्धस्य वा असत्यत्वम् इति उभयमपि सुन्दोपसुन्दन्यायेन अन्योन्यम् उपमर्दम् उपजनयति, सर्वप्रपञ्चस्य जातिगताभिन्न-त्वेन सदसद्विलक्षणत्वरूपम् अनिर्वचनीयत्वं वा समर्थयति, न अन्यख्यातिम् इति स्वयं विचारणाम् अर्हन्ति तद्विदः.

अपिच, श्रीमद्भागवतशास्त्रस्य जृम्भमाणेषु एतेषु वचनेषु को वा प्रपञ्चस्य भ्रमरूपत्वं निवारयितुम् ईष्टे, तथाहि "**यथा नभसि मेघौघो**

रेणुर्वा पार्थिवोऽनिले, एवं द्रष्टरि दृश्यत्वम् आरोपितम् अबुद्धिभिः'' ( १।३।३० ) ''**वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः**'' ( १।८।४ ) ''**अहं पयोज्योतिरथानिलो नभो मात्राणि देवा मनइन्द्रियाणि कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः**'' ( १०।५७।३० ).

यच्च ''**शुक्तिरजतादिभ्रमो निरुपाधिकः 'पीतःशङ्खः' इत्यादिकः च सोपाधिकः**'' तदपि न मनोरमं विचारासहत्वात् सार्वजनीनप्रतीतिविरुद्धत्वात् च. यथा ''पीतः शङ्खः'' इति स्थले पित्तादिनेत्रदोषरूपोपाधिः तथैव शुक्तिरजतस्थलेऽपि विप्रकृष्टत्व-घर्मपतितत्व- चाकचाक्यादिमत्त्व- नीलपृष्ठेतरभागसम्मुखनीत्वादयः उपाधयो विद्यन्तएव इति प्राग् अवादिष्म.

किञ्च वाल्लभाः ब्रह्मणः सगुणसाकारविग्रहं पुरुषोत्तमरूपम् अभिप्रयन्ति. श्रीमद्भागवतसिद्धान्तानुयायिनाम् अस्मदादीनामिव तथा अत्र तद्धाम्नो लीलानाम् अवताराणां चापि विवेचनं तैः अवश्यंकरणीयम् आसीत् ख्यातिवाददृशापि, ''**मत्स्याश्वकच्छपवराहनृसिंहहंसराजन्यविप्रविबुधेषु कृतावतारं**'' ( भाग.पुरा.१-०।२।४० ) हरिं दृष्ट्वा असुराणां देवानाम् ऋषीणां तद्भक्तानां पृथक्पृथग् अनुभूतिः भवति सा प्रमा वा अप्रमा वा संशयो वा सादृश्यं वा? इति पर्यनुयोगस्य परिहारः कर्तव्यम् एवमेव— ''**इत्थं विदिततत्त्वायाम्**'' इत्यारभ्य ''**हरिं सामन्यातात्मजम्**'' ( भाग.पुरा.१०।८।४३-४५ ) इत्यन्ते यशोदायाः श्रीकृष्णविषयके भगवत्तत्त्वबोधानन्तरम् उपजाते पुनरपि आत्मज(त्व!)भ्रमे कीदृशं ख्यातिरूपं स्वीकरिष्यन्ति ऋजुवैष्णवाः ते इत्यपि वक्तव्यम् आसीदेव. तच्च नोक्तम् इति तेषाम् इयम् अन्यख्यातिरपि आधिभौतिकाध्यात्मिकाधिदैविकरूपत्रितयस्य तत्त्वनिरूपणे पराङ्मुखी इति न मञ्जुला प्रतिभाति.

**अथ श्रीमद्भागवतप्रस्थानाभिमता विकल्पख्यातिः :**

श्रीमद्भागवतम् अष्टादशमहापुराणेषु अन्यतमं पुराणरत्नं सदपि वेदान्तस्य समन्वयप्रस्थानं भक्तिशास्त्रं च इति सुदृढं मन्महे. वेदान्तदर्शनस्य उपनिषत्समुच्चयरूपं श्रौतप्रस्थानं, श्रीमद्भगवद्गीतारूपं स्मृतिप्रस्थानं, श्रीमद्बादरायणापरनामधेयस्य भगवतः कृष्णद्वैपायनवेदव्यासस्य ब्रह्मसूत्रात्मकं तर्कप्रस्थानम् इति, प्रस्थानत्रयीपण्डितेषु सुप्रथिता, अत्र पुनः उपनिषदां गीतायाः ब्रह्मसूत्रस्य च यथायोगम् उपयोगः तदनुगुणा च दार्शनिकी पद्धतिः

इति त्रयाणामपि प्रस्थानानां समन्वयेन चतुर्थप्रस्थानत्वसिद्धिः इति अस्माभिः अन्यत्र विस्तरेण प्रमाणपुरःसरं च बहुधा सन्न्यरुपि इति नेह प्रतन्यते. ख्यातिवादसिद्धान्तोऽपि अत्र सर्ववादिसमन्वयपरो विशदः च विकल्पख्यातिविग्रहः इति अधुना सप्रमाणम् उपस्थापयामो.

यद् उक्तम् एकादशे उद्धवं प्रति भगवता श्रीकृष्णेन **''आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम्''** (भाग.पुरा.११।१६।२४). अत्र आहुः भावार्थदीपिकाकृतः श्रीधरस्वामिनः **''अख्यात्यन्यथाख्याति-शून्यख्यात्यसत्-ख्यात्यनिर्वचनीयख्यातिवादिनाम् एवम् इदमेव वा इति यो दुरन्तो विकल्पः सो अहम्''** (११।१६।२४). क्रमसन्दर्भेच श्रीलजीवगोस्वाम्यपि **''स्वमतेतु विकल्पः ख्यातिवादिनाम् इति उक्त्या तेच विकल्पा मम शक्तिमयाएवेति न परस्परम् अद्यापि व्युच्छिन्द्यन्ते''** इति उक्त्या **''भगवन्मते विकल्पएव ख्यायते तत्तद्वादिनां स्वसिद्धान्ताभिनिवेशपरिगृहीत''** इति अमुमेव अर्थं समाश्रयते. एतदेव अग्रेऽपि **''युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा मायां मदीयाम् उद्गृह्य वदतां किन्नु दुर्घटं! नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा एवं विवदतां हेतुं शक्तयो मे दुरत्यया. यासां व्यतिकराद् आसीद् विकल्पो वदतां पदं, प्राप्ते शमदमेऽप्येति वादः तम् अनुशाम्यति''** (भाग.पुरा.११।२२।४-६) इत्यादिभिः वचोभिः श्रीभगवान् समेषामपि भ्रमाणां कारणत्वेन विकल्पमेव प्रतिपादयाञ्चक्रे इति सुवचम्.

ननु 'विकल्प' इति शब्दो अत्र विविधानां मतानाम् अभिधायको न ख्यातिवादविशेषस्य इति चेद्, न, **''नहि तत्र विकल्पाख्या याच मद्वीक्षया हता, आदेहान्तात् क्वचित् ख्यातिः ततः सम्पद्यते मया''** (तत्रैव ११।१८।३७) इत्यत्र सुस्पष्टतया अभिधानोपलम्भात्. तथाच विविधसम्प्रदायिनः टीकाकाराः :

**''विकल्पाख्या भेदप्रतीतिः''** इति श्रीधरस्वामिनः (भावा.दीपि. ११।१८।३७).

**''विकल्पो भेदः आख्या ख्यातिः प्रतीतिः इति यावद्''** इति श्रीवीरराघवाचार्यः (तत्रैव भाग.चन्द्रि.).

**''विकल्पख्यातिः भेदप्रतीतिः''** इति श्रीशुकदेवः (तत्रैव).

**''विकल्पस्य भेदस्य आख्या प्रख्यानम्''** इति

श्रीजीवगोस्वामी ( तत्रैव ).

''**तस्य विकल्पः तस्य आख्या ख्यातिः प्रतीतिः**''इति श्रीगङ्गासहायः.

इति भ्रमभातपदार्थानां प्रसङ्गे श्रीमद्भागवतशास्त्रे अनेकत्र ( तत्रैव अन्वितार्थप्रकाशिका ) प्रयुक्तो अयं 'विकल्प'शब्दः इह अङ्गीकृतस्य ख्यातिवादस्य स्वारस्यम् आधत्ते.

अथ को अयं विकल्पो यस्य ख्यातिः इह विषयीक्रियते? इति अत्र अभिदध्महे ''विकल्पो नाम विविधकल्पनापरं भेदज्ञानं भ्रमो वा. श्रीमद्भागवतनये ब्रह्मापरपर्यायम् अद्वयज्ञानरूपा एकैव पारमार्थिकी सत्ता अभिमता ''**आसीद् ज्ञानम् अथो ह्यर्थ एकमेवाविकल्पितम्**'' ( ११।२४।२ ) इति. इयमेव परमार्थसत्ता भगवत्त्वम् इति च व्यपदिश्यते. अद्वये अस्मिन् श्रीमद्भगवत्येव समग्रोऽपि प्रपञ्चो अज्ञानेन विकल्पितः. तद् यथा अष्टमे भगवन्तं प्रति श्रीरुद्रस्य उक्तिः ''**एकस्त्वमेव सदसद् द्वयम् अद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदो अज्ञानतः त्वयि जनैर्विहितो विकल्पो यस्माद् गुणव्यतिकरो निरुपाधिकस्य**'' ( ८।२।८ ) इति. इत्थम् अत्र वस्तुरूपाद्वयब्रह्मणि अवस्तुरूपस्य सर्वविधप्रपञ्चस्य यो अध्यासः सएव भेदरूपो विविधकल्पनारूपो विकल्पः परमार्थव्यवहारयोः भेदाग्रहणेन अयमेव आधिदैविकाधिभौतिकाध्यात्मिकरूप-सत्तात्रैविध्येन आख्यायतइति अस्य अभिधानसङ्गतिः. अस्य प्रपञ्चस्य कर्त्री सदसदात्मिका भगवच्छक्तिः* माया या विचारेण भगवद्व्यतिरिक्तं नास्ति पृथक् किमपि वस्तुजातम् अतो न अत्र अद्वैतक्षतिः इति सिद्धान्तसारो अभ्युपेयः.

अन्यैः प्रायः समग्रैरपि शास्त्रसम्प्रदाविद्भिः ख्यातिप्रसङ्गे मुख्यतया शुक्तिरजत-रज्जुभुजङ्ग-मृगमरीचिका-पीतशंख-द्विचन्द्रादीनां प्रातिभासिकानां व्यावहारिकानामेव भ्रमाणां विमर्शो विहितः तदद्वारेण च प्ररिदृश्यमानस्यैव जगत्स्वरूपस्य स्वस्वनयेन व्याख्या स्मप्रधारिता इति विदन्त्येव विद्वांसः. वेदान्तनये केवलाद्वैते शुद्धाद्वैते च उक्तपूर्वप्रक्रियारीत्या मायायाः अङ्गीकारेण किमपि वैशद्यम् आविष्कृतम्. तदपितु सर्ववेदोपनिषत्पुराणेतिहाससमर्थितस्य सच्चिदानन्दविग्रस्य तद्दिव्यधाम्नां विविधावतारलीलाचरित्रादीनाम् अनुभूतिविषये

---

*''**सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका, 'माया'नाम महाभाग ययेदं निर्ममे जगत्**'' ( भाग.पुरा.३।५।२५ ).

वाचंयमत्वमेव अवगाहते इति श्रीमद्भागवतोक्ता विकल्पख्यातिरेव अत्र शरणीकरणीया प्रेक्षावद्भिः इत्यस्याः प्रक्रिया अत्र यथाशास्त्रम् आविष्क्रियते.

**श्रीमद्भागवते सृष्टेः त्रैविध्यम् :**

श्रीमद्भागवते त्रिविधा सृष्टिः अङ्गीकृता १. आधिदैविकी २. आधिभौतिकी ३. आध्यात्मिकी च इति.

आद्या, सच्चिदानन्दमयी भगवद्रूपा, अपरा त्रिगुणमयी जगद्रूपा, अन्तिमा च जीववासनामयी व्यष्टिभ्रमरूपा. शब्दपरिवृत्या प्रथमां, पारमार्थिकीं द्वितीयां व्यावहारिकीं तृतीयाञ्च प्रातिभासिकीम् इति अभ्युपगच्छामः. 'आधिदैविका'द्याः 'पारमर्थिका'द्याः च शब्दाः अत्र न दर्शनसामान्ये प्रसिद्धार्थस्य ख्यापकाः अपितु भागवतदर्शनस्य विशिष्टां पारिभाषिकतां बिभ्रति इति अवधेयं सुधीभिः. इत्थम् अत्र भ्रमोऽपि त्रिविधो अस्य त्रिविधभ्रमस्य कर्त्री मायापि त्रिविधा 'भगवल्लीला'पदवाच्या भगवत्कृतविकल्पवसना आद्या, 'त्रिगुणात्मिकाप्रकृति'नामधेया गुणकृतविकल्पवसना द्वितीया, 'अविद्या'ख्या जीवकृतविकल्पवसना तृतीया च इति. श्रीमद्भागवताख्य - समन्वयप्रस्थानस्य अन्यतमघटकरूपा श्रीमद्भगवद्गीता त्रिविधाम् एनां मायाम् इत्थं परिबभाषे "**दैवीह्येषा गुणमयी मम माया दुरत्यया, मामेव ये प्रपद्यन्ते मायामेतां तरन्तिते**"(७।१४).

भाषन्ते अत्र भाष्यकृज्जगद्गुरवः श्रीमच्छङ्कराचार्याः "**'दैवी' देवस्य 'मम' ईश्वरस्य विष्णोः स्वभूता हि यस्माद् एषा यथोक्ता गुणमयी मम माया 'दुरत्यया' दुःखेन अत्ययो अतिक्रमणं यस्याः सा दुरत्यया**" (गी.भा.तत्रैव) इति. तदेव श्रीमद्भागवतेऽपि "यथैताम् ईश्वरीं मायां दुस्तरामकृतात्मभिः" (११।३।१७) इति.

एवम् एकापि त्रिविधा दैवी गुणमयी दुरत्यया इति 'स्वजन' - 'सामान्यजन' - 'विमुखजना'ख्याधिकारिभेदेन लीलाविभ्रमजगद्रूप - व्यावहारिकभ्रम - जीवकृताविद्यक - भ्रमकार्यभेदेन च त्रिविधेव निरूप्यमाणा. श्रीमद्भागवतदृष्ट्या या 'दैवी' इति अभिहिता सैव भगवतः स्वजनविमोहिनी लीलास्वादसंविधानकरी वैष्णवी इति, या गुणमयी साच एतन्नामिकैव, या दुरत्यया सा 'अविद्या' इति उत्प्रेक्ष्यते अस्माभिः.

यद्यपि शुद्धाद्वैतमनीषिणोऽपि सर्वभवनसामर्थ्यरूप - भगवच्छक्तितया ( **''माया हि भगवतः सर्वभवनसामर्थ्यरूपा, तत्रैव स्थिता''** त.दी.नि.प्र.१।२३ ) प्रकृतिरूपेण ( **''अथ प्रकृतिः तल्लक्षणं प्रधानम् इति''** प्रस्था.रत्ना.द्विती.तर.-पृ. २२३ीक१) अविद्यारूपेण ( **''विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते''** त.दी.नि.१।३१ ). पुनश्च वैष्णवी इति ( **''वैष्णवी व्यतनोन्मायाम्''** भाग.पुरा १०।८।४३ इति वाक्यात् लीलास्थजीव...) नाम्ना तस्या भेदान् इमान् प्रथयन्ति. तथापि तेषां मते जगत्सत्यं भगवत्स्वरूपम् अतः सर्वभवनसामर्थ्यरूपया मायया न कश्चिद् भ्रमो जन्यते. अस्मन्मतेतु सर्वापि माया भ्रमविभ्रमकरी, जगदपि व्यावहारिकदृष्ट्यैव सत्, पारमार्थिकसत्तायान्तु तद्भ्रमरूपमेवेति तेभ्यो अस्माकम् अयम् इतरः पन्थाः.

<u>त्रिविधमायाकृतत्रिविधभ्रमाणां दृष्टान्तसङ्गतिः :</u>

(१)आधिदैविकमायायाः दृष्टान्तस्तु ऐन्द्रजालिकस्य क्रीडा, नटस्य नाट्यविभ्रमो वा. यथा कश्चिद् ऐन्द्रजालिकः स्वेन्द्रजालं प्रदर्श्य अभिमुखान् जनान् व्यामोहयन्नपि आनन्दयत्येव तथैव भगवानपि लीलारसिकान् अभिमुखान् स्वभक्तान् पार्षदान् लीलादिदृक्षून् वृन्दारकर्षिसिद्धादींश्च स्वीयया वैष्णव्या मायया भ्रमविभ्रमापन्नान् कुर्वन्नपि सुखयत्येव. अथवा कोऽपि निपुणो नटः सामाजिकैः स्वमित्रत्वेन परिज्ञातोऽपि रङ्गम् उपेत्य यथा कायिक-वाचिक-सात्त्विकाहार्यैः चतुर्विधैः अभिनयैः नानात्वम् उपदर्शयन् तान् रसास्वादभूमिम् उपगमयति तथैव अवतारादिलीलाभिः भगवानपि इति विभावनीयं भावुकैः. अत्र सच्चिदानन्दस्य भगवतः 'सन्धिनी' 'संविदाह्लादिनी' इति शब्दव्यवहार्याः स्वरूपान्तर्गताः त्रिविधलीलाशक्तयो लीलाविभ्रमोपजनने साचिव्यं विदधति इति श्रीमद्विष्णुपुराणसन्दर्भो अत्र (वि.पु.१।१२।६८) समुन्नेयः. ''शास्त्रस्य शास्त्रान्तरं टीका''इति न्यायात्. अत्र असङ्गे अद्वये ब्रह्मणि ''मदीश्वरो अयं'' ''मम सखा अयं'' ''मम पुत्रो अयम्'' इति सम्बन्धभ्रमो, ''रमारमणो अयं'' ''जानकीजानिः अयं'' ''श्रीरुक्मिणीप्राण-वल्लभो अयम्''इति द्वैतभ्रमः तथैव निर्विशेषे विशेषगुणक्रियादीनां भ्रमो यः सञ्जायते तत्र **''ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्''** ( भग.गीता. ४।११ ) इति रीत्या तद्रूपेण सत्यसङ्कल्पस्य भगवतः स्वेच्छया कृतविकल्पाएव भक्तानां मनसि ख्यायन्ते. तद् यथा श्रीमद्भागवते अमी प्रसङ्गाः **''मायाजवनिकाच्छन्नम् अज्ञाधोक्षजमव्ययं न लक्ष्यसे मूढदृशा नटो नाट्यधरो**

**यथा**'' ( ११८।१९ ), ''**मोहयन् मायया लोकं गूढं चरति वृष्णिषु**'' ( ११९।१८ ), ''**यथा मत्स्यादिरूपाणि धत्ते जह्याद् यथानटः**'' ( ११५०।३५ ), ''**मायामनुष्यस्य वदस्व विद्वन्**'' ( १०।१।७ ), ''**वैष्णवीं व्यतनोन् मायां पुत्रस्नेहमयीं विभुः**'' ( १०।९।४३ ), ''**मायाश्रितानां नरदारकेण साकं विजह्वः ...**'' ( १०।१२।११ ), ''**नैतद् विचित्रं मनुजार्भमायिनः...**'' ( १०।१४।९ ), ''**नूनमेतद् हरेरेव माया भवति नान्यथा**'' ( १०।१२।४२ ), ''**विस्तारन् क्रीडसि योगमायाम्**'' ( १०।१४।२२ ), ''**एवं निगूढात्मगतिः स्वमायया**'' ( १०।१५।१९ ), ''**वीक्ष्यरन्तुं मनश्चक्रे योगमायामुपाश्रितः**'' ( १०।२९।१ ), ''**त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषमशेषकल्पनं क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्त्वताम्**'' ( १०।३७।२४ ), ''**नटो नाट्यमिवात्मनः**'' ( १०।४१।१ ), ''**इति मायामनुष्यस्य...**'' ( १०।४५।१० ), ''**लोकाभिरामां स्वतनुं...**'' ( ११।३१।६ ), ''**मायाविडम्बनमवेहि यथा नटस्य**'' ( ११।३१।११ ).

इत्येतेषु नटचर्योपमया भगवतो मायाविकल्पाः सङ्केन्तविषयीकृताः. अत्र व्यवह्रियमाणा 'योगमाया'-'स्वमाया'-'आत्ममाया'द्याः शब्दाः आधिदैविकी इति व्यपदिष्टायाः वैष्णवमाययाएव नामान्तराणि. ऐन्द्रजालिकरीतिरपि व्यञ्जनया दशमस्कन्धे ''**मल्लानामशनिर्नृणां नरवरः**'' ( १०।४३।१७ ) इत्यत्र कंसस्य रङ्गशालाम् उपागतस्य भगवतः सर्वाश्चर्यमयस्वरूपप्रसङ्गे दर्शितैव पुराणर्षिणेति न तिरोहितं भागवतव्रतिनाम्. अनुभवकाले नानानामरूपक्रियादिमयी भगवद्विकल्पकल्पिता एषा दिव्या ख्यातिरपि भगवदनुभावेन तदद्वयतत्त्वविमर्शसमकालं क्वचिन् निर्वततअपि इति एकस्मिन् काले सती च अपरस्मिन् बाधिते वा अनुवर्त्तमानेति सदसद्भ्यां विलक्षणत्वेन अनिर्वचनीयत्वमयस्य अस्य भ्रमस्य बोधे बाधे च उभयत्र आनन्दात्मिकात्मवृत्तिरेव प्रमातॄणामिति न भक्तिसिद्धान्तव्याकोपो ''**भक्त्यर्थं कल्पितं द्वैतम् अद्वैतादपि सुन्दरम्**'' इति आभियुक्तजनवाचोयुक्तिप्रामाण्याद् इति सर्वम् उपपन्नम्.

(२)आधिभौतिकमायायाः दृष्टान्तत्वेन सर्वजनसंवेद्याः प्रकृतिकृतिजन्या एते नित्यभ्रमाः परिग्रहीतुम् उचिताः. ''गगनं नीलम्'' इति भ्रमः, घटाकाश-मठाकाशादिभ्रमः, द्विचन्द्रभ्रमः, द्यावाभूमीसन्धिभ्रमः, भ्रमरिकाभ्रमः, छायाप्रत्याह्वयाभासभ्रमः, अलातचक्रभ्रमः, नभसि मेघभ्रमः, अर्चिषां ''सो अयं दीपः''इति भ्रमः, स्रोतसां ''तद् इदं जलम्''इति भ्रमः, चित्रतुरगादिभ्रमः, पीतशङ्खभ्रमः, जपाकुसुमोपरागेण स्फटिकारुणत्वभ्रमः, व्यवहितवीणानिनादे रोलम्बगुञ्जनभ्रमः, घर्मोपहितस्य जलस्य उष्णत्वभ्रमः, मन्त्रादिबाधितस्य वह्नेः अनुष्णत्वभ्रमः, ''तिक्तशर्करा'' इति भ्रमः. सर्वेष्वपि एतेषु क्वापि इन्द्रियासामर्थ्यं क्वापि इन्द्रियानवस्थानत्वं क्वचन इन्द्रियदोषः क्वचिद् इन्द्रियविप्रकृष्टत्वं, कुहचन इन्द्रियार्थयोः व्यवधानम् इति इन्द्रियजन्या, अर्थजन्या वा भ्रान्तिः यथा बालादीनां तथैव परिणतशेमुषीकाणामपि भवति इति अनुभूयते सर्वैरपि. जानन्नपि ''भ्रमप्रतीतिः मिथ्या''इति बुद्धौ विभावयन्नपि जनो नित्यभ्रान्तिम् इमां व्यावहारिकीं यथा न निराकर्तुं क्षमः तथैव पामरजनैः साकं तत्त्वज्ञानसम्पन्नोऽपि जनः स्वजीवभावं प्रपञ्चस्य सत्यरूपत्वं नानारूपत्वं व्यवहारे न अपलपितुम् अर्हः इति दृष्टान्तदार्ष्टान्तिकसङ्गतिः अवगन्तव्या. प्रतीतिम् एनां त्रिगुणात्मिका सर्वजनमोहिनी 'प्रकृति'नामधेया माया उपजनयति. ''**सर्वं खल्विदं ब्रह्म**''(छन्दो.उप.३।१४।१) इति ''**वासुदेवः सर्वम्**'' (भग.गीता.७।१९) इति च श्रुतिस्मृत्युपलक्षितसर्वात्मविज्ञानेन अस्य बाधः. बाधे सत्यपि दग्धरज्जुप्रतीतिवद् बाधितानुवृत्या अत्र व्यवहारसिद्धिः.

श्रीमद्भागवते च अस्याः प्रकृतिकृतविकल्पानां ख्यातेः दृष्टान्तदार्ष्टान्तिकरूपाणि इमानि निदर्शनानि अवलोकनीयानि ''**सएवेदं ससर्जाग्रे भगवनात्ममायया सदसद्रूपया चासौ गुणमय्यागुणो विभुः**''(१।२।३०), ''**यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः**'' (१।३।३), ''**ययाहमेतत् सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पिते परे**'' (१।५।२७), ''**स्वजीवमायां प्रकृतिं सिसृक्षतीम्**'' (१।१०।२२), ''**सा ता एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका 'माया'नाम महाभाग ययेदं निर्ममे जगद्, आबाधितोऽपि ह्याभासो यथावस्तुतया स्मृतो दुर्घटत्वाद् ऐन्द्रियकं तद्वदर्थविकल्पितम्**''

(७।१५।५८), ''तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखं त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति-'' (१०।१४।२२), ''त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये'' (१०।२।२८), ''अहं पयोज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः'' (१०।५७।३०).

अत्र त्रिगुणात्मिकया मायया कृता महत्तत्त्वाहङ्काराद्याः तदनु पञ्चमहाभूताद्याः विकल्पाः जगद्रूपेण अद्वयब्रह्मस्वरूपम् आच्छाद्य ख्यायन्ते, यथा उक्तं भगवतैव उद्धवम् उद्दिश्य ''ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धींश्च गुणैर्विधत्ते'' (११।२२।३०).

अस्या अपवादोपायदिग्दर्शकाअपि श्लोकाः ''त्वय्यग्र आसीत् त्वयि मध्य आसीत् त्वय्यन्त आसीद् इदमात्मतन्त्रे त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्'' (८।६।१०), ''ब्रह्मैव भाति सदसच्च तयोः परं यत्'' (११।३।३८).

इत्यत्र ब्राह्मी दृष्टिः भ्रमापहारस्य कारणत्वेन निरूपिता. अपरत्र च ''एवं जिज्ञासयाऽपोह्या नानात्वभ्रममात्मनि, उपारमेत विरजं मनो मय्यर्प्य सर्वगे'' (११।११।२१), ''यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः, जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा'' (११।१३।३०) इति रीत्या ''नेह नानास्ति किञ्चन'' (बृह.उप.४।४।१९) इति श्रुत्युपलक्षिता अद्वैतदृष्टिः अवलम्बनीया विपश्चिद्भिः इति राद्धान्तरहस्यम् आस्थेयम्.

दृष्टान्तसंग्रहोऽपि अत्र पूर्वोक्तरीत्या यथा ''ईक्षेत विभ्रममिदं मनसो विलासं, दृष्टं विनष्टमतिलोलमलातचक्रं, विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः'' (११।१३।३४). अत्र दृष्टान्तद्वारेण

भ्रान्त्यपोहनोद्बोधः प्रदर्श्यते भगवता. यथा विवव्रुः श्रीधरस्वामिवर्याअपि

"इदं जगद् विभ्रमम् ईक्षेत. तत्र हेतवो मनोविजृम्भितत्वाद् दृष्टत्वाद् विनाशित्वात् च स्वप्नवद्, अतिचञ्चलत्वात् च अलातचक्रवत्. ननु भ्रमोऽपि निर्विषयः कथं स्यात्? तत्र आह 'विज्ञानम्' इति निगमनम्. तस्मात् त्रिधा यो अयं गुणपरिणामकृतो विकल्पो भेदः स माया इति."
(भाग.पुरा.भावा.दीपि.११।१३।३४).

एवञ्च, "**सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम्, सोऽयं पुमानिति नृणां मृषागीर्धीर्मृषायुषाम्**" (११।२२।२४) इत्यत्र, "**यथाम्भसा प्रचलता तरवोऽपि चलाइव, चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः, यथा मनोरथधियो विषयानुभवो मृषा, स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः**"(११।२२।५३-५४) इत्यत्र च, प्रथमे व्यावहारिकस्य शुद्धस्य द्वितीये प्रातिभासिकभ्रमसङ्कीर्णत्वेन व्यावहारिकभ्रमस्य जगद्रूपस्य बाधो अत्र समुपदर्शितः.

(३)भगवद्विमुखजनमोहिनी जीवकृतविकल्पवसना अविद्यैव दुरत्यया माया. अस्या मलावरणविक्षेपरूपा शक्तित्रयी. मलेन करणोपरोधः. सच विद्याकामकर्मजन्यो भोगवासनारूपो अन्तकरणस्य उपाधिविशेषः. श्रीमद्भागवते अस्य 'कषाय'-'मलाघ'-'किल्बिष'-'कर्मबन्धा'दिशब्दैः निर्देशो. यथा "**अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्**" (१।७।२२), "**धुनोत्यघं कौरव भक्तिभावतः**" (४।७।६१), "**त्रिःश्रुत्वैतत् पुमान् पुण्यं विधुनोत्यात्मनो मलम्**" (४।८।५) "**श्रुत्वा मुच्येत किल्बिषात्**" (८।२४।५९), "**सर्वपापैः प्रमुच्यते**" (१०।७५।५४), "**कर्मबन्धाद् विमुच्यते**" (१०।८१।४१), "**संश्रावयेत् संश्रृणुयादुतावुभौ तयोर्न कर्माशयसंसृतिर्भवेत्**" (१२।१०।४२).

केवलाद्वैते केवलम् आवरणविक्षेपरूपा अस्याः शक्तिद्वय्येव अभ्युपेता इह च शक्तित्रितयी इति प्रस्थानभेदेन सङ्गमनीयम्. आवरणविक्षेपयोरपि नैकत्र सङ्केताः इह उपलभ्यन्ते. दिङ्मात्रम् उदाहरणानि. यथा, "**यथा**

**नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले, एवं द्रष्टरि दृश्यत्वम् आरोपितमबुद्धिभिः''** ( १।३।३१ ), ''**त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये''** ( १०।२।२८ ) इत्यत्र आवरणशक्तिः उपदर्शिता. अन्यत्र च ''**यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः''** ( ३।७।१० ), ''**रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः''** ( ११।१३।१२ ).

इत्येवमादौ विक्षिप्तशक्तिः इति अर्हति प्रतिपत्तिम्. अस्याः अविद्यारूपायाः मायायाः दृष्टान्ताः श्रीमद्भागवते रज्जुसर्प-मरीचितोय-गन्धर्वनगर-स्वप्नादयो अङ्गीकृताः. निदर्शनवाक्यानि च यथा ''**मायाविवेकविधुतिः स्रजिव अहिबुद्धिः''** ( ४।२२।३८ ), ''**गन्धर्वनगरम् उपसन्नम् इति मिथ्यादृष्टिः अनुपश्यति''** ( ५।१४।१० ), ''**क्वचिद् विभ्रंशितस्मृतिः तयैव मरीचिकातोय-प्रायान् तानेव अभिधावति''** ( ५।१४।१० ), ''**समविषममतीनां मतम् अनुसरसि यथा रज्जुखण्डः सर्पादिधियाम्''** ( ६।९।३७ ), ''**ज्ञानेन भूयोऽपि च तत् प्रलीयते रज्ज्वाम् अहेः भोगभवाभवौ यथा''** ( १०।१४।२५ ), ''**तस्माद् इदं जगद् अशेषम् असत्स्वरूपं स्वप्नाभम् अस्तधिषणं पुरुदुःखदुःकम्''** ( १०।१४।२२ ).

प्रतिशरीरं पृथक्पृथग् वर्तमानैव अविद्या भ्रमान् उत्पादयति पृथक्पृथग् वासनाश्रयत्वादिति अस्याः आध्यात्मिकत्वम्.

अयम् आशयः : त्रिगुणात्मिकया मायया ये भ्रमाः उत्पाद्यन्ते ते सार्वजनीनाः अर्थेन्द्रियस्वरूपोद्भाविताः अथ चैतेषां यावदुपाधिसत्त्वं प्रतीयमानत्वं दृशा न बाधो नवा अनैकान्तिकत्वम्. बाधस्तु विमर्शेनैव उपाधिनाशेन वा इति. दृष्टान्ते ''नीलं गगनम्'' इति ''घटाकाशो अयम्'' ''अलातचक्रम् इदम्'' ''चन्द्रद्वयं भाति'' इति प्रतीतिः यावदर्थेन्द्रिययोः विप्रकृष्टत्वपरिच्छेदग्रहणासामर्थ्यपित्तादिदोषतिर्यक्त्वरूपोपाधयः तावद् न निराकर्तुं शक्या, बुद्ध्यातु ''एतद् न सद्'' इति विमर्शएव भ्रमाद्यपहारस्य कारणत्वेन उपगच्छति.

दार्ष्टान्तिकेच यावदिन्द्रियादियुक्तशरीरत्वं तावद् ''घटोऽयम्-पटोऽयं-देवदत्तोऽयं-विष्णुमित्रश्च एष'' इति नानात्वं सर्वस्यापि आबालवृद्धस्य प्रतीयतएव, तत्त्वज्ञानेन च तत्त्वतो अस्य बाधेऽपि दग्धरज्जुवद् बाधितानुवृत्तिरपि प्रागेव प्रत्यपीपदाम. इह पुनः आध्यात्मिके प्रातिभासिकभ्रमप्रसङ्गे प्रतिशरीरभिन्नं व्यष्टिमनएव शुक्त्यादौ रज्ज्वादौ वा स्ववासनानुगुणं रजतादीनां भुजङ्गादीनां वा विकल्पान् आरोपयति, चाकचक्यसर्पिलाकृतिप्रभृतयो अधिष्ठानगुणाः घर्मान्धकारादयः च इन्द्रियोपरोधकरोपाधयः च सहकारित्वेन उपतिष्ठन्ते. विकल्पानाम् अनैकान्तिकत्वे भ्रमप्रतीतीनामपि अत्र अनैकान्तिकत्वं यथा रज्जौ घनान्धकारे सर्पिलाकृतौ निपतिते सति कश्चित् तत्र स्ववासनावशात् सर्पम् अन्यस्तु धारा-माला-भूविवरादीन् पश्यति. कोऽपि अन्यश्च सुप्तभुजङ्गं ''रज्जुः एषा'' ''स्रग् इयम्'' इत्यपि क्वचिद् द्रष्टुम् अर्हति इति (''यथोरगं सुप्तमबुद्धिरज्जुधीः'' भाग.पुरा.१०।६।८). न भ्रान्तिः अत्र सार्वजनीना. दार्ष्टान्तिके अत्र रागद्वेषवशाद् अहं-ममेति अभिमतिः, सुखदुःखादीनि द्वन्द्वानि च अनाद्याविद्याजन्या विकल्पाएव ख्यायन्ते, यथोक्तम् आकरे **''अविद्यया मनसा कल्पितास्ते''** (५।१२।९), **''मनएव मनुष्यस्य पूर्वरूपाणि शंसति, अदृष्टम् अश्रुतं चात्र क्वचिन् मनसि दृश्यते, यथा तथा अनुमन्तव्यं देशकालक्रियाश्रयं, सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः, आयान्ति वर्गशो यान्ति सर्वे समनसो जनाः... नाहं ममेति भावोऽयं पुरुषे व्यवधीयते, यावद्बुद्धिमनोक्षार्थगुणव्यूहो ह्यनादिमान्... मनएव मनुष्येन्द्र भूतानां भवभावनम्''** (४।२९।६६-६८,७०,७७) **''अविद्यमानोऽप्यवभाति हि द्वयोर् ध्यातुर्धिया स्वप्नमनोरथौ यथा, तत्कर्मसङ्कल्पविकल्पकं मनो बुधो निरुन्ध्याद् अभयं ततः स्याद्''** (११।२।३८), **''एवं जिज्ञासयाऽपोह्य नानात्वभ्रमम् आत्मनि, उपारमेत विरजं मनोमय्यर्प्य सर्वगे''** (११।११।२१), **'' 'अहम्'इति अन्यथाबुद्धिः प्रमत्तस्य यथा हृदि उत्सर्पति रजो घोरं ततो वैकारिकं मनः''** (११।१३।९), **''यावन् नानार्थधीः पुंसो न निवर्तेत युक्तिभिः, जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा''** (११।१३।३०), **''यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति, रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम्''** (११।१९।२६).

ननु एवं सति सर्वस्यापि स्वप्नतुल्यत्वे विज्ञानवादिबौद्धादिमतएव कथं न अयं समन्वेतु भागवतानाम् अभिमतो विकल्पवाद इति चेन् मा एवं, शून्यालम्बनैः विज्ञानवादिभिः उपपादितैः विकल्पैः सह विज्ञानातिरिक्त-विज्ञेयस्वरूपस्य प्रत्यगात्मनः स्वीकाराद् अत्र अद्वैतवेदान्तपक्षावलम्बिनि भागवतराद्धान्ते स्वस्मिन् साक्षिचैतन्ये मायाशबलतया उद्भावितानां विकल्पानाम् अत्यन्तभेदात्. एवम् अत्र विकल्पानां मनःकल्पितत्वेऽपि केवलात्मरूपाधिष्ठाने अध्यस्तत्वाद् विज्ञानवादिमतसाम्यम् अत्र न युज्यते. यथा उक्तं सिद्धान्तग्रन्थेऽपि **''एतावानात्मसम्मोहो यद्विकल्पस्तु केवले आत्मन्नृते स्वम् आत्मानम् अवलम्बो न यस्य हि, यन्नामाकृतिभिः ग्राह्यं पञ्चवर्णम् अबाधितं, व्यर्थेनापि अर्थवादोऽयं द्वयं पण्डितमानिनाम्''** ( भाग.पुरा.११।२८।-३६-३७). श्लोकौ एतौ विशदयाञ्चक्रुः श्रीधरस्वामिनः **''केवले अभिन्ने आत्मन्नात्मनि विकल्प इति यद् 'एतावान्'=सर्वोऽपि मनसः 'सम्मोहो'=भ्रमो. यतः स्वात्मानम् 'ऋते'=विना यस्य विकल्पस्य 'अवलम्बः'=आश्रयो नास्ति, रजतभ्रमस्येव शुक्तिं विना''** ( भावा.दीपि. ) इति.

अत्र प्रक्रिया केवलाद्वैतसम्मता यथा आहुः, श्रीनृसिंहाश्रमस्वामिनः —

> **''दोषदूषितनयनादिना शुक्तेः इदमंशादेः सम्बन्धे सति अन्तःकरणस्य विषयदेशव्यापिनि इदमाकारा वृत्तिः जायते नतु शुक्तित्वाकारा दोषेण प्रतिबन्धात्. ततश्च इदमंशावच्छिन्न-विषयचैतन्यम् अन्तःकरणावच्छिन्नचैतन्येन एकोपाधिसम्बन्धाद् अभिन्नं प्रकाशते.''**
>
> (            ).

श्रीमधुसूदनसरस्वतीमहाभागाअपि **''अधिष्ठानांशे अन्तःकरणवृत्तिः अध्यस्तांशे च अविद्यावृत्तिः''** (                ) इति अभ्यूचुः.

वयन्तु अत्र प्रस्थानभेदानुरोधेन पुनः इत्थं ब्रूमः : पूर्वोक्तायाः अविद्यायाः मलाख्यया शक्त्या मनसि रजतवासना सूक्ष्मा अन्यवासनाभिः

समं विकल्परूपेण स्थितिं लभते. शुक्तिरजतभ्रमभाने तदनुरोधेन आवरणाख्या शक्तिः शुक्तिस्वरूपम् आच्छाद्य व्यवष्ठिते. तदनु तृतीया विक्षेपशक्तिः तत्र रजतविकल्पम् आधत्ते इति केवलद्वैताभिमतवृत्तिव्यापित्वक्रमाद् मनोगतरजतमेव इदन्त्वस्य निर्विकल्पस्य विशेषणीभूता ख्यायत इति सम्प्रधार्यं सम्प्रदायविद्भिः.

इयमेव श्रीमद्भागवते क्वचिद् आत्मख्यातित्वेनापि उदीर्यते "**शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया स्वप्नो यथा आत्मनः ख्यातिः संसृतिर्नतु वास्तवी**" ( ११।११।२ ). अत्र 'आत्म'पदेन सौगताभिमतविज्ञानं न अभिप्रेयत इति पूर्वमेव उक्तम्. तस्मान् मनो विकल्पाएव स्वीकरणीयाः.

अविद्याकृत-विकल्पख्यातेः एतस्याः अपवादस्तु भक्त्यान्वित-तत्त्वज्ञानेन सर्वात्मज्ञानपरिपुष्ट्या भक्त्या वा. यथा उक्तं तत्रैव "**यथा पुत्राच्च वित्ताच्च पृथङ् मर्त्यः प्रतीयते, अप्यात्मत्वेन अभिमताद् देहादेः पुरुषः तथा, यथा उल्मुकाद् विस्फुलिङ्गाद् धूमाद् वापि स्वसम्भवात्, अपि आत्मत्वेन अभिमताद् यथा अग्निः पृथग् उल्मुकाद्, भूतेन्द्रियान्तःकरणात् प्रधानाज् 'जीव'सञ्ज्ञिताद् आत्मा तथा पृथग् द्रष्टा भगवान् 'ब्रह्म'सञ्ज्ञितः**" ( ३।२८।३७ - ४१ ), "**अतस्तदपवादार्थं भज सर्वात्मना हरिं पश्यन् तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः**" ( ४।२९।७९ ).

विकल्पस्वरूपं भेदाः च :

श्रीमद्भागवतप्रस्थाने 'विकल्प'शब्देन किम् अभिप्रेयते? तस्य किं स्वरूपं? कति च भेदाः? इत्यपि निश्चेतव्यम्. श्रीमद्भागवतं तिलकयद्भिः विविधैरपि वेदान्तवादिभिः मिथः सिद्धान्तभेदेऽपि विकल्पतात्पर्यावकल्पने प्रायश एकत्वं प्रादर्शि.

तद् यथा : "**ममाङ्गमाया गुणमय्यनेकधा विकल्पबुद्धींश्च गुणैर्विधत्ते**" ( ११।२२।३० ) इति भागवतपद्यस्य व्याख्याने

१. "**विकल्पो अत्यन्त भेदएव**" इति श्रीधरस्वामिनः.

२.''**विकल्पो भेदएव इति अर्थः**'' इति श्रीवीरराघवः.

३.''**विकल्प इति मिथ्याज्ञानकृत**'' इति श्रीविजयध्वजः.

४.''**विकल्पो भेदएव इति अर्थः**'' इति श्रीसुदर्शनसूरिः.

५.''**विकल्पो भेदएव**'' इति श्रीशुकदेवः.

६''**विकल्पो भेदः**'' इति श्रीविश्वनाथचक्रवर्ती.

७.''**विकल्पं भेदम्**'' इति श्रीगङ्गासहायः.

८.''**विकल्पः तयोः अत्यन्तभेदः**'' इति गोस्वामिश्रीगिरिधरलालः.

अयञ्च भेदात्मको विकल्पो अवस्तुभूतो भ्रमरूपएव. यथाहि मूलग्रन्थे ''**अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तद् उच्यते**'' (भाग.पुरा.७।१५।६३) ''**जह्याद् वैकल्पिकं भ्रमम्**'' (तत्रैव ११।२४।१) ''**एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः**'' (११।२४।२८).

अथ भेदघटकद्वयी किं स्वरूपेति आह ''**प्रकृतिः पुरषश्चेति विकल्पः पुरुषर्षभ**'' (११।२२।२९) इत्थम् 'अहं'पदवाच्ये विषयिणि इदन्त्वकल्पनैव विकल्पाख्यो भ्रमः तस्य ''**यत्सामान्यविशेषाभ्याम् उपलभ्येत स भ्रमः**'' (१२।४।२५) इति सामान्यलक्षणत्वात्. अत्राहुः श्रीधरस्वामिपादाः ''**सामान्यं कारणं विशेषं कार्यम्. तद्रूपेण अन्योन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वाद् इति अर्थः.**''

तदिदं विशदीकरोति विश्वनाथचक्रवर्त्यपि सारर्थदर्शिन्याम्

> ''**सामान्यं कारणं विशेषं कार्यं, ताभ्यां यद् उपलभ्यते स भ्रमः कुतः? अन्योन्यापाश्रयात्. परस्परापेक्षत्वेन निरूपणासहत्वाद् इति अर्थः. ... यथा रज्जुरेव अज्ञानेन सर्पत्वेन विवर्तते तत्र रज्जुः कारणं सर्पः कार्यम्. सतु मिथ्यैव. तथैव सामान्यं ब्रह्मैव अज्ञानेन जगद्रूपतया विवृत्तम्. तत्र जगतः कार्यस्य अभावे तदपेक्षतया**

सिद्धं ब्रह्मणः कुतः कारणत्वम्? इति''.

एवं भेदाअपि, यथा ''**यद् नामाकृतिभिः ग्राह्यं पञ्चवर्णम् अबाधितम्**'' (११।१८।३७) इति पूर्वोद्धृतभगवद्वचनाद् अस्य भेदानां नामा-ऽऽकृति - द्रव्य - गुण - क्रियारूपो पञ्चात्मकः प्रत्ययो व्यवतिष्ठते. वाक्ये अस्मिन् 'नामाकृतिभिः'इति बहुवचनग्रहणाद् अन्यस्मिन् प्रसङ्गे च तत्रैव इतरेषां द्रव्यज्ञानक्रियारूपभेदानामपि नामग्राहपूर्वकं सङ्ग्रहणात्. तच्च यथा ''**ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः, संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः**'' (भाग.पुरा.११।१४।४६). एतदेव सनिदर्शनं विशिनष्टि श्रीगङ्गासहायः ''द्रव्यभ्रमो देहादौ अहम् इति, ज्ञानभ्रमो ''अहं जानामि''इति, क्रियाभ्रमः ''अहं करोमि''इति. देहेन्द्रियान्तःकरणाध्यासलक्षणो दृश्यद्रष्टृदर्शनरूपो वा भ्रमः'' (अन्वि.प्रका.). अत्र 'ज्ञानम्'इति पदेन ''अहं जानामि'' इत्याकारकविशेषप्रत्यवमर्शात्मको न एकेषां द्रव्याणां मिथो व्यावर्तकः च गुणएव ग्राह्यः, तस्यैव इन्द्रियपञ्चकेन ग्रहणौचित्यादिति न भ्रमितव्यम्. एतदेव दृढयति स्वामिपादानां वाचोयुक्तिरपि श्रीमद्भागवतभावार्थदीपिकायाम् एकादशस्कन्धस्य तृतीयेऽध्याये त्रिंशत्तमस्य श्लोकस्य व्याख्याने :

> **''सदेव ज्ञानम् इन्द्रियबलेन विविधं कल्पितं नीलाद्याकारवृत्तयएव जायन्ते नश्यन्ति च इति. 'नाम'इति शब्दविकल्पः. अस्यापि शब्दातीते अद्वयब्रह्मविज्ञाने प्रतिषेधो यथा ''एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम्, मायामात्रम् अनूद्य अन्ते प्रतिषिध्य प्रसीदति.''**
>
> (११।२१।४३).

जातिः इति आकृतीरूपापरनामधेयः प्रत्ययविशेषः. सापि न कल्पनाद् अतिरिच्यते, मनोमूलत्वात्. दृष्टान्ते ''शुक्तौ इदं रजतम्'' इति प्रतीतौ 'रजतम्'इति नामजातिद्रव्यगुणक्रियेति पञ्चविकल्पसमुच्चयात्मिका अनाद्याविद्यासंस्काररूपा प्रतिभासवृत्तिरेव अधिष्ठानरूपिण्याम् अन्तःकरणकरणवृत्तौ व्यावहारिक्यां समुदेति. तद् यथा ''रजतमिति वर्णानुपूर्विका सञ्ज्ञा नामविकल्पो

रजतत्वम् इति जातिविकल्पः. रजतत्वविशिष्टेदं पुरोवर्ति रजतशकलम् इति द्रव्यविकल्पः. व्यृद्धं ''समृद्धिमुपनेष्यति माम्'' इति क्रियाविकल्पः. समेषां च तादात्म्यादेव रजतभानम्.

श्रीमद्भागवतस्य वेदस्तुतौ दृश्यते अस्य विकल्पवादस्य समाहारः. तद् यथा ''**न यदिदम् अग्र आस न भविष्यद् अतो निधनाद् अनुमितम् अन्तरा त्वयि विभाति मृषा एकरसे अत उपमीयते द्रविणजातिविकल्पपथैर् विततमनोविलासमृतमिति अवयन्ति अबुधाः**'' (१०।८७।३७). इत्थं प्रत्यगात्मरूपं परब्रह्मैव निर्विकल्पं वस्तु अखण्डज्ञानस्वरूपत्वात्. नामजात्यादयो भेदविकल्पाः अज्ञानोद्भूतान्तःकरणस्यैव विलासाः वृत्तिविशेषाः.

तत्र न तावद् 'विषयो'नाम वास्तवो अस्ति किन्तु मनोविलासमात्रम् इति एकादशस्कन्धे द्वितीयाध्याये अष्टात्रिंशत्तमे पद्ये स्वामिवर्याणाम् उक्तव्याख्यानात्. एवम् अद्वयात्मनि तत्त्वतो विकल्पे अनुपपन्नेऽपि अविद्यया प्रतिभासमाने पूर्वपूर्वारोपसादृश्यात् सएव भ्रमः. सच तावदेव यावद् अद्वयज्ञानाविष्कृत्या न अज्ञाननिवृत्तिः इति सिद्धान्तस्य हार्दम्. ननु एवं सर्वमिथ्यात्वे शास्त्रस्यापि विधिनिषेधकता कथं न स्याद् इति समादधति सप्तमस्कन्धे स्वयं भागवतकाराः ''**स्यात् सादृश्यभ्रमः तावद् विकल्पे सति वस्तुनो जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता**'' (७।१५।६१). अयम् आशय : यथा स्वप्नमध्येऽपि क्वचिज् जाग्रत्स्वापौ अनुभूयेते, तत्र स्वप्नत्वे सति तत्त्वतो मिथ्याऽपि तत्रत्य जाग्रद्व्यवहारएव अर्थक्रियाकारी न स्वाप्नः तद्वद् अत्रापि सर्वप्रपञ्चस्य विकल्पकत्वे शास्त्रगुर्वादीनां विकल्पा अर्थक्रियाकारित्वाद् व्यावहारिक-याथार्थ्यम् अवलम्बन्ते इति अवधेयम्. ''**विकल्पा व्यवहारमेव आलम्बेरन् न परमार्थं तदपि अन्धपरम्परयेव इष्टम्**'' इति वेदस्तुतेः षट्त्रिंशत्तमं पद्यमपि निजगाद''**व्यवहृतये विकल्प इषितो अन्धपरम्परया**'' (१०।८७।३६) इति.

अत्रच भावार्थदीपिका :

'' **'व्यवहारार्थं'=क्रियार्थं 'विकल्पो'=भ्रमः 'इषितः'=**

इष्टएव, कूटकार्षापणादिनाऽपि क्वचिद् व्यवहारदर्शनात्. ननु एकत्र सतो अन्यत्रारोपो भ्रमः प्रसिद्धो अत्यन्तासत्त्वे कथं प्रपञ्चो भ्रमः स्यात्? सत्त्वे वा न अद्वैतसिद्धिः. उक्तञ्च भट्टैः *'अध्यस्ते खपुष्पत्वम् असत् कथम् अवस्तुनि प्रज्ञातगुणसत्ताकम् अध्यारोप्येत वा न वा'* इति. 'न' इति आह अन्धपरम्परया इति... अयं भावः : संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रम् अपेक्षते न वस्तुतत्त्वं, प्रतीतौ सत्यां वस्तुसत्त्वाभावेन ब्रह्मव्यतिरेकादर्शनात्. अतो अनादित्वात् पूर्वभ्रमदृष्टस्य उत्तरोत्तर आरोपो भविष्यति. अन्धपरम्परान्यायेन व्यवहारः सेत्स्यतीति अप्रयोजको हेतुः इति.''

(भावा.दीपि.तत्रैव).

इत्थम् अत्र विकल्पपदार्थो व्याख्यातः. यत्तु ''**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः**'' (पा.यो.सू.१।९) इति सूत्रयाञ्चकार भगवान् पतञ्जलिः तदपि श्रीमद्भागवतोक्तविकल्पपदार्थाद् न तत्त्वतो भिद्यते, तस्यापि अनिर्वचनीयशरीर-मात्रे भ्रमएव पर्यवसायित्वाद् वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनव्यवहार-मात्रत्वप्रतिपादितत्त्वात् च. यथा आह तत्रैव भाष्ये भगवान् व्यासः ''**स न प्रमाणोपारोही न विपर्ययारोही च**'' (यो.सू.व्या.भा.१।९). इदमेव विवृण्वन् आह श्रीवाचस्पतिमिश्रोऽपि

> ''**क्वचिद् अभेदे भेदम् आरोपयति क्वचित् पुनः भिन्नानाम् अभेदम्. ततो भेदस्य अभेदस्य च वस्तुतो अभावात् तद् आभासो विकल्पो न प्रमाणं नापि विपर्ययो व्यवहारविसंवादाद् इति.**''

(तत्रैव तत्त्ववैशारदी).

तथाच अत्र भिक्षुः ''**यथार्थशब्देन यथार्थज्ञानेन च यादृशो व्यवहारो भवति शब्दज्ञानरूपः तादृशएव व्यवहारो विकल्पादपि दृश्यते.**'' (तत्रैव योगवार्तिके).

ननु योगिनां राद्धान्ते खपुष्प - शशशृङ्गादिशब्दश्रवणानन्तरोत्थ-प्रत्ययानामेव विकल्पे अन्तर्निविष्टत्वाद् असद्रूपमिथ्याज्ञानमेव अस्य स्वरूपम् इति चेन् न, तत्रैव वार्तिके, मिथ्याज्ञानमध्ये अन्तर्निवेशिताद् वैशेषिकाभ्युपगताहार्यज्ञानाद् अस्य वैलक्षण्यप्रतिपादनात्. तद् यथा

> **''विकल्पप्रत्ययास्तु वैशेषिकैः आहार्यज्ञानविशेषतयैव एष्टव्याएव. विशेषस्तु तैः मिथ्याज्ञानमध्ये प्रवेश्यन्ते. अस्माभिस्तु सविकल्पनिर्विकल्परूपाभ्यां श्रुतिसिद्धयोगविभागार्थं पृथङ् निर्दिश्यन्त इति.''**
>
> ( तत्रैव योगवर्तिके ).

तथापि राद्धान्तभेदाद् अत्रत्यो विकल्पपदार्थो योगाभिमताद् विकल्पाद् आपाततः किञ्चिद् व्यतिरिच्यते इत्यपि न न शक्यस्वीकरणम्.

वस्तुतः इन्द्रियादिभिः यज्जागतिकं ज्ञानम् उपलभ्यते सामान्यतः प्रमा इति व्यवहृतं तदपि औपाधिकं प्रतिभासमात्रमेव शक्तिमत्काचादिघटितोपने-त्रोपहितचक्षुषा रूपस्य सुस्पष्टत्वाद् आधुनिकदूरदर्शनयन्त्रादिभिः दूरस्थरूपस्य ध्वनेः च अनेकत्रप्रतिबिम्बितत्वात् च. इत्थम् इन्द्रियादीनां यौगिकादिशक्तिभिः योग्यतासम्पादनाद् अतिभोगरागद्वेषादिभिः च तस्य उपमर्दनाद् वा जागतिकवस्तूनां स्वरूपेऽपि उच्चावचता न निरवकाशा. अतएव अस्मदादीनां प्रत्यक्षाद् योगिनां प्रत्यक्षं भिद्यते. इत्थम् अधिकारिभेदेन इन्द्रियद्वारोपगतप्रमात्वस्यापि औपाधिकत्वमेव आयाति, निरुपाधिकी प्रमा च अद्वयज्ञानं स्वरूपावगतिरेव इति. यथा चित्रे तुरगादिप्रतीतिः दर्पणे मुखप्रतीतिः दूरदर्शनस्य काचादिघटितदृश्यपटले दूरस्थवस्तूनां रूपप्रतीतिः ध्वनिप्रतीतिः च न सद् न असद् इति वक्तुं योग्या तद्विलक्षणत्वात् सातु अनिर्वचनीयैव तथा अस्य मायादर्पणगता एकस्य अनेकत्वप्रतीतिरपि अनिर्वचनीयैव **''चिदवसानं जगदिति''** ( पाठभेदेन ''चिदवसानो भोगः''१।१४० ) साङ्ख्यसूत्रप्रामाण्याद् दृष्टानुभूतप्रपञ्चजातस्य च ज्ञानमात्रस्वरूपे प्रत्यगात्मन्येव पर्यवसायित्वाद् इति विकल्पख्यातेरपि अनिर्वचनीयत्वं न निराकर्त्तुम् उचितम्.

ननु एवं सति अद्वैतवेदान्तिभिः उपस्कृताया अनिर्वचनीयख्यातेः अत्र को विशेषः, तदभावे च कथं विकल्पख्यातिः इति अश्रुतपूर्वसञ्ज्ञान्तरमात्रकरणस्य अयम् अभिनिवेशः चेत्, श्रूयताम्, अस्ति तावद् विशेषः, सञ्ज्ञान्तरमात्रकरणेऽपि क्वचिद् अर्थावगमसामार्थ्यात्. आब्रह्मस्तम्बोपलक्षितस्य ब्रह्मणि अध्यस्तस्य प्रपञ्चस्य अनिर्वचनीयत्वे उररीकृतेऽपि नामजात्यादिविकल्पपञ्चकस्य प्रत्यभिज्ञानादेव अत्र मिथ्यात्वस्य अभ्युपगमः शक्यइति अनुक्तोपालम्भना नः प्रमितिः. अपिच शुक्तौ 'रजतम्' इति भ्रमे रजतं न सद् अनन्तरबाध्यत्वाद् नापि असत्, तदात्वे भासमानत्वाद् इति उभयविलक्षणमेव ख्यायते. इयम् अनिर्वचनीयख्यातिः, रजतं न नामजात्यादिविकल्पाद् अन्यत् किमपि वस्तु इति विकल्पख्यातिः. विकल्पश्च अन्तःकरणवृत्तिविशेषो व्यवहारे सत् परमार्थेतु असद् अन्तःकरणवृत्तेऽपि तत्त्वतो असत्त्वाद् इति प्रक्रियाभेदः. इदमेव उक्तं सप्तमे ''**विकल्पं जुहुयात् चित्तौ तां मनसि अर्थविभ्रमे, मनो वैकारिके हुत्वा तद् मायायां जुहोत्यनु, आत्मानुभूतौ तां मायां जुहुयात् सत्यदृङ्मुनिः**'' (७।१३।४३ - ४४). यत्तु आधुनिके छायाचित्रनिष्पादके यन्त्रे मनोबुद्ध्यभावादपि वस्तूनां निष्पत्तिसम्भवाद् जागतिकानाम् अर्थानां कल्पनामात्रत्वम् इति मेधावी कश्चिद् आहः (द्रष्टव्य, गोस्वामिश्रीश्याममनोहरकृतं विमर्शपत्रम्) तदपि न समाधानपराङ्मुखम्. अस्माभिः जगद्विकल्पानां व्यावहारिकाणां नित्यभ्रमत्वेनैव अङ्गीकाराद् न प्रातिभासिक(त्वं!) तद् व्यष्टिमनोमात्र(त्रा!)कल्पितत्वात्. छायाचित्रनिष्पादकं यन्त्रमपि न जातु ''शुक्तौ इदं रजतम्'' इति भ्रान्तस्य अनुगुणं छायाचित्रं निष्पादयितुं प्रभवेद्. अधिष्ठानभूते रज्जौ भ्रान्तजनसम्प्रयुक्तम् अध्यस्तस्य भुजङ्गस्य वा दर्शनं कारयेद् इति सर्वम् अनाकुलम्.

इत्थं प्रमाणपुरस्सरं यथामति श्रीमद्भागवते विकल्पख्यातिः उपकल्प्य प्रदर्शिता अस्माभिः विद्वज्जनविनोदाय शास्त्रानुशीलनोत्थस्वमनःप्रमोदाय इति दिक्.



# संगोष्ठ्युत्तरलेखनम्

गो. श्या. म.

अथ श्रीमद्भागवतमहापुराणमपि स्वसिद्धान्तस्य प्रमाणपरमत्वेन अभ्युपगच्छतां तत्र-तत्र तस्यैव विप्रकीर्णवचनजातान् पुरस्कुर्वतां श्रुतिस्मृतिसूत्रपुराणविरुद्धं जगन्मिथ्यात्वं निर्विशेषाद्वयवादं च स्वीकुर्वतां विकल्पख्यातिवादिनां श्रीविन्ध्येश्वरीप्रसादमहाभागानाम् अभिमतां तामेतां विकल्पख्यातिं वयमपि स्वतर्कनिकषोपल आधाय निष्कर्षफलताम् आनयामः इति अस्माकमप्यौपक्रमिकी ''प्रतिमुखस्य यथामुखश्री''न्यायानुरोधिनी विभावना! किञ्च 'अनिर्वचनीयख्यातिः'-'विकल्पख्यातिः' इति यदि नाम्नोरेव भेदो न वस्तुनीति चेद् नाम्नाञ्च मनःकल्पितविकल्परूपत्वेनैव अभिमतत्वाद् विकल्पख्यातेः अनिर्वचनीयत्वं वा मनःकल्पितविकल्परूपत्वं वा इति येषामियं मनःकल्पना तएव श्रीविन्ध्येश्वरीप्रसादमहाभागाः कल्पयितुं समर्थाः केचान्ये तेभ्यो व्यतिरिक्ताः इह प्रभवेयुः!

तत्र यदेभिरुक्तं—

> ''शुक्तिरजतादिभ्रमव्याख्याने चक्षुःशुक्तिसंयोगे प्रथमं मनसा तस्य 'इदम्' इति सामान्यं ज्ञानं, तदनु सत्त्वादिगुणसहितया बुद्ध्या तारतम्येन अनेकप्रकारकं ज्ञानं संशय-प्रमाद्यात्मकम् इति प्रत्यक्षप्रक्रियैव न साधीयसी, प्रमाणाभावात् 'सङ्कल्पविकल्पात्मकं मनो अध्यवसायात्मिका बुद्धिः' इति तयोः लक्षणयोः च सार्वजनीनत्वात्. उक्तञ्च श्रीमद्भागवतेऽपि [१]''वैकारिकाद् विकुर्वाणा मनस्तत्त्वम् अजायत यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः', [२]'मनएव मनुष्यस्य पूर्वरूपाणि शंसति', [३]'अविद्यया मनसा कल्पितास्ते', [४]''तत्कर्मसङ्कल्पविकल्पकं मनो', [५]''रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः, ततः कामो गुणध्यानाद् दुःसहःस्याद्धि दुर्मतेः' .''

इति.

अत्र भावार्थदीपिकाकृतः श्रीश्रीधरस्वामिनो मताद् श्रीविन्ध्येश्वरीप्रसादमहाभागानां

मतं परमार्थतो भिन्नं वा व्यवहारतो अभिन्नं वा इत्युभयोः पक्षयोः अनिर्वचनीयवादएव श्रेयसे अवलम्बनीयः इति मत्वापि व्यवहारे भेदो न निराकरणीयइति तमेव साधयामः.

तथाहि [१]**''वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत, यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः, यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरं... तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति, द्रव्यस्फुरविज्ञानमिन्द्रियाणामनुग्रहः, संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथग्'' — '' 'संकल्पः'=चिन्तनं 'विकल्पो'=विशेषचिन्तनं, यस्य मनसः संकल्पविकल्पाभ्यां कामसम्भवो वर्ततइति कामरूपा वृत्तिः लक्षणत्वेन उक्ता... 'द्रव्यस्फुरणरूपं विज्ञानम्'इति चित्तव्यावृत्त्यर्थम् उक्तम्. 'इन्द्रियाणामनुग्रहः'(बुद्धिलक्षणन्तु) इति *सविकल्पज्ञाने* 'हृषीकाणामधीश्वरम्'(मनोलक्षणन्तु) इति यद् उक्तं तत्तु *निर्विकल्पज्ञाने* द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिः विपर्यासो मिथ्याज्ञानम्''** (भाग.श्रीध.३।२६।२७-३०) इतिहि जागरुकेऽपि श्रीधरस्वामिव्याख्याने मनसो निर्विकल्पज्ञानहेतुत्वस्य निराकरणं, बुद्धेरपि विकल्पात्मक-मिथ्याज्ञानहेतुत्वस्य निराकरणं च न स्वारूढशाखोच्छेदनम् अतिवर्तते!

[२]**''श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति, मनएव मनुष्यस्य पूर्वरूपाणि शंसति, अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते यथा तथानुमन्तव्यं देशकालक्रियाश्रयम्-''** (भाग.पुरा.४।२९।६५-६७) इति चतुर्थस्कन्धीयवचनस्य भावार्थदीपिकायास्तु पूर्वापरानुसन्धानपूर्वके विमर्शे क्रियमाणे न तावद् अननुभूतार्थविषयिणी संकल्पविकल्पात्मिका मनोवृत्तिः क्वचित् सम्भवति अनुभूतार्थविषयिणीतु पुनः संशयविपर्यासनिश्चयस्मृतिरूपाभिः बुद्धिवृत्तिभिः मनःसहकारिणीभिरेव जायमाना सहकारिकारणाभावेतु न संकल्पविकल्पात्मकज्ञानजननाय अलमिति घट्टकुट्यां प्रभातः! अदृष्टाश्रुतविकल्पानान्तु मनसा दर्शनमपि न मनआश्रितं प्रत्युत (विकल्पख्यातेरेव मनोविकल्पैकरूपतासाधकं खलु) देशकालाश्रितमितीह 'श्रद्धत्स्व'इति उपदिशति श्रीमद्भागवतम्. कुतस्तु खलु तत्पराङ्मुखाः मिश्रमहाभागाः नेह श्रद्दधति इति ज्ञातुं न पारयामः! ततश्च यइमे धीमन्तो तत्र भवन्तः स्वोद्धृतवचनाभिप्रायमपि नावधारयितुं शक्नुवन्ति दूरतरं तेषु परोक्तवचनाभिसन्धानावधारणप्रत्याशा!

यत्पुनः [३]**''अविद्यया मनसा कल्पितास्ते''** (भाग.पुरा.५।१२।९) इत्यस्मिन्

वचनोदाहरणे विकल्पानां या मनःकल्पितत्वसाधनदुराशा सातु श्रीधर्या सर्वथैवापहतापि पुनः बाधितार्थानुवृत्तिमिव कुतोऽनुसरति इति महत् चित्रम्! तथाहि श्रीधरी "**परमाणवः तर्हि सत्याः स्युः तत्राह ते मनसा कार्यानुपपत्त्या वादिभिः कल्पिताः**" (भाग.भावा.५।१२।९) ततश्च नेह नामजात्यादिविकल्पानां विषये मनःकल्पितत्वकल्पनायाः लेशतोऽपि अवकाशो वर्तते, यदि श्रीश्रीधरस्वामिनः प्रामाण्यमविकल्पितं चेत्!

४"**तत्कर्म सङ्कल्पविकल्पकं मनो**"—" 'तत्'=तस्मात् **कर्माणि सङ्कल्पयति विकल्पयति च मनः**"(भाग.भावा.११।२।३८) इति भागवतभावार्थदीपिकयोः अवगाहनेन न नामजात्यादिविकल्पानां प्रत्युत कर्मणां सङ्कल्पविकल्पयोरेव कथा सुस्पष्टेति किं केन सम्बद्ध्यते? ५" 'अहम्'इत्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि उत्सर्पति रजो घोरं ततो वैकारिकं मनः, रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः ततः कामो गुणध्यानाद् दुःसहः स्याद्धि दुर्मतेः"—"प्रमत्तस्य विवेकशून्यस्य देहादौ 'अहम्' इति मिथ्याबुद्धिः हृदि यथावद् उत्सर्पति ततो 'अहं'बुद्धेः च वैकारिकं सत्त्वप्रधानमपि मनः प्रति घोरं दुःखात्मकं रजः उत्सर्पति मनो व्याप्नोति इति अर्थः. इदमेवम् इदमेवं भोग्यम् इति सविकल्पः सङ्कल्पः स्यात् ततश्च अहोरूपम् अहोभावः इति गुणाभिध्यानाद् दुर्धरः कामः स्यात्" (भाग.भावा.११।१३।९-१०) इति भागवत-भावार्थदीपिकयोः सम्यगवगाहनेन सर्वथा विस्पष्टमिदं यत् श्रीधरस्वामिमते सबुद्धिकस्यैव मनसः सङ्कल्पविकल्पकामादिसामर्थ्यं न निर्बुद्धिकस्येति तदपि पूर्वनिरूपिताविरुद्धमेव.

तत्र मिश्रमहाभागाः पृच्छन्ति "**इदन्त्वाच्छिन्नं सामान्यज्ञानं तत्त्वदृष्ट्या निर्विकल्पकमेव नामजात्यादियोजनाशून्यत्वेन एतस्य सङ्कल्पविकल्पात्मना मनसा ग्रहणं कथं सङ्घटते?** इति तत्रतु वयमपि प्रतिपृच्छामो यथा विकल्पख्यातिवादिनां मायावादिनां वा मतेऽपि "**बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः मनो नाम सङ्कल्पविकल्पात्मिकान्तःकरणवृत्तिः... इयं बुद्धिः ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशो भवति... मनस्तु ज्ञानेन्द्रियैः सहितं सद् मनोमयकोशो भवति... एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपो, मनोमय इच्छाशक्तिमान् करणरूपः.**" (वेदान्तसारे खं.१३) इति उभयोः बुद्धिमनसोः कोशभेदो वर्तते बुद्ध्यभावे च केवलस्य मनसो रजोगुणेन वेधो न भवति, तदभावेच कामप्रधानेन मनसा

नामजात्यादिमिथ्याज्ञानात्मकतायाः निर्वाहः कथन्नु शक्येत ? नहि भ्रमः इच्छारूपः क्रियारूपो वा किन्तु मिथ्याज्ञानरूपएव. अथ बुद्धिमनसोः भेदो अन्तःकरणवृत्तिभेदात्मकएव न पदार्थभेदात्मकः. तदा अन्यख्यातिवादिनामस्माकमपि मते अन्तःकरणन्तु एकमेव चतुर्ग्रन्थिरूपम् अङ्गीक्रियतइति कुतो न समाधानं शक्यं कर्तुम् ? किञ्च विकल्पख्यातिदुराग्रहात् मिश्रमहाभागाः *वेदान्तपरिभाषाम*पि नानुसरन्ति इति वयं भृशं दूयामहे. तथाहि —

> **''[1]साच वृत्तिश्चतुर्विधा संशयो निश्चयो गर्वः स्मरणम् इति. एवंविधवृत्तिभेदेन एकमपि अन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तम् इति व्याख्यायते. तद् उक्तं 'मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरं संशयो निश्चयो गर्वः स्मरणं विषया इमे' '', ''अतएव प्रातिभासिकरजतस्थले रजताकारा अविद्यावृत्तिः साम्प्रदायिकैः अङ्गीकृता.''**
>
> **''[2]तत्र चैतन्यरूपज्ञाने संशयाकारवृत्तिमदन्तःकरणं मनः, निश्चयाकारवृत्तिमदन्तःकरणं बुद्धिः, गर्वाकारवृत्तिमदन्तःकरणमहङ्कारः, स्मरणाकारवृत्तिमदन्तःकरणं चित्तम्.''**
>
> (वेदान्तपरिभाषायां [1]प्रत्य.परि. [2]तट्टीका च 'मणिप्रभा'ख्या)

मिश्रमहाभागाः कथयन्ति **''अनिवर्चनीय-ख्यातिं भाष्यकारभगवत्पादवर्त्मानुयायिनाम् अभिधानान्तरेण प्रक्रियाभेदेन वयम् अभ्युपगच्छामः''** सुखेन अभ्युपगच्छन्तु भवन्तः परन्तु मिथो विरुद्धयोः उभयविधयोः अभ्युपगमयोः समन्वयः कथमिति सोऽप्युपायो कथञ्चिदनुदर्शनीयः. एकत्र अनिर्वचनीयख्यातिवादे मनोवृत्तेर्हि विषयः संशयो, भ्रमस्तु तावदविद्यावृत्तेः विषयो, अपरत्र विकल्पख्यातिवादे नामजात्यादिकल्पनाविभ्रमो मनोवृत्तेः विषयत्वेन हि अभ्युपगतइति. सएष जगन्मातृकल्पायै अविद्यायै मातृश्राद्धे वितीर्णो किमु तिलाञ्जलिः ? आहोस्वित् श्रीधरस्वामिनां भागवतभावार्थदीपिकैव विकल्पफूत्कारेण उद्धापिता ? यतोहि तत्र **''इन्द्रियाणाम् अनुग्रहः' इति *सविकल्पज्ञाने* 'हृषीकाणामधीश्वरम्' इति यद् उक्तं तत्तु *निर्विकल्पज्ञाने* द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिः विपर्यासो मिथ्याज्ञानम्''** इति सुस्पष्टम् उपलभ्यते !! यदि द्रव्यस्फुरणस्यैव प्रपञ्चो विपर्यासो मिथ्याज्ञानं तदा मानससङ्कल्पविकल्पयोः न सर्वत्र भ्रमात्मकता वक्तुं शक्या. अथ नामजात्यादिकल्पानां विकल्परूपत्वेन

न बुद्धिगोचरता तदा भागवतभावार्थदीपिकयोः मिथ्याज्ञानरूपविपर्यासस्य बुद्धिवृत्तितोक्तिः जरद्गवकम्बलपादुकायितैव भवेत्!

यदपि उच्यते "**व्यामोहिकया मायया सदृशादृष्टरूपोद्बोधसामग्रीप्राबल्यस्यैव सहकारित्वात् प्रथमं शुक्तिस्वरूपबोधस्य निराकरणं, तदनु तद्भिन्नया बुद्ध्या रजताद्युत्पत्तिः इति गौरवम्. कथं न एकयैव मायया तद् उभयस्यापि निर्वाहकत्वम् आवरण-विक्षेपशक्तिद्वयद्वारेण इति अभ्यनुमोदनीयम्?**" तत्र अन्यख्यातिवादिनामपि एवमेव प्रश्नोऽवतिष्ठते केयमावश्यकता सङ्कल्पविकल्पात्मिकायाः मानस्याः वृत्तेः यत्र अघटितघटनापटीयस्यौ आवरणविक्षेपव्यूहविशिष्टे मायाविद्ये विद्येतेएव ताभ्यामेव घटितं सर्वमिति अमत्वा परोपदेशे पाण्डित्यप्रदर्शनात् पूर्वं मनसः सङ्कल्पविकल्पात्मकवृत्तेः अभ्युपगमः कुतो न त्यज्यते?

अपिच मिश्रमहाभागाः पृच्छन्ति "**विप्रकृष्टत्व-धर्मोद्भासित्व-नीलपृष्ठेतर-शुक्तिकाभाग-सम्मुखीनत्वाद्या उपाधयोऽपि कथन्तरां न गृह्यन्ते भ्रमभानसामग्रीत्वेन? ग्रहणेच आसां क्व अन्तर्भावः, किं मायाकार्ये उत बुद्धिव्यवसाये? आद्ये, व्यामोहकत्वे अन्यस्य अपेक्षितत्वान् न मायायाः मायात्वम्. द्वितीये भ्रमापहारे बौद्धरजतबाधवद्-विप्रकृष्टत्वादीनामपि बाधसम्भवात्. तच्च न अनुभूयतइति असङ्गतिः**" तत्तु विकल्पख्यातिवादिनां मतेऽपि प्रत्यावर्ततएव तथाहि भ्रमभानसामग्रीत्वे-नोक्तानामुपाधीनां बुद्धिवृत्तिविषयेष्वन्तर्भावः मनोवृत्तिविषयेषु आविद्यकवृत्तिविषयेषु वा? आद्ये आवरणविक्षेपरूपशक्तिद्वयविशिष्टाविद्यातो अन्यस्यापेक्षितत्वेन भ्रान्तिविष-याणाम् आविद्यकत्वभङ्गः. द्वितीये क्लृप्तायाः मनोविकल्परूपायाः वृत्तेरेव भ्रमाधिष्ठानारोपोभयविधभानोपपत्तौ कृतम् अविद्यया अन्तर्गडुरूपया. नचेष्टापत्तिः ज्ञानमज्ञानस्यैव निवर्तकमिति अङ्गीकाराद् अधिष्ठानप्रमाज्ञानेनापि भ्रमनिवृत्त्यनुपपत्तेः. तृतीये भ्रमापहारे आविद्यकरजतबाधवद्-विप्रकृष्टत्वादीनामपि बाधसम्भवात्. तच्च न अनुभूयतइति असङ्गतिरिति समानो योगक्षेमः.

यत्तु "**दार्ष्टान्तिके अन्यख्यातिस्वीकारे ब्रह्मव्यतिरिक्तान्यस्य सत्तास्वीकृतिरपि आपद्येत. तथात्वेच शुद्धाद्वैतस्यैव हानिप्रसङ्गः**" इति विकल्पख्यातिवादेऽपि नामादिविकल्पानां स्वप्रकाशसंविद्व्यतिरिक्तत्वे अद्वैतहानिः अव्यतिरिक्तत्वे स्वप्रकाशरूपतयैव न मिथ्यात्वम्. अथ नामादिविकल्पानां यथा स्वप्रकाशसंवित्संवेद्यत्वं

न तथा स्वप्रकाशसंविदो नामादिविकल्पसंवेद्यत्वमिति भेदः चेद् अयं तावत् स्वशिष्यैकोपदेष्टव्यो व्यावहारिको भेदोऽपि **"स्वप्रकाशसंविद् अवेद्यत्वे सति स्वविषयकापरोक्षव्यवहारहेतुः"** ( तत्त्वप्रदी.चित्सु.प्रथ.परि. ) इति लक्षणे नामादिविकल्पगोचरताभ्युपगमादेव गतइति सन्तोष्टव्यम्. अथ व्यवहारदशायामेव तस्य नामादिविकल्पगोचरत्वं न परमार्थदशायाम् इति चेत् **"स्वपरप्रतिघाततो विभङ्गं कलयद्भिः व्यवहारभूमिकायां परमार्थदशेति काचिदन्या विगतन्यायमुपेयेऽद्वयस्य"** इति वाचस्पत्युक्तिमेव स्मारयामः. सति चैवं विकल्पानां भ्रान्तिरूपां वृद्धिमिच्छतो निर्विकल्पसंविद्रूपं मूलमपि भवतां नष्टमिति हा कष्टतरम्! इति श्रीमद्भिः स्वयं निर्णेतव्यम्.

अपिच भवेम खलु ऋजुस्वान्ताः ब्रह्मणो हि ऐच्छिकं द्वैतं स्वीकुर्वाणाः ब्रह्मवादावलम्बिनो वयं वाल्लभाः. ऋजुतमस्वान्तास्तु तत्र भवन्तो मिश्रमहाभागाः! तस्मिन्नेतस्मिन् ऋजुतमस्वान्तत्वेतु भवतां कैवल्यमद्वितीयत्वं वापि सडिण्डिमघोषं भवद्भिः नूनम् अङ्गीकार्यमेव अन्यथा केवलाद्वैतहानिप्रसङ्गो वज्रलेपायितः स्यात्!

तथाहि प्रपञ्चस्य शुक्तिरजतसाधर्म्येण स्वप्नसाधर्म्येण वा मिथ्यात्वं स्वीकुर्वद्भिः तत्र भवद्भिः अङ्गीकृतम् आत्मनो भाष्यकारभगवत्पादवर्त्मानुगामित्वं सद्यमेव विस्मृतमिति न किं तत् सावद्यम्! शृण्वन्तु भवन्तो यद् भगवत्पादश्रीमच्छंकरो **"वैधर्म्याच्च न स्वप्नादिवद्"** इति वेदान्तसूत्रस्य शारीरकभाष्ये भवादृशां मनःशमायैव अभाषि —

> **"यद् उक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवद् जागरितगोचराअपि स्तम्भादिप्रत्ययाः भवेयुः प्रत्ययत्वाविशेषादिति. तत् प्रतिवक्तव्यम्. अत्र उच्यते न स्वप्नादिप्रत्ययवद् जाग्रत्प्रत्ययाः भवितुमर्हन्ति. कस्मात्? वैधर्म्याद्. वैधर्म्यं हि भवति स्वप्नजागरितयोः. किं पुनः वैधर्म्यं? बाधाबाधाविति ब्रूमः. बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्या मया उपलब्धो महाजनसमागमः इति. नह्यस्ति मम महाजनसमागमो निद्राग्लानन्तु मे मनो बभूव. तनैषा भ्रान्तिरुद्बभूवेति. एवं मायादिष्वपि भवति यथायथं बाधः. नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदपि**

**अवस्थायां बाध्यते... तत्रैवं सति न शक्यते वक्तुं 'मिथ्या जागरितोपलब्धिः उपलब्धित्वात् स्वप्नोपलब्धिवद्' इति, उभयोः अन्तरं स्वयम् अनुभवता. नच स्वानुभवापलापः प्राज्ञमानिभिः युक्तः कर्तुम्. अपिच अनुभवविरोधप्रसङ्गाद् जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुम् अशक्नुवता स्वप्नप्रत्ययसाधर्म्याद् वक्तुम् इष्यते. नच यो यस्य स्वतो धर्मो न सम्भवति सोऽन्यस्य साधर्म्यात् सम्भविष्यति. नहि अग्निः उष्णो अनुभूयमानः उदकसाधर्म्यात् शीतो भविष्यति. दर्शितन्तु वैधर्म्यं स्वप्नजागरितयोः''**

( ब्र.सू.शा.भा.२।२।२९ )

तस्मात् सर्वविधप्रपञ्चस्य अभ्रमरूपत्वं न निर्भ्रमम् अङ्कयन्ति भाष्यकाराः स्वहृदयपटले स्वाभ्यूहितवादभङ्गभिया, नवा सर्वथा निराकुर्वन्ति श्रीमद्ब्रह्मसूत्राणां स्वाभ्यर्हितत्वेन स्वीकृते प्रमाणनिचये प्रपञ्चस्य स्वप्नोपममिथ्यात्वस्य निरसनात् चेति ग्रहणनिराकरणोभययपक्षयोः मध्ये सुव्यक्ता दोलायमानता भवतां भाष्यकाराणामपि इति. अथैतत् स्याद् यथा उदयनाचार्याः प्राहुः **''न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः तद्बाधके बलिनि वेदनये जयश्री, नोचेदनित्थमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः!''** इति श्रुतिविरुद्धतथागतमतवैतथ्यप्रतिपादनएव भगवत्पादानामभिप्रायः नहि प्रपञ्चवैतथ्यनिरसने इति न तेषां दोलायमानचित्ततेति. तदा जगत्सत्यत्ववादावलम्बनेन भगवद्भजनविमुखानां जनानां तादृश्याः मनोवृत्तेरेव निराकरणे अस्मदाचार्यचरणानामपि तात्पर्यं न पुनः जगत्सत्यत्वनिरसनइति भगवद्भजनैकनिष्ठचित्तानाम् अस्मदाचार्याणामपि नेतस्ततः दोलायमानचित्तता !

निरूपयन्त्यपि तएव स्वप्रकटितवेदस्तुतिसुबोधिन्यां जगतो ह्यसत्त्वप्रतिपादनं न स्वार्थे तात्पर्यवद् इति **''एवं सर्वैः प्रकारैः भगवद्भजनं निरूप्य... भजनीयनिर्धारार्थं यतमानाः सच्चिदानन्दो भगवान् भजनीयइति वक्तुं लोके सच्चिदानन्दाः धर्माः एकत्र न सन्तीति किं वक्तव्यम्!... तत्र प्रथमं द्वाभ्यां जगति सत्त्वं निराक्रियते अन्यथा भगवानेव भजनीयइति अर्थो न उपपद्येत. भजनीयनिर्धारे गौणसत्त्वस्य ( ब्रह्मोपादानकत्वरूपस्य ) अप्रयोजकत्वात्. ज्ञानार्थं ( भगवन्माहात्म्यज्ञानार्थं ) दोषाभावार्थं ( ब्रह्मेतरमायाविद्यापरमाण्वादिजन्यत्वरूपदोषाभावार्थं ) वा तदुपयोगः...''** ( सुबो.१०।८७-।३६) तस्माद् न दोलायमानचित्तता क्वचिद् ब्रह्मवादिनां सम्भवति. तस्यैतस्य

ब्रह्मणः स्वरूपविषये श्रीमद्भागवते —

> **''अथ तत्र भवान् किं देवदत्तवद् इह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलममुपाददात्याहोस्विद् आत्माराम उपशम-शील समञ्जसदर्शन उदास्तइति ह वाव न विदामः. नहि विरोध उभयं भगवति अपरिगणितगुणगणे ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तः-करणाश्रयदुरवग्रवादिनां विवादानवसरे उपरतसमस्तमायामये केवल-एव आत्ममायाम् अन्तर्धाय कोनु अर्थो दुर्घटइव भवति स्वरूपद्वयाभावात्... सएव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः...''**
>
> ( भाग.पुरा.६|९|३५-३८ )

इति सडिण्डिमम् उद्घुष्टमेवेति भगवतो विरुद्धधर्माश्रयत्वेन किं तद् यद् न उपपद्येत ! योऽपि **''भगवत्कृतप्रपञ्चस्य सत्यत्वं बौद्धस्य वा असत्यत्वम् इति उभयमपि सुन्दोपसुन्दन्यायेन अन्योन्यम् उपमर्दम् उपजनयति, सर्वप्रपञ्चस्य जातिगताभिन्नत्वेन सदसद्विलक्षणत्वरूपम् अनिर्वचनीयत्वं वा समर्थयति, न अन्यख्यातिम्''** इति अनिर्वचनीयवादः स प्रतिवक्तव्यो ननु भो कोऽयं भवतां विकल्पख्यातिवादव्यामोहो ? यः स्वाधीतां *वेदान्तपरिभाषाम्*पि भवत्सु विस्मृतिपथि नयति ! तथाहि **''जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतया अप्रामाणिक-त्वात्. 'घटोऽयम्' इत्यादिप्रत्यक्षं हि घटत्वादिसद्भावे मानं नतु तस्य जातित्वे''** ( वेदा.परि.प्रत्य.परि. ) तस्माद् न वयं किमुत भवन्तएव स्वयं काञ्चित् पुनर्विचारणाम् अत्र अर्हन्ति.

श्रीमिश्रमहाभागानां '' **[१]'यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले, एवं द्रष्टरि दृश्यत्वम् आरोपितम् अबुद्धिभिः', [२]'वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः', [३]'अहं पयोज्योतिरथानिलो नभो मात्राणि देवा मनइन्द्रियाणि कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः' इति श्रीमद्भागवतशास्त्रस्य जृम्भमाणेषु एतेषु वचनेषु को वा प्रपञ्चस्य भ्रमरूपत्वं निवारयितुम् ईष्टे!''** इति विस्मयः तत्र *वेदान्तपरिभाषैव* ईष्टे इति तन्निराकरणं वरम्.

तथाहि वेदान्तपरिभाषायां तावद्—

[१]**"यत्र आरोप्यम् असंनिकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेः अङ्गीकारात्. अतएव इन्द्रियसंनिकृष्टतया जपाकुसुमलौहित्यस्य स्फटिके भानसम्भवाद् न स्फटिके अनिर्वचनीयलौहित्योत्पत्तिः"** (वेदा.परि.प्रत्य.परि.) इति व्यवस्थापितत्वेन नभस्यधिष्ठाने आरोप्यस्य मेघौघस्य तथैव अनिलरूपेऽधिष्ठाने आरोप्यानां पार्थिवरेणूनां न असंनिकृष्टत्वमिति, तयोरुभयोः समसत्ताकयोः मिथः संनिकृष्टत्वेन विषमसत्ताकत्वाभावएव. आतश्च दृष्टान्तयोः न एकस्मिन् अधिष्ठाने अपरस्यासंनिकृष्टस्य आरोप्यस्य वस्तुस्वरूपभ्रमः किन्तु उभयोः समसत्ताकयोः संनिकृष्टयोरेव खलु संसर्गभ्रमो यथा, तथैव दार्ष्टान्तिकेऽपि परमार्थसति द्रष्टरि परमार्थसतोरेव दृश्यस्य तत्संनिकृष्टस्य संसर्गभ्रमएव स्वीकरणीयो यदि वेदान्तपरिभाषायाः अपभाषितत्वं नाभिमतं चेत्. वाक्यव्याख्यानन्तु श्रीमद्भागवतस्वारसिकतात्पर्यानुरोधि श्रीमदाचार्यचरणैः तत्रैव सुबोधिन्यां प्रकटीकृतमिति नेह पुनरुच्यते.

[२]**"वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः, तथापि मुह्यन्ति तवाज मायया सुविस्मितं कृत्यमजं नतोऽस्मि तम्"** (भाग.पुरा.५।१।४) इति नूनमेतत् श्रीमद्भागवतशास्त्रस्य वचनं जृम्भमाणं वर्तते नात्र विचारणीयं किञ्चित् किन्तु तत्तात्पर्यावबोधो भवत्सु विजृम्भते नवा इत्येव तावद् विचारणीयं मनुमहे. श्रीमद्भागवते प्रतिपदप्रतिपाद्यस्य श्रीकृष्णस्यानुजायाः योगमायारूपायाः भगवत्याः विन्ध्येश्वर्याः देव्याः प्रसादभाजनेषु अत्र भवत्सु कुतो न स विजृम्भते इति महते विस्मयायैव. भवन्तो हि श्रीविन्ध्येश्वरीप्रसादाः साक्षात् न खलु व्यामोहकमायाप्रसादाः. वस्तुतस्तु वाक्येऽस्मिन् काचन माया निर्दिष्टा न तत्र कोऽपि सन्देहः, निर्दिश्यमाणा च सा सृष्ट्युत्पत्तिकरणरूपा सर्वभवनसामर्थ्यरूपा उत भगवल्लीलासामयिकी आत्ममायापरपर्यायरूपा विन्ध्येश्वरी योगमाया आहोस्विद् अविद्यापर्पर्यायरूपा व्यामोहिका वा? इति सन्देहे, आद्ये द्वे भगवतो ह्यन्तिमातु जीवस्यैवेति **"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतो गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनं, शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया, स्वप्नो यथात्मनः ख्यातिः संसृतिः नतु वास्तवी, विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणां मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते, एकस्यैव ममांशस्य जीवस्यैव महामते बन्धोऽस्याविद्ययानादिः विद्यया च तथेतरः"**

(भाग.पुरा.११।११।१-४) इति वाचनिकसन्दर्भानुरोधेन निरस्तप्रायो वर्तते. अतः आत्मोपादानकसृष्टिकरणरूपायाः सर्वभवनसामर्थ्यरूपायाः, लीलासामयिक्याः योगमा-यायाः च भगवन्मायात्वं वर्तते. सेयं हि माया जीवमायायाः अविद्यायाअपि विनिर्मात्री इति ताम् अपश्यन्तो भवन्तः सर्वत्र स्वमायामेव सर्वत्र पश्यन्ति तत्तु आत्मगतायाः पीतिमायाः शुभ्रे शङ्खे समारोपइवेत्यत्र न तिरोहितमिव किञ्चिद्. "'**वदन्ति विश्वं कवयः**" इत्यस्मिन्नु वाक्ये पुनः जीवमाया वा भगवन्माया वा विवक्षिता इति सन्देहे "**तथापि मुह्यन्ति तवाज मायया**" इति वाक्यशेषएव निःशेषम् आविद्यककल्मषम् अपहरति इति विदांकुर्वन्तु अत्र भवन्तः श्रीविन्ध्येश्वरीप्रसादमहाभागाः, ननु स्वनाम्नो अन्वर्थतासिद्ध्यै किल!

[३]तृतीयेतु उदाहृतभागवतवचने अखिलस्य द्वैतप्रपञ्चस्य अद्वितीये ब्रह्मणि भ्रमरूपत्वमिव बोध्यते परन्तु उपात्तसन्दर्भपर्यालोचनेतु सोऽपि भ्रमः सर्वथा बाध्यतएव. तथाहि "**नमो भगवते तुभ्यं वासुदेवाय विष्णवे पुरुषायादिबीजाय पूर्णबोधाय ते नमः**" (भाग.पुरो.१०।५९।२७)इति उपक्रमे आत्यन्तिकद्वैतभ्रान्तेः विवक्षितस्याद्वि-तीयस्याधिष्ठानस्य भगवतो पूर्णबोधात्मकस्य निखिलनामरूपकर्मणाम् आदिबीजरूपस्य पुरुषविधस्य वासुदेवस्य स्वरूपं निरूप्य मध्ये "**अजाय जनियत्रेऽस्य ब्रह्मणेऽनन्तशक्तये परावरात्मन् भूतात्मन् परमात्मन् नमोऽस्तु ते. त्वं वै सिसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः स्थानाय सत्त्वं जगतो जगत्पतेः कालः प्रधानं पुरुषो भवान् परः**" (भाग.पुरो.१०।५९।२८-२९)इति मध्ये अजस्य तस्य स्वानन्तशक्त्यैव दृश्यमानद्वैतजनकस्य परावरात्मत्वं, भूतात्मत्वं, परमात्मत्वं, सर्वरूपधारकत्वं, सर्वात्मकत्वं सर्वातीतत्वं चापि निरूपितम्. तत्र इदमेव अवधेयं भवति यद् नहीदृशस्य स्वतो द्वैतभावापन्नस्य सगुणब्रह्मणो अद्वैतिनां मते निखिलद्वैतभ्रमाद्वितीयाधिष्ठानत्वं सम्भवदुक्तिकम्.

अथ '**तत्त्वमसि**' - '**अहंब्रह्मास्मि**'**इत्यादिमहावाक्यवद् भागत्यागलक्षणया जहदहजहल्लक्षणया वा तस्यापि अद्वितीयत्वं निखिलद्वैतभ्रमाधिष्ठानत्वं शक्यतेएवेति चेद् उपसंहारे "अहं पयोज्योतिरथानिलो नभो मात्राणि देवा मनइन्द्रियाणि कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः**" (भाग.पुरो.१०।५९।३०) इत्यत्रापि मा भूत् 'त्वयि' इति निरूपणं भवतात् च 'मय्यद्वितीये' इति निरूपणम्! नहि महावाक्येषु "तत् त्वम् अस्ति" इतिवा "ब्रह्म अहम् अस्ति" इतिवा

निरूपणम् उपलभ्यते. ततः स्फुटैव अत्र वाक्यार्थवैषम्यप्रक्रिया? वस्तुतस्तु अत्र भगवतः सर्वात्मकत्वं सर्वातीतत्वं चेति विरुद्धधर्माश्रयत्वबोधनेनैव उपक्रमोपसंहारयोः एकवाक्यतासम्पादनेनैव शास्त्रविवक्षितार्थबोधः सम्भवति. न केवलोपसंहारगता'ऽद्विती-यत्व'पदमात्रसमाश्रयणेन, युक्त्यगम्यत्वे सति श्रुत्यादिशास्त्रैकगम्यत्वाद् अस्य विषयस्य. यथाहुः भगवत्पादश्रीमच्छंकराचार्याः —

**''यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते एवं विकारव्यतिरेकेणापि ब्रह्मणो अवस्थानम्. कुतः? श्रुतेः!... शब्दमूलं च ब्रह्म शब्दप्रमाणकं न इन्द्रियप्रमाणकं तद् यथाशब्दम् अभ्युपगन्तव्यम्. शब्दश्च उभयमपि ब्रह्मणः प्रतिपादयति अकृत्स्नप्रसक्तिं निरवयवत्वं च. लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशात् शक्तयो विरुद्धानेककार्यविषया दृश्यन्ते. ताअपि तावद् नोपदेशमन्तरेण केवलेन तर्केण अवगन्तुं शक्यन्ते — अस्य वस्तुनः एतावत्यः एतत्सहायाः एतद्विषयाः एतत्प्रयोजनाः च शक्तयः — इति किमुत अचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत!... तस्मात् शब्दमूलएव अतीन्द्रियार्थयाथात्म्याधिगमः.''**

(ब्र.सू.शा.भा.२।१।२७).

तस्मात् 'त्वयि'इति पदबोधिते भगवति सद्वितीये वासुदेवे सगुणे साकारे सविशेषे श्रीकृष्णएव, न निर्गुणे निराकारे निर्विशेषे ब्रह्मणि, अद्वितीयत्वस्य द्वितीयभ्रमाधिष्ठानत्वस्य च बोधनाद्, द्वितीयतयावधृतानां पदार्थानां न असंनिकृष्टारोपहेतुकी प्रातिभासिकता स्वप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिता वा किन्तु मायाविद्याद्युपादानकताप्रयुक्तस्य मिथ्याभेदस्य तथैव प्रकृतिपरमाण्वाद्युपादानकता-प्रयुक्तस्य आत्यन्तिकभेदस्यापि निरासः. नच श्रीकृष्णस्यापि सगुणत्वाद् मायिकत्वं शङ्कनीयं यथाह श्रीमधुसूदनसरस्वतयः **''भगवतः कृष्णस्य च सर्वकल्पनाधिष्ठानत्वेन परमार्थसत्यनिरुपधिब्रह्मरूपत्वाद्. किम् अतद्वस्तु तस्मात्, श्रीकृष्णाद् अन्यद् वस्तु पारमार्थिकं किं, निरूप्यताम्? तदेवैकं पारमार्थिकं न अन्यत् किमपि इति अर्थः''** (गीता.मधुसू.१४।२७). यत्पुनः **''श्रुतेस्तु शब्दमूलत्वात्''**इति सूत्रे भाष्यकृता **''ननु शब्देनापि न शक्यते, विरुद्धो अर्थो प्रत्याययितुं, निरवयवं च ब्रह्म परिणमते च न कृत्स्नम् इति''** (तत्रैव) इति शङ्कासमाधनं कृतं तत्तु शब्दैकप्रमाणकेऽर्थे शब्दैकप्रामाण्याङ्गीकारे भाष्यकाराणामपि तर्कभीत्या दोलायमानचित्ततायाः प्रमाणं

भवतु वा श्रीमधुसूदनसरस्वत्युक्तया "**भगवदभिप्राय(/भगवत्पादाभिप्राय)वर्णने के वयं वराकाः**" (गीता.मधुसू.१८।६६) इति नीत्या कथञ्चिद् अन्यथानेयानि वचनानि इमानि इति अभ्युपगच्छन्तु भवन्तः. अन्यथा "**मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परं, त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवतिभावेन बिभृषे**"(सौन्द.लह.३५) जगत्परिणाम्युपादानभूतायाः शक्तेः अविद्यारूपत्वे सौन्दर्यलहर्यां चिदानन्दाकारत्वेन स्तुतिः दम्भएव स्यात्. दम्भरहितस्तुतित्वेतु न जातु पृथ्व्यादीनाम् आविद्यकत्वसम्भवनालेशगन्धोऽपि. तस्माद् मा भूदिह दोलायमानचित्तता भवतां; मा भूच्च भवतां मनसि सङ्कल्पविकल्पो यद् अयं भगवत्पादश्रीमच्छंकराचार्याणां द्वैतवासनाप्रयुक्तोऽयं मानसः स्तुतिसंकल्प इति. तस्मात् सौन्दर्यलहर्यां निमज्जनपूतेन मनसा भगवतो अनाविद्यकं पृथिव्यादितत्त्वसृष्टिसौन्दर्यम् अत्र अनुभवन्तु तत्र भवन्तः!

यच्च "**'शुक्तिरजतादिभ्रमो निरुपाधिकः 'पीतःशङ्खः' इत्यादिकः च सोपाधिकः' तदपि न मनोरमं विचारासहत्वात् सार्वजनीनप्रतीतिविरुद्धत्वात् च. यथा 'पीतः शङ्खः' इति स्थले पित्तादिनेत्रदोषरूपोपाधिः तथैव शुक्तिरजतस्थलेऽपि विप्रकृष्टत्व-घर्मपतित्व- 'चाकचाक्यादिमत्त्व- नीलपृष्ठेतरभागसम्मुखीनत्वादयः उपाधयो विद्यन्तएव**" इति आक्षिप्तं तत्र अधिष्ठानतत्त्वज्ञाननिवर्त्यो भ्रमो निरुपाधिकः तदनिवर्त्यो हि उपाधिनाशनाश्यः च सोपाधिकः इति व्यवस्था, नतु उपाधिजन्यो भ्रमः सोपाधिकः तदजन्यो निरुपाधिकः इति अवधेयम्. अनिर्वचनीयख्यातिवादाभिमतपरिभाषामनुसृत्यापि निरूपणाग्रहेतु विशेषावरणनिवृत्तावपि विक्षेपानुवृत्तिको हि भ्रमः सोपाधिकः, विशेषावरणनिवृत्तिप्रयुक्तविक्षेपनिवृत्तिनियतिकस्तु निरुपाधिकः इत्यपि सूपपाद्यमेव. नचेयं प्रक्रिया सार्वजनीनप्रतीतिविरुद्धेति वाच्यं, सिद्धान्तलेशसंग्रहे "***अन्ये वृत्त्येदमज्ञानावरणांशपरिक्षयाद् विक्षेपांशेन रजतं जीवन्मुक्तौ जगद् यथा.*** **अपरेतु 'इदं रजतम्' इति इदमंशसम्भिन्नत्वेन प्रतीयमानस्य रजतस्य इदमंशाज्ञानमेव उपादानं, तस्यच इदमाकारवृत्त्या आवरणशक्तिमात्रनिवृत्तावपि विक्षेपशक्त्या सह तदनुवृत्तेः नोपादानत्वासम्भवः. जलप्रतिबिम्बितवृक्षाधोऽग्रत्वाध्यासे जीवन्मुक्त्यनुवृत्तेः प्रपञ्चाध्यासे च सर्वात्मना अधिष्ठानसाक्षात्कारानन्तरभाविन्याम् आवरणनिवृत्तावपि विक्षेपशक्तिसहिताज्ञानमात्रस्य उपादानत्वसम्प्रतिपत्तेः**" (सि.ले.सं.१।११०) इति शब्दान्तरैः अस्याः प्रक्रियायाः स्वीकृत्युपलम्भात्.

वाल्लभग्रन्थानां सम्यगवलोकनं विनैव मिश्रमहाभागैः यत् पुनरुच्यते "**वाल्लभाः**

**ब्रह्मणः सगुणसाकारविग्रहं पुरुषोत्तमरूपम् अभिप्रयन्ति. श्रीमद्भागवतसिद्धान्तानुयायिनाम् अस्मदादीनामिव तथा अत्र तद्धाम्नो लीलानाम् अवताराणां चापि विवेचनं तैः अवश्यं करणीयम् आसीत् ख्यातिवाददृशापि**'' इति तत्र वस्तुतस्तु भगवत्स्वरूपगुणधर्मनामलीलाधामादीनां विवेचनं वयं वाल्लभाः भक्तिवाददृशैव कुर्मः. ख्यातिवाददृशातु विवेचनाय श्रीमद्भागवतैकगम्ये भगवल्लीलावतारकालिकस्वरूपादिविषयेऽपि ''**शब्दज्ञानानुपातिवस्तुशून्यात्मकविकल्प**''त्वकल्पनाग्रहग्रस्तानां भवादृशानाम् अभागवतकल्पानामेव विशेषाधिकारो भवतु. न तादृशीं स्पृहापिशाचीं वयम् अनुसरामो नापि सापि अस्मासु आविष्टा! ''**असत्यमप्रतिष्ठं ते जगद् आहुः अनीश्वरं...एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः**'' (भग.गीता.१६।८-९) इति भगवता निन्दितत्वेन पृथिव्यादिप्रपञ्चस्यापि असत्यत्वे विप्रतिपन्नाः वयमिति दूरतमैव भगवत्स्वरूपादीनां मिथ्यात्वाङ्गीकरणाय ख्यातिवाददृशा तेषां विवेचनप्रत्याशा अस्मत्कृते.

किञ्च भवादृशाः यदि भागवताः तदा बौद्धैः किमपराद्धम्? तेषाम् अपोहवादो भवन्मते 'सत्यज्ञानानन्ता'दिपदान्यपि विकारराहित्य-जडताराहित्य-देशकालवस्तुपरिच्छेदराहित्यानां बोधकानि, तेषां यथा ''**कल्पनापोढमभ्रान्तं प्रत्यक्षं**'' (न्या.बि.१।४) तथा भवन्मते विकल्पानां कल्पित्वेन सन्मात्रग्राहिप्रत्यक्षतावादः. तेषां मते यथा ''**अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना**'' (न्या.बि.प्र.ल.५) तथा भवतां मतेऽपि ''**अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वम्**'' (चित्सु.१।१९). तेषां मते यथा ''**द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना लोके संवृतिसत्यं सत्यं च परमार्थतः**'' (बो.च.३६१) तथा भवन्मतेऽपि सत्तयोः द्वैविध्यं पारमार्थिक्यपारमार्थिकीभेदेन. यथा तेषां मते संवृतेः तथ्यसंवृतिमिथ्यासंवृतिरूपं द्वैविध्यं तथा भवन्मतेऽपि अपारमार्थिकसत्तायाः व्यावहारिकताप्रातिभासिकतेति द्वैविध्यम्. शून्यस्य लक्षणं तैः यथा दीयते ''[१]**अपरप्रत्ययं** [२]**शान्तं** [३]**प्रपञ्चैरप्रपञ्चितं** [४]**निर्विकल्पम्** [५]**नानार्थमेतत् तत्त्वस्य लक्षणम्**'' (मध्य.शा.१८।९) इति तथा स्वीक्रियतएव भवन्मतेऽपि ब्रह्मणो लक्षणं [१]स्वप्रकाशत्वं [२]शान्तत्वं [३]अवाच्यत्वं [४]निर्विकल्पत्वं [५]अद्वितीयत्वम् इति. यथा तेषां मते ''**सर्वचित्तचैत्तानाम् आत्मसंवेदनम्**'' (न्या.बि.१।१०) तथा भवन्मतेऽपि नामजात्यादिसर्वविकल्पानां स्वप्रकाशचिद्भास्यत्वम्. तेषां मतेऽपि परमेश्वरतत्प्रतिपादकश्रुत्यादिशास्त्राणां कल्पितत्वं तत्तु भवन्मतेऽपि समानमिति यूयं बौद्धाश्च समानसंसदाइति यूयं यदि भागवताः तदा बौद्धानापि युष्मत्पूर्वजातत्वेन

ज्येष्ठभागवतत्वं कुतो न अभ्युपगच्छन्ति भवन्तः?

तथापि साग्रहं पृच्छन्ति चेद् भवन्तो ननु शृण्वन्तु उत्तरं यद् भगवत्पादश्रीमच्छंकराचार्याएव प्राहुः —

> **"परिपूर्णशक्तिकं तु ब्रह्म, न तस्य अन्येन केनचित् पूर्णता सम्पादयितव्या. श्रुतिश्च भवति 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'... यथा लोके देवाः पितरः ऋषयः इत्येवमादयो महाप्रभावाः चेतनाअपि सन्तो अनपेक्ष्यैव किञ्चिद् बाह्यं साधनम् ऐश्वर्यविशेषयोगाद् अभिध्यानमात्रेण स्वतएव बहूनि नानासंस्थानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणाः उपलभ्यन्ते मन्त्रार्थेतिहासपुराणप्रामाण्यात्; तन्तूनाभश्च स्वतएव तन्तून् उत्सृजति... तथा ब्रह्म चेतनमपि न बाह्यं साधनम् अपेक्षिष्यते... तस्माद् यथा एकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुम् अर्हति... तथा एकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैव अनेकाकारा सृष्टिः भविष्यति... तस्मात् परमेश्वरस्य लीलैव केवलम् अपरिमितशक्तित्वात्. यदि नाम लोके लीलास्वपि किञ्चित् सूक्ष्मं प्रयोजनम् उत्प्रेक्ष्येत तथापि नैवात्र किञ्चित् प्रयोजनम् उत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः."**
>
> (ब्र.सू.शा.भा.२।१।२४-३३)

एतदग्रेतु यद् भाष्यकारैः **"नच इयं सृष्टिः परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगोचरत्वाद् ब्रह्मात्मभावप्रतिपादनपरत्वात् च"** (तत्रैव) इति यद् आभाषितं तदपि वयन्तु न आविद्यकं दुराग्रहं मन्महे प्रत्युत भगवत्पादाभ्युपगतपुराणप्रामाण्यानुरोधात् **"त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय"** (वारा.पुरा.७०।३६) इति भगवदाज्ञप्तभगवत्पादश्रीमच्छंकररूपेण कृतेयं भगवल्लीला. तस्मात् भगवतः स्वरूप-नाम-गुण-धर्म-लीला-धाम्नाम् एकविधता बहुविधता वा नाविद्यकी भवितुम् अर्हति. नापिच भगवत्पादश्रीमच्छंकराणां रूपं वा लीला वा इयं मायावादप्रवर्तनरूपा अविद्याजन्यां वा अविद्याकल्पितां वा

वयं मन्महे किमुत यथाह भगवती श्रुतिः "**सोऽकामयद् बहु स्यां प्रजायेयेति... इदं सर्वम् असृजत. यदिदं किञ्च तत् सृष्ट्वा तदेव अनुप्राविशत्. तदनुप्रविश्य सच्च त्यच्च, अभवत्, निरुक्तञ्चानिरुक्तञ्च, निलयनञ्चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यञ्चानृतञ्च सत्यम् अभवत्. यदिदं किञ्च तत् सत्यम् इति आचक्षते**" (तैत्ति.उप.२।६) इति तथा अभ्युपगच्छामः. भवन्तएव तस्मात् प्रष्टव्याः भवन्ति कोऽयं ब्रह्मणि प्रद्वेषो यत् तस्य सर्वभवनसामर्थ्यं स्वाभाविकं नाङ्गीकुर्वन्ति भवन्तः कश्चायं मायाविद्ययोः मोहातिभरो यत् ते अघटितघटनापटीयस्यौ स्वीकुर्वन्ति भवन्तः !!

वयन्तु भवद्भिः सह विवादे एतं प्रतिवादमपि न भवत्कृते प्रत्युत भगवन्तं बुद्धं प्रत्येव स्वीकुर्मः! रासपञ्चाध्यायां भगवच्छ्रीकृष्णोक्तस्वानुगमनत्यागाज्ञोल्लंघनाय श्रीगोपीजनैः कृतः प्रतिवादः "**मैवं विभोऽर्हति भवान् गदितुं नृशंसं**" (भाग.पुरा.१०।२९।३१) इतिवद्. यदाह बुद्धावतारावतारी भगवान् "**युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा मायां मदीयाम् उद्गृह्य वदतां किं नु दुर्घटं, नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा एवं विवदतां हेतु शक्तयो मे दुरत्यया**" (भाग.पुरा.११।२२।४-५) इति न वयमत्र आवयोः संकल्पविकल्परूपे मनोवृत्तीएव केवले अभ्युपगच्छामः प्रत्युत मनसोऽपि भगवदंशत्वमेव "**इन्द्रियाणां मनश्चास्मि**" (भग.गीता.१०।२२) इति भगवतैव स्वविभूतित्वेन परिगणनात्. आतश्च एतादृक्खण्डनमण्डनयोरपि मिथः प्रयुक्ताः उपहासोक्तयः व्यङ्ग्योक्तयोऽपि वा अस्माकं मनसि वादलीलारसस्य तत्त्वबुभुत्सारूपं स्थायिभावमेव परिपुष्णन्त्यः तदनुभावरूपतां तत्सञ्चारिभावरूपतां वा आवहन्त्यो न निन्दनीयाः इति प्रतिभान्ति. अथ तत्स्थायिभावमेव क्वचित् परिघ्नन्त्यस्तु यद्यपि अभिनन्दनीयाः इति अनुभवितुं न वयं शक्नुयाम कदाचित्, सर्वलीलाभिनन्दनसामार्थ्याभावादेव; तथापि तादृश्योऽपि सत्यः सन्ति ताः भगवल्लीलारूपाएव इतितु अस्माकं दृढएव मनःप्रत्ययः. तस्माद् यदि एतासाम् मानसिकविकल्परूपत्वमेव आविद्यकत्वमेव वेति भवदीया दृढा मतिः चेत् तदापि "**मनसा निर्मितं पापं मयि मारोपयाच्युत इन्द्रियाणां मनश्चास्मि त्वयैव कथितं पुरा**" इति आभाणकोक्तिम् अनुसन्दधानाः वयन्तु सापि भगवल्लीलैवेति भृशम् अदोलायमानचित्ताएव उपविशामः. सर्वथापि तस्यैतस्य श्रीमद्भागवतप्रतिपाद्यस्य भगवतः श्रीकृष्णस्य एतद्वादलीलाविनोदेन तच्चरणारविन्दयोरेव आवयोः मनसी एकनिष्ठतासंकल्पप्रचुरे भवतां न विकल्पप्रचुरे इति कामयामहे!

# चर्चा

## श्री व ल्ल भ वे दा न्ता भि म ता अ न्य ख्या तिः
## श्रीमद्भागवतनिरूपिता विकल्पख्यातिः च

डॉ. विन्ध्येश्वरीप्रसाद मिश्र

**के. ई. देवनाथन् :** अनिर्वचनीयख्यातिः नृसिंहाश्रमैः यथा अनिर्वचनीयं वस्तु भासते इति उक्तं यथावा मधुसूदनसरस्वतिभिः उक्तं तदपेक्षया अत्र वैचित्र्यम् अस्ति इति प्रतिपादितम्. तत्र प्रतिपादनकाले एवम् उक्तम् , अविद्यायाः शक्तित्रयम् उक्तम्. एका शक्तिः मलशक्तिः. सा शक्तिः अद्वैतिभिः न अङ्गीकृता. तया शक्त्या रजताकारो विकल्पो मनसि जायते. अनन्तरम् आवरणशक्त्या शुक्तिः आच्छिद्यते. अनन्तरं विक्षेपशक्त्या तस्य अधिष्ठाने प्रतिभासो भवति इति उच्यते. परन्तु अत्र तावद् अविद्यायाः तृतीया शक्तिः स्वीकृत्य एवं मनसि रजतविकल्पात्मकः कश्चित् पदार्थः भवद्भिः उपपादितः तदपेक्षया यथा अद्वैतिभिः उपपाद्यते विक्षेपात्मिका अविद्या प्रातिभासिकं रजतम् उत्पादयति, उत्पाद्य प्रकाशयति इति कथने लाघवम् अस्ति.

**विन्ध्येश्वरीप्रसाद :** लाघवम् अस्ति किन्तु श्रीमद्भागवते तत्र-तत्र मनसि अविद्या मलम् उपजनयतीति मलशक्तेः वर्णनं विद्यत्ते.

**के. ई. देवनाथन् :** 'मलो'नाम संस्कारः.

**विन्ध्येश्वरीप्रसाद :** वासना. यथा कस्मिंश्चिद् भ्रमभातपदार्थे रज्जौ कस्यंचित् भुजङ्गभानं भवति कस्यचित् मालादिकं भाति.

**के. ई. देवनाथन् :** वासना.

**विन्ध्येश्वरीप्रसाद :** वासनातु ग्राह्यचैव. वासनां का उपजनयति ? अविद्यायाः

मलशक्तिः वासनोपजनिका भवति. इति कृत्वा मलस्य स्वीकारः कर्तव्यएव प्रस्थानानुरोधेन.

**के. ई. देवनाथन् :** भवद्भिः उक्तं यत् मलं वासना जनयति, अन्याभिः वासनाभिः सह इति उक्तम्. अन्याः वासनाः यया अविद्यया जायन्ते सैव अविद्या इमं वासनाविशेषोऽपि जनयितुम् अलम्. 'मलम्'इति शब्दः भागवते पठितमिति किम् ?

**विन्ध्येश्वरीप्रसाद :** आम्. असकृत्पठितं निबन्धे मया उदाहृतानि तानि-तानि पदानि. अत्र अधिकारिभेदोऽपि अभ्युपगन्तव्यः.

**के. ई. देवनाथन् :** अस्तु नाम. एतत् सर्वं वासनाविशिष्टा विक्षेपशक्तिः एतादृशी स्वीक्रियते, अत्र अद्वैतिनः सन्ति, तस्याः शक्तिः विलक्षणा भवति. अतएव "**इन्द्रो मायाभिः पुरुरूप ईयते**" बहुत्वकथनकाले व्याख्यातृभिः उक्तम् अस्ति "**ताः शक्तयः विचित्राः**" . अतएव अविद्यायाः दुर्घटत्वम् उच्यते. अविद्यायाः दुर्घटत्वं भूषणम् इति वदतां पक्षे किमर्थम् अधिक ...

**विन्ध्येश्वरीप्रसाद :** शुक्तिरजतस्थले कस्यचन भ्रमः जायते कस्यचन न जायते इत्यत्र व्यतिरेकः कथं स्वीकर्तुं शक्यते ?

**के. ई. देवनाथन् :** अविद्यायाः दुर्घटत्वं भूषणम्, नतु दूषणम्. अद्वैतिनः तथैव कथयन्ति. पङ्क्तितरपि अस्ति "**प्रासाद ...**" .

**पारसनाथ द्विवेदी :** ... शक्तिद्वयम् इति अद्वैतिभिः स्वीक्रियते. तत्र मलशक्तेः किं आवरणशक्तौ अन्तर्भावो न भवितुम् अर्हति ?

**विन्ध्येश्वरीप्रसाद :** भवितुम् अर्हति परन्तु कार्यजननवैलक्षण्येन सा अत्र पृथगुपपादिता इति मन्ये.

**पारसनाथ द्विवेदी :** मलस्य किं कार्यम् ?

**विन्ध्येश्वरीप्रसाद :** मलं तावत् प्रयोजकत्वेन स्वरूपम् आदधति. मलशक्तिसम्पन्नस्यैव प्रमातुः भ्रान्तता इति.

**के. ई. देवनाथन् :** रजतनिष्पादकत्वम् इति तैः उच्यते. यथा अनिर्वचनीयं रजतं अविद्यया जायते इति अद्वैतिभिः उच्यते तत्स्थाने

रजतविकल्पः जायते. तदेव कार्यं मलस्य.

**पारसनाथ द्विवेदी :** तर्हि शब्दान्तरमेव.

**बलिराम शुक्ल :** शब्दान्तरमेव जातम्.

**के. ई. देवनाथन् :** अन्योऽपि कश्चन सन्देहः. भवद्भिः समग्रं भागवतम् अद्वैते आनीतम्. तत्तु प्रथमतः प्रतिज्ञां विधाय भवद्भिः कृतम् अस्ति. मम संशयः, यदि समग्रस्य प्रपञ्चस्य मिथ्यात्वं भागवतेन प्रतिपिपादयिषितं तर्हि किमर्थम् उल्लोकं अर्थात् लोके सर्वैरपि अविज्ञातं बहुपदार्थं भागवतम् उक्त्वा किमर्थं निषेधति ? तत्तु उन्मत्तप्रलपं स्यात् किल !

**विन्ध्येश्वरीप्रसाद :** तत्तु अनुवादः. श्रीमद्भागवतेन प्रथमम् अनुवादः क्रियते परत्र बाधः क्रियते.

**के. ई. देवनाथन् :** किमर्थम् अनुवादः ? अनुवादस्तु प्रसिद्धस्य भवति. लोके अप्रसिद्धाः भगवतः गुणाः, लोके अप्रसिद्धाः भगवतः कथाः...

**विन्ध्येश्वरीप्रसाद :** अनुवादो अत्र प्रपञ्चस्य. स तु प्रसिद्धएव. प्रक्रियानुसारेण बाध्यस्य प्रथमम् अनुवादः कर्तव्यः परस्तात् बाधः करणीयः. ''**त्वय्यद्वितीये भगवन् अयं भ्रमः**'' इत्यत्र बाधएव निगदितः.

**के. ई. देवनाथन् :** तथा नास्ति. अनुवादः प्रसिद्धस्य भवति. यदि कस्यचित् निषेधः कर्तव्यश्चेत् ... शङ्खे पीतत्वं निषिध्यते. पीतत्वम् अन्यत्र प्रसिद्धम् अस्ति. तत् पीतत्वं शङ्खे न स्वीकार्यम्. तत्र तु श्वैत्यम् अस्ति अतः निषेधः कर्तव्यः. लोके अप्रसिद्धाः कृष्णस्य कथाः ... तत्र बहूनि चरित्राणि, बहवः गुणाः, बहवः वृत्तान्ताः. एतान् सर्वानपि उक्त्वा कथं निषेधति ?

**विन्ध्येश्वरीप्रसाद :** तेषां गुणानां लीलादीनाम् अद्वयब्रह्मण्येव पर्यवसानम्. यदि आत्मत्वेन भगवान् न गृह्यते तर्हि परमा प्रीतिरपि असङ्गता भवेत्. (श्रीकृष्णलीलास्वपि मानवीयभावानां चरित्राणाम् अनुवादएव परस्तात् सर्वं कृष्णकृतं ब्राह्मी लीलैव न लोककथा इति बाधो अत्रापि

दृश्यते ).

**के. ई. देवनाथन् :** प्रीति: किमर्थम् ? ...

**विन्ध्येश्वरीप्रसाद :** ... तर्हि श्रुतिव्याकोपोऽपि भवेत्. ''**आत्मनस्तु कामाय सर्वं प्रियं भवति**''.

**के. ई. देवनाथन् :** प्रीति: तावत् व्यक्तिद्वयम् अपेक्षते ...

**विन्ध्येश्वरीप्रसाद :** प्रीतिस्तु यदा भगवान् द्वितीयत्वेन गृह्यते तदा आत्मीयो भवितुम् अर्हति.

**के. ई. देवनाथन् :** सा सगुणदशा. प्रीति: व्यक्तिद्वयम् अपेक्ष्यते.

**विन्ध्येश्वरीप्रसाद :** तर्हि ''**आत्मनस्तु कामाय सर्वं प्रियं भवति**'' इत्यत्र का स्थिति: स्यात्.

**के. ई. देवनाथन् :** ''**आत्मनस्तु कामाय**'' इत्यत्र आत्मन: प्रीते: सङ्कल्प: इति वयं व्याख्यानं कुर्म:.

**वशिष्ठनारायण झा :** देवनाथन् महाभागा: ! आवरणशक्ति: स्वतन्त्रा वा ?

**के. ई. देवनाथन् :** नास्ति.

**वशिष्ठनारायण झा :** किमपि अपेक्ष्यते कार्यार्थं न वा ?

**के. ई. देवनाथन् :** अपेक्ष्यते.

**वशिष्ठनारायण झा :** मलशक्ति: तस्या: शक्ते: उपकारिणी भवतु. का क्षति: ?

**के. ई. देवनाथन् :** अभिप्रायस्तु एवं यद् एकैव शक्त्या उभयं भवति चेत् अन्या शक्ति: किमर्थं स्वीकरणीयम् ?

**विन्ध्येश्वरीप्रसाद :** सर्वम् एकैव मायाकर्म भवितुम् अर्हति. सर्वमपि भवति.

**के. ई. देवनाथन् :** न भवति. आवरणशक्त्या प्रथमत: आवृतं भवति चेदेव माया स्वकार्यं करिष्यति. तथा किल अद्वैतिनां प्रक्रिया. न हि आवृतं भवति ब्रह्म तर्हि कार्यं कथं प्रवर्तते ? ब्रह्मणि आच्छादिते किल ...

**पारसनाथ द्विवेदी :** आवरणकर्मणि मल: उपयोगि:.

**के. ई. देवनाथन् :** तै: तथा न उक्तम्. तै: उक्तम् यत् मल: इति काचित् शक्ति:. सा शक्ति: स्वोत्पादिकया वासनया मनसि रजतविकल्पं जनयति. रजतविकल्पे जनिते आवरणशक्ति:

शुक्तिम् आवारयति ...

**विन्ध्येश्वरीप्रसाद :** यथा मया निवेदितम् आसीत्, कस्यचिद् मनसि भुजङ्गः वर्तते, कस्यचिन् मनसि धारा माला वा वर्तते इति मलशक्तिरेव अत्र कारणम्.

**प्रह्लादाचार :** भवद्भिः मलशक्तिः आवरणशक्तिः विक्षेपशक्तिः इति शक्तित्रयम् अङ्गीकृतम्. मया एवम् अवगतम्. मलशक्तिः मनसि रजतरूपं विकल्पं जनयति. अपि च शुक्तौ भासमानस्य रजतस्य अनिर्वचनीयत्वं च अङ्गीकृतम्. एवञ्च अनिर्वचनीयरजतविषयकविकल्पं जनयति इयं मलशक्तिः इति अभिप्रायः मया ज्ञायते. भवद्भिः प्रबन्धे विकल्पस्वरूपविषये योगसूत्रमपि उदाहृतम् "**शब्दज्ञानानुपातिः वस्तुशून्यो विकल्पः**" इति. एवञ्च मनसः विकल्पाख्या वृत्तिः कदा भवति? वस्तुनः शून्यत्वे सति. वस्तुनः शून्यत्वं नाम अत्यन्तासत्वम्. इदानीं भवद्भिः रजतस्य अनिर्वचनीयत्वम् अङ्गीकृतम्. अनिर्वचनीयविषयिणि विकल्पाख्या वृत्तिः कुत्राऽपि योगसूत्रे न प्रतिपादिता वर्तते. एवञ्च अयं विकल्पः कथं स्यात्? वस्तुनः शून्यत्वे विकल्पः स्यात्. वस्तुनः सदसद्विलक्षणत्वे सति विकल्पाख्या वृत्तिः कथं जायते? अपि च ख्यातिस्वरूपविषये वस्तुनः स्वभावः कीदृशः? भ्रान्तौ प्रतिभासमानस्य स्वभावः कीदृशः? तद्विषयकज्ञानं किं स्वरूपम्? तत्राऽपि किमपि वैलक्षण्यं सूचयितुं शक्यते चेत् तदानीं वैशिष्ट्यं वक्तुं शक्यते. अनिर्वचनीयख्यातौ प्रतिभासमानस्य वस्तुनः अनिर्वचनीयत्वं, तद्वियषकं ज्ञानं च साक्षिरूपम् इति ज्ञानस्य विषयस्य च किमपि वैलक्षण्यम् इतरदर्शनापेक्षया प्रतिपाद्यते. भवद्भिस्तु प्रतिभासमानस्य वस्तुनः अनिर्वचनीयत्वम् उक्तम्. ज्ञानस्य च विकल्पस्वरूपत्वम् उक्तम्. विकल्पस्य अत्यन्तासद्विषयकत्वमेव अनिर्वचनीयविषयकत्वम् कुत्राऽपि न अङ्गीक्रियते. अपि च अत्र प्रतिभासमास्य रजतस्य अनिर्वचनीयत्वाङ्गीकारे

प्रातिभासिकसत्ता अङ्गीकृता भवति. प्रातिभासिकविषयकत्वं तद् हि ज्ञानं अद्वैतसिद्धान्तरीत्या साक्षिरूपं वा भवेत् अथवा कथञ्चित् चाक्षुषं वा भवद्भिः उपपादयितुं प्रयत्नः करणीयः. एतत् सर्वं विहाय मनोविकल्परूपत्वं कथं भवति? एतेषु विषयेषु भवतां स्पष्टीकरणम् अपेक्ष्यते.

**विन्ध्येश्वरीप्रसाद :** भानदृष्ट्या अनिर्वचनीयत्वम्. परन्तु यद् वस्तु ख्यायते सः विकल्पः. यथा अन्यस्य ख्यानं भवति तथा...

**पारसनाथ द्विवेदी :** योगसूत्रे ...

**विन्ध्येश्वरीप्रसाद :** योगसूत्रेऽपि अनिर्वचनीयत्वम् आयाति. यथा भाष्ये...

**प्रह्लादाचार :** तत्र हि स्पष्टम् उक्तं, वस्तुशून्यो विकल्पः.

**विन्ध्येश्वरीप्रसाद :** **"सच न प्रमाणोपारोही न विपर्ययोपारोही"** इति व्यासभाष्ये. प्रमाणोपारोही नास्ति. विपर्ययोऽपि नास्ति. तर्हि उभयतो भ्रष्टत्वाद् अनिर्वचनीयत्वम् आयात्येव. तथापि सविकल्पः न अभिप्रयते. एतत्तु प्रसङ्गेन व्याख्यातः. अस्माकं विकल्पः भागवते अन्यएव.

**के. ई. देवनाथन् :** भवद्भिः 'विकल्प'शब्दस्य बहवः अर्थाः निरूपिताः.

**विन्ध्येश्वरीप्रसाद :** भगवानेव करोति. अहं न करोमि.

**के. ई. देवनाथन् :** व्याख्यातॄणाम् श्रीधरस्वामिनः अनन्तरं सर्वेषाम् अभिप्रायः लिखिता भवति. सर्वेऽपि 'विकल्प'शब्दस्य भेदः इत्येव व्याख्यानं कुर्वन्ति. तर्हि अस्य कस्य कः सम्बन्धः.

**विन्ध्येश्वरीप्रसाद :** भेदः इति. द्विविधकल्पनापरएव भेदः. कल्पनायाः विना कथं भेदः? अद्वये ब्रह्मणि भेदस्य कल्पना यदि न स्यात् तर्हि भेदः कथं स्यात्? द्विविधा कल्पनैव भेदः... नामान्तरमात्रम्.

**प्रह्लादाचार :** भागवतपरिशीलने मनः सङ्कल्पात्मकं विकल्पात्मकम् इत्यादि उच्यते. सङ्कल्पात्मकं मनः इति यदा कथ्यते तदानीं निश्चयरूपत्वं, विकल्पात्मकं यदा उच्यते तदानीं संशयरूपत्वं भवति.

**विन्ध्येश्वरीप्रसाद :** निश्चयत्वं बुद्धेः कार्यम्. सङ्कल्पो अत्र विकल्पस्यापि उपलक्षकः. सङ्कल्पविकल्पात्मकं मनः इत्यत्र "अहं गच्छामि"इति सङ्कल्पात् "न वा गच्छामि"इति विकल्पः. किन्तु "गच्छाम्येव"इति बुद्धेः व्यवसायः. सएव अध्यवसायः.

**के. ई. देवनाथन् :** अध्यवसायः.

**सुश्री मङ्गला :** You are saying that Bhrānti or Khyāti is because of Avidyā or Saṁskāra, in general. Or it may be put in the words of Vedānt, it is because of Mala-śakti or Āvaraṇ-śakti. Now, my question is that this may be with reference to subjective individual one. It can not be with reference to more then one persons simultaneously having the same Mala-śakti or Āvaraṇ-śkti. Or the differential individuals will be having differential Mala-śakti and Āvaraṇa-śakti. If this is the case, why we, when we are on the station, find the illusion that tracks are at the end meet each other. Similarly, we experience mirage. So there is on the one hand subjectivity and on the other hand objectivity at a certain time or at a particular place or with reference to certain issues. Then how can we say that our Avidyā is the same?

**प्रह्लादाचार :** तया महाभागया यः प्रश्नः समुद्भावितः सः एवम् अस्ति. भवद्भिः मलशक्तिः काचन अङ्गीकृता. तया कश्चिद् विद्यमानां रज्जुं सर्पत्वेन गृह्णाति. कुतः ? तस्य मलशक्तिः

अन्यादृशी वर्तते. एवं अन्यः कश्चन तामेव रज्जुं मालात्वेन अवगच्छति. एवं रीत्या संस्काराः भिन्नाः भवन्ति चेद् भिन्नाः भ्रमाः उत्पद्यन्ते. परन्तु एवमेव सर्वत्र न भवति. बहूनाम् अथवा सर्वेषामपि स्थलविशेषे सन्निविशेषविशेषे विद्यमानानाम् एकविधा भ्रान्तिः जायते. यथा मरुमरीचिका-भ्रान्तिः. स्थलविशेषे विद्यमानां सर्वेषामपि मानवानां दूरे मरुं दृष्ट्वा मरीचिकाबुद्धिः जायते. तत्र संस्कारशक्तिः विभिन्नाः वर्तन्ते.

**के. ई. देवनाथन् :** मनसो भेदः.

**विन्ध्येश्वरीप्रसाद :** तथापि मनसि रागद्वेशादिकं समानएव.

**प्रह्लादाचार :** भ्रमः एकविधः.

**के. ई. देवनाथन् :** तथापि मनसो भेदात् मलभेदः वक्तव्यएव.

**यज्ञेश्वर शास्त्री :** सर्वैरपि मरुमरीचिका दृश्यते. तत्र मलशक्तिः एका वा भिन्ना वा ? अयं प्रश्नः.

**पारसनाथ द्विवेदी :** मलशक्तिः उच्यतां 'मलः' 'कषाय'पदवाच्यो धर्माधर्माख्यः क्वचित् संस्कारविशेषः. प्रतिपुरुषं भिन्नम्. तत्रापि यो भ्रमः स एकएव नास्ति. भवतु प्रतीतितः एकविधम्. परन्तु प्रतिपुरुषं भिन्नं-भिन्नम्. तत्रापि कस्यचिद् बाधो भवति कस्यचिद् बाधो न भवति. भ्रमरहितेन पुरुषेण शुक्तिः दृश्यते. तत्रैव भ्रान्तेन पुरुषेण रजतं दृश्यते. अतः प्रतिपुरुषम् अविद्याभेदः प्रतिपुरुषं मलभेदः इति अवगन्तव्यम्. अन्यथा सादृश्यं भवति, भवतु चेत् किन्तु एतस्य अर्थः एवं न भवति यत् दशविधानां पुरुषानां कृते एकमेव रजतं प्रतीयते इति न अयं सिद्धान्तः. वाचस्पतिमिश्राणां मते प्रतिपुरुषं प्रपञ्चभेदः. सादृश्यादेव प्रत्यभिज्ञानं जायते. यो अयं घटो मया दृष्टः सएव घटः तेनापि दृष्टः इति. प्रत्यभिज्ञानभ्रमः सादृश्यादेव जायते किन्तु प्रतिपुरुषं प्रतिजीवम् अविद्याभेदः, अविद्याभेदात् प्रपञ्चभेदः इति जीवाश्रिताविद्या

इति पक्षे वाचस्पतिमिश्रैः उपपादितम्. अतो भ्रमः एकविध नास्ति. प्रतिपुरुषं भिन्नम् अस्ति.

सुश्री मङ्गला : If that is the case then we are dealing with Khyativāda, because we are interested in eradicating or totally giving up Khyāti and getting the knowledge of the ultimate truth. Now, if you are saying that there are various causes with reference to various types of illusions of each individuals Malāvaraṇa-śakti of each one of us will different, Khyāti is different and the cognition is different then why we are interested also having the same type of knowledge with reference to ultimate truth? It will not be possible. So, there will not be possibility of having the unity of the ultimate truth i.e. knowledge.

प्रह्लादाचार : Madame! One thing I want to say here. Suppose there is a Rajju and different people are cognizing the same Rajju in a different manner, but suppose the reality of the object is cognized, then though the illusions are different, all those illusions are removed by the same cognition. See, the illusory cognitions are quite different here. One is cognizing it as a snake and another is cognizing it as a garland. But if all those people cognize it later as Rajju only, then

that one cognition can remove all the different types of illusory cognition is quite possible.

सुश्री मङ्गला : Yes. But now I want one more clarification that on the one hand all the philosophical traditions of Indian origin, specially Brāhmaṇical traditions, advocate that causality is the basis of both knowledge as well as illusion. If this is the case and we are saying that when there is illusion, it is because of Avidyā. And when that Avidyā is removed there will be proper knowledge. And when we are having different kinds of illusions with reference to each individual, so our misconception or misperception or wrong apprehension or erroneous knowledge or whatever it may be will be different to each individual. And the cause is the same, Avidyā. Now, if you are saying that it is the cause which is same, the same cause also be applicable with reference to ultimate truth or the knowledge of ultimate reality. Isn't it? Now, you are saying that knowledge of all individuals of the ultimate reality must be the same, there is no variation. It is Brahma. Now if that is the case, there will be also differential causes with reference to each one of us when we are having proper cognition just as with reference to

illusion it is different. It must be also different, otherwise it must be the same. What you will hold there?

प्रह्लादाचार : You mean there are different truths?

सुश्री मङ्गला : Either you have to advocate oneness or you have to advocate ...

वशिष्ठनारायण झा : So the Brahma known by me is different from the Brahman known by you.

बलिराम शुक्ल : Yes, different.

सुश्री मङ्गला : ''एकोऽहम्''. Ultimately it will not be... not with reference to Prāpañcika world but not with reference to Paramārtha sat.

प्रह्लादाचार : The problem is : If you examin the example of Rajju-Sarpa the reality is one. There is Rajju only. For one it is Rajju for others it is something else, it is not the case. What is super-imposed may be different. Jagat is super-imposed. Similarly, what is super-imposed on Rajju may be different form person to person. One is super-imposing snake, another garland and so on. But, the reality is one. It is Rajju only. Though the illusions are quite different, all those illusory cognitions are removed by the one cognition.

वशिष्ठनारायण झा : No the question is that the object of those illusory cognitions is one or many.

प्रह्लादाचार : May be. What does she mean by the term

'object' here. Not Adhiṣṭhāna.

**के. ई. देवनाथन् :** Locus.

**प्रह्लादाचार :** That locus is one and the same.

**सुश्री मङ्गला :** It could be many. For example, I may have an illusion of rope, you may have of wire, third may have of leives which are coming down on the branch of a tree. In each case it may be illusion of a snake. The same illusion namely snake but the kinds of reasons behind the illusion are different.

**प्रह्लादाचार :** It is possible. That is not the point here. The point is that there is only one reality and that one reality is cognized in a different manner to different people. Then how these different illusory cognitions are removed by the cognition of the reality ?

**पारसनाथ द्विवेदी :** भवद्भिः पत्रे लिखितम् अस्ति ''**अत्र व्यामोहिकया मायया सदृशादृष्टोद्बोधसामग्रीप्राबल्यस्यैव सहकारित्वात् प्रथमं शुक्तिरूपबोधस्य निराकरणं तदनु तद्भिन्नया... या रजताद्युत्पत्ति... कथम् एकैव मायया उभयस्यापि निर्वाहः कर्तुं आवरण-विक्षेपशक्तिद्वयः**'' तत्रापि व्यामोहिका माया एकैव तैः अङ्गीक्रियते. न मायाद्वयम्. व्यामोहिकामायायाः शक्तिद्वयम्. एका शुक्तिंम् अवरोधयति, आवृणोति विक्षेपशक्त्या च बुद्धिं व्यामोहयति.

**विन्ध्येश्वरीप्रसाद :** सत्यम्.



# अभिनवान्यथाख्यातिस्वरूपम्

प्रो. श्री डी. प्रह्लादाचार

## द्वैतवेदान्ताभिमतान्यथाख्यातिस्वरूपम् :

( विद्युत्प्रवाहव्यवधानवशात् प्रारम्भिको भागः टेपरिकॉर्डरे न मुद्रितः इति त्रुटितः ).

'अन्यथाख्यातिः'नाम वस्तुनो अन्यथा प्रतीतिः. ''इदं रजतम्'' इति भ्रमे पुरोवर्तिन्याः शुक्तेः भिन्नप्रकारेण रजतत्वेन प्रकारेण प्रतीतिः जायते इति हेतोः ''इदं रजतम्'' इति ज्ञानम् 'अन्यथाख्यातिः' इति कथ्यते. अत्र द्वैतवेदान्तेतु इयमेव रीतिः अङ्गीक्रियते. पुरो विद्यमानः पदार्थः शुक्तिः तत्र अविद्यमानेन रजतत्वेन प्रकारेण तस्य ग्रहणं वर्तते इति अङ्गीक्रियते. तार्किकमतवैलक्षण्यन्तु अत्र भवति. तार्किकैः तत्र भासमानं रजतं रजतत्वं वा सदेव. देशान्तरे विद्यमानं रजतम् अत्र भाति. आपणस्थमेव रजतं दोषवशाद् अत्र प्रतिभाति इति वदन्ति तार्किकाः. देशान्तरे विद्यमानस्य अत्र भानं कथम् ? इन्द्रियसन्निकर्षो नास्ति चेत् कथम् इदं ज्ञानं देशान्तरस्थरजतस्य उत्पद्यते ? इदमपि ज्ञानं चाक्षुषप्रत्यक्षं खलु इति प्रश्ने ते वदन्ति, लौकिकसन्निकर्षेण इदं ज्ञानं न जायते किन्तु अलौकिकेन सन्निकर्षेण. सन्निकर्षो हि द्विविधो लौकिको अलौकिकः च इति. संयुक्तसंयोगसमवायादिसन्निकर्षवशाद् जायमानं ज्ञानं लौकिकसन्निकर्षजं प्रत्यक्षं किन्तु ज्ञानलक्षणप्रत्यासत्त्या जायमानं ज्ञानम् अलौकिकसन्निकर्षजन्यं भवति. अतः प्रत्यक्षत्वम् उपपद्यते, पुरतो अविद्यमानत्वेऽपि विषयस्य तस्य सत्त्वञ्च युज्यते. असतः कुत्रापि ज्ञानं न भवति. अत्यन्तासतः पदार्थस्य चाक्षुषं ज्ञानं कथं वा स्यात् इति हेतोः. एवं रीत्या ते स्वकीयम् अन्यथाख्यातिस्वरूपं विवृण्वन्ति.

**भ्रमभातस्य न भ्रमस्थले सत्त्वं, नान्यदेशसत्त्वं, नानिर्वचनीयत्वं वा :**

द्वैतवेदान्तेतु अत्र भासमानं रजतं देशान्तरे विद्यमानम् अत्र प्रतिभाति इत्यत्र किमपि प्रमाणं नास्ति. यतोहि ''अत्रैव मया रजतं दृष्टम्'' ''अत्रैव मया रजतं दृश्यते इदानीम्'' इति अबाधितेन अनुभवेन अत्र भासमानस्य रजतस्य देशान्तरे सत्त्वे प्रमाणाभावात् तथा न अङ्गीक्रियते. किन्तु एतद्देशकालसम्बन्धितया रजतभानम् अस्तीति तादृशस्यैव रजतस्य भानम् अङ्गीक्रियते. एतद्देशकालसम्बन्धिरजतम् अत्यन्तासद् भवति. 'अत्यन्तासत्त्वं'-नाम सार्वदेशिकत्रैकालिकनिषेधप्रतियोगित्वम्. इदमेव अत्यन्तासत्त्वं सर्वैः स्वीक्रियते. त्रिष्वपि कालेषु एतद्देशकालसम्बन्धित्वं रजतस्य न अस्ति. यदा ज्ञानं जायते, ज्ञानसत्तादशायाम् एतद्देशकालसम्बन्धित्वं रजतस्य न अस्ति. इदानीं दृश्यमानस्य रजतस्य पूर्वकालदेशसम्बन्धित्वं वा भविष्यत्कालदेशसम्बन्धित्वं वा सुतरां नास्तीति सार्वकालिक-सार्वदेशिकनिषेधप्रतियोगित्वरूपम् अत्यन्तासत्त्वं भासमाने रजते सर्वथा अङ्गीकरणीयम्. अतो अत्यन्तासदेव रजतं भाति. किञ्च, बाधज्ञाने जाते ''अत्यन्तासदेव रजतं मया दृष्टम्'' ''अत्यन्तासदेव रजतं प्रत्यभाद्'' ''असदेव रजतं प्रत्यभाद्'' इत्येवं बाधकालीनानुभवो अस्ति. ''असदेव रजतं प्रत्यभाद्'' इति यो अनुभवो वर्तते तेनापि सिद्ध्यति भ्रमकाले भासमानस्य रजतस्य अत्यन्तासत्त्वम्. तत्र अनिर्वचनीयत्वं वा सत्त्वं वा सर्वथा न अङ्गीक्रियते. तत्र एते केचन प्रश्नाः क्रियन्ते. यदि अत्यन्तासतः प्रतीतिः अङ्गीक्रियते इयं प्रतीतिः कीदृशी? इयं प्रतीतिः चाक्षुषं ज्ञानम् इति अत्र विप्रतिपत्तिः नास्ति. अत्यन्तासतः चाक्षुषं ज्ञानं भवत्सिद्धान्ते अङ्गीकृतं स्यात्. चाक्षुषं हि ज्ञानं तद् भवति यत् चक्षुरिन्द्रियसन्निकर्षवशाद् जायते. अत्रच अत्यन्तासत्त्वस्य स्वयमेव अङ्गीकारः. तत्र विषयो न अस्ति. विषयेण सह इन्द्रियसन्निकर्षो अत्यन्तम् असम्भावितः. अतः इन्द्रियसन्निकर्षाभावेऽपि जायमानम् इदं ज्ञानं चाक्षुषं प्रत्यक्षम् इति कथं वा वक्तुं शक्यते? अयम् एकः प्रश्नः. अन्यश्च प्रश्नः, अत्यन्तासतो ज्ञानं यदि अङ्गीक्रियते, असत्ख्यातिः अङ्गीकृता स्यात्. बौद्धानां हि अयं सिद्धान्तो यद् असतो भानं भवति इति. एवं बौद्धमतानुसारेण भवद्भिरपि असत्ख्यातिः अङ्गीकृता भवति खलु?

**बौद्धमताभिमताद् असत्ख्यातिवादात् वैलक्षण्यम् :**

एतत् कथं युज्यते ? इति प्रधानं प्रश्नद्वयम् अत्र भवति. द्वैतवेदान्तिनान्तु अयम् अभिप्रायो : यद्यपि अस्ति बौद्धमतइव अस्मन्मतेऽपि अत्यन्तासतो भानं परन्तु प्रधानं हि इदं वैलक्षण्यं वर्तते यद् बौद्धमते अधिष्ठानस्यापि अत्यन्तासत्त्वं स्वीक्रियते. अधिष्ठानभूतं सत् नैव अङ्गीक्रियते. द्वैतसिद्धान्तेतु अधिष्ठानं सत् सर्वथा आवश्यकम्. तदुपरागेण असतो भानम् अङ्गीक्रियते. कस्यापि वस्तुनो अभावे असतो ज्ञानं न जायते. अतो अत्यन्तासतो भानम् अङ्गीक्रियते चेद् अधिष्ठानस्य सत्ता अपेक्ष्यते. अधिष्ठानं किमपि सद् आवश्यकम् तदानीमेव दोषवशाद् अपिच संस्कारवशात् च — संस्कारोऽपि कारणं भवति दोषोऽपि कारणं भवति, अधिष्ठानमपि कारणं भवति ततो अत्यन्तासतो भानं जायते. इन्द्रियसन्निकर्षाभावेऽपि अत्यन्तासतः प्रत्यक्षं कथं जायते ? इति प्रश्नस्य समाधानम् इदं भवति : इन्द्रियसन्निकर्षो अधिष्ठाने वर्तते. अधिष्ठानन्तु सत्यम्. शुक्तिः अधिष्ठानं भवति. शुक्तौ इन्द्रियसन्निकर्षो वर्तते. रजतस्य इन्द्रियसन्निकर्षो नास्ति किन्तु दोषस्य सहकारिकारणस्य विद्यमानत्वात् सहकारिणः तादृशी शक्तिः भवति यत् कारणे कामपि शक्तिम् आदधाति. सहकारिणः सामर्थ्यं सर्वेष्वपि शास्त्रेषु सर्वैः दार्शनिकैः अङ्गीकृतं वर्तते. कारणस्य सहजसामर्थ्यं नास्ति चेदपि सहकारिकारणं सामर्थ्यविशेषं जनयति इत्येतत् सर्वैः दार्शनिकैः अङ्गीकृतम् अस्ति. तदनुसारेण इन्द्रियदोषस्य सहकारिणो विद्यमानत्वात् तद्वशाद् इन्द्रियाणाम् इदं सामर्थ्यं भवति यद् अत्यन्तासदपि प्रत्यक्षीक्रियते. इन्द्रियसन्निकर्षस्तु नास्ति. इन्द्रियसन्निकर्षाभावेऽपि ज्ञानं जायते चेत् तर्हि चक्षुषी निमील्यापि कश्चन रजतं साक्षात् कुर्यात् इतितु न वक्तव्यम्. यतोहि अधिष्ठानेन्द्रियसन्निकर्षस्तु आवश्यकः. इन्द्रियाधिष्ठानसन्निकर्षाभावे प्रत्यक्षं नैव जायते. अतो अधिष्ठाने इन्द्रियसन्निकर्षः आवश्यकः. रजतग्रहणेतु दोषः कारणम्. एवम् अत्यन्तासतोऽपि ज्ञानम् अङ्गीकृतम् इति.

**अत्यन्तासतोरपि भानं कुतो न सम्भवति ? :**

अत्र अत्यन्तासतो भानाङ्गीकारो यः कृतो तत्र अयंहि प्रधानः

प्रश्नो भवति. केचन एवमपि आक्षिपन्ति — अत्यन्तासतो भानम् अङ्गीक्रियते चेत् शशविषाणस्यापि भानं कुतो न स्यात्? वन्ध्यासुतस्य प्रत्यक्षं कुतो न जायते? गगनकुसुमस्य प्रत्यक्षं कुतो न जायते? अत्यन्तासतः प्रत्यक्षं यदि अङ्गीक्रियेत तर्हि असत्त्वेन सर्वैः अङ्गीकृतानाम् अन्येषामपि प्रत्यक्षं कुतो न स्यात्? इति.

इदम् अत्र अवगन्तव्यं : शशविषाणप्रत्यक्षं न जायत इति प्रतिज्ञातु केनापि न कर्तुं शक्यते. ''इदं शशविषाणम्'' इति प्रत्यक्षं जायते वा इति तेषां प्रश्नः स्यात्. तद्वदेव ''इदं शुक्तिरजतम्'' इति प्रत्यक्षं वा जायते भ्रान्तिकाले? भ्रान्तिकाले शुक्तिं दृष्ट्वा ''इदं शुक्तिरजतम्'' इति भ्रान्तिः न जायते किन्तु ''इदं रजतम्'' इति प्रत्यक्षं जायते. शुक्तौ आरोप्यमाणस्य रजतस्य ज्ञानं भवति. तद्वदेव ''शशे शृङ्गम् अस्ति'' इति ज्ञानं कस्यचन भवेत्. तत्र शशरूपे अधिष्ठाने शृङ्गस्य ज्ञानं नरेऽपि कस्मिंश्चन शृङ्गम् अस्ति इति ज्ञानं जायेत. कदा भवति? अधिष्ठानं तत्र भवेत्. इन्द्रियदोषः कस्यचन स्यात्. एवं संस्कारोऽपि स्यात्. एतानि सर्वाणि कारणानि वर्तन्ते चेत् शशं दृष्ट्वा ''अयं शृङ्गी'' इति ज्ञानम् उदीयात्. नैव उदेति इति न केनापि प्रतिज्ञातुं शक्यते. परन्तु ''इदं शशशृङ्गम्'' अथवा ''अयं वन्ध्यासुतः'' इत्यादिज्ञानं जायेताम् इति आरोपस्तु नैव कर्तव्यः. शुक्तिं दृष्ट्वापि ''इदं रजतम्'' इत्येव ज्ञानं जायते नतु ''इदं शुक्तिरजतम्'' इति ज्ञानम्. शुक्तौ आरोप्यमाणं रजतम् इति बाधानन्तरं हि अस्माभिः अवगम्यते. ततः पूर्वं रजतत्वमात्रेण वस्तुनो भानं भवति. एवञ्च वन्ध्यया सह कश्चन दृष्टः. ''अयं तस्याः सुतः'' इति ज्ञानं यज् जायते, तस्य सुतो न भवति. तस्याः सुतत्वेन अवगतः. तथा सति वन्ध्यासुतस्य ज्ञानं भवति. 'शुक्तिरजतज्ञानं'नाम शुक्तिसम्बद्धत्वेन रजतस्य ज्ञानम्. एवं वस्तुतो या वन्ध्या तत्सम्बन्धेन पुरुषविशेषस्य सुतत्वेन ज्ञानं वन्ध्यासुतज्ञानम्. एवं रीत्या सर्वत्रापि विवरणं कर्तुं शक्यते. अतो अत्यन्तासतो ज्ञानं भवति चेद् गगनकुसुमज्ञानं जायतां, शशशृङ्गज्ञानं जायताम् इत्यादि आपादनं यत् क्रियते तद् आपादने किमपि स्वारस्यं नास्ति

इत्येव एतस्मिन् सिद्धान्ते अङ्गीक्रियते.

अपिच अत्यन्तासतो ज्ञानं परोक्षज्ञानं नास्ति इति न केनापि वक्तुं शक्यम्. ''शशशृङ्गम् अस्ति'' इति केनचन उक्तं चेत् शशशृङ्गस्य असत्वं यो न जानाति तस्य पुरुषस्य एतद्वाक्यश्रवणेन शशशृङ्गास्तित्वज्ञानं जायते. ''गोशृङ्गम् अस्ति'' इति वाक्याद् यादृशं ज्ञानं जायते तादृशमेव ज्ञानं ''शशशृङ्गम् अस्ति'' इति वाक्यादपि जायते. तयो: वाक्ययो: ज्ञानजनकत्वं समानम् अस्माभि: अनुभूयते. ''शशशृङ्ग नास्ति'' इति य: प्रथममेव निश्चितवान् तं प्रति ''शशशृङ्गम् अस्ति'' इति वाक्यं ज्ञानं न जनयति. कुत: ? वाक्यार्थज्ञानं प्रति अयोग्यतानिश्चयाभावो वा योग्यताज्ञानं वा कारणं भवति. शशशृङ्ग नास्ति इति निश्चयो वर्तते पूर्वमेव तस्य पुरुषस्य योग्यताज्ञानं नास्ति. अयोग्यतानिश्चय: प्रतिबन्धको वर्तते. इति हेतो: ''शशशृङ्गम् अस्ति'' इति वाक्यात् तस्य पुरुषविशेषस्य शशशृङ्गास्तित्वज्ञानं न जायते. परन्तु य: शशशृङ्गस्य असत्त्वं न जानाति तं प्रति ''शशशृङ्गम् अस्ति'' इति वाक्यं उच्चार्यते चेत् तेन वाक्येन ''गोशृङ्गम् अस्ति'' इति वाक्यात् यथा ज्ञानं जायते ''शशशृङ्गम् अस्ति'' इति वाक्यादपि ज्ञानं जायतएव. तयो: ज्ञानयो: न मनागपि विशेष: केनापि अनुभूयते. तत्र वाक्यजन्यं परोक्षज्ञानं नास्ति इत्यत्र न किमपि प्रमाणम्. यद्यपि केचन वदन्ति अत्र यत् शाब्दं ज्ञानं यज् जायते वस्तुत: इदं न शाब्दज्ञानं किन्तु विकल्पाख्यावृत्ति: इति. योगसूत्रे **''शब्दज्ञानानुपाती वस्तुशून्यो विकल्प:''** (पात.यो.सू.१।९) इति उक्तम् इति वदन्ति. किन्तु द्वैतवेदान्ते विकल्पाख्या वृत्ति: सापि ज्ञानमेव इति उच्यते. तत्र ''अहम् इच्छामि'' इति मनस: कश्चन विकारो जायते. इच्छाख्यावृत्ति: विलक्षणा अनुभूयते. ''अहं जानामि'' ''अहम् इच्छामि'' वेदान्तमतेषु एतज्ज्ञानं हि अन्त:करणविकार: इति अङ्गीक्रियते. तत्र अन्त:करणविकारस्य किमपि वैलक्षण्यम् अनुभवसिद्धम् अस्ति. ''अहम् इच्छामि'' इत्यत्र यो अन्त:करणविकारो अनुभूयते तस्माद् विलक्षण: कश्चन विकारो ''अहं जानामि'' इत्यत्र अनुभूयते. अतएव इच्छा-ज्ञानयो: अन्त:करणवृत्तिविशेषत्वम् अङ्गीक्रियते तत्तु युक्तम्. परन्तु सत्यं रजतम्

इति दृष्ट्वा ''इदं रजतम्'' इति ज्ञानं जायते. शुक्तिं दृष्ट्वा ''इदं रजतम्'' इति यो अवगमो जायते अनयोः न कश्चिदपि विशेषो अनुभवसिद्धो वर्तते. एवम् अनुभवाभावेपि तयोः एकस्य ज्ञानत्वम् अपरस्य च ज्ञानभिन्नविकल्पाख्यवृत्तित्वं कुतो वा अङ्गीक्रियते तत्र प्रमाणं किमपि नास्ति. अतः तस्य ज्ञानत्वमेव नास्ति इति यद् उच्यते तत्र सम्मतिः नास्ति एतत्सिद्धान्ते. न केवलम् एतत् किन्तु असतो ज्ञानं नास्ति इतितु न केनापि वक्तुं शक्यते. सर्वैरपि दार्शनिकैः अत्यन्तासतो ज्ञानम् अवश्यम् अङ्गीकरणीयं भवति. अनिच्छुभिरपि तस्य ज्ञानम् अङ्गीकरणीयं भवति. अतो अत्यन्तासतो ज्ञानं नास्ति इति सिद्धान्तीकृत्य शुक्तिरजतज्ञानम् असद्विषयकज्ञानं न भवति इति वक्तुं न शक्यते इत्यपि एतन्मते प्रतिपाद्यते.

**नैयायिकमतविमर्शः :**

तत्र प्रथमं नैयायिकसिद्धान्तो : न्यायसिद्धान्ते शुक्तिं दृष्ट्वा यज् ज्ञानं जायते तत्र अधिष्ठानभूता शुक्तिः सत्या. तत्र विवादो नास्त्येव. तत्र भासमानं रजतमपि सदेव. देशान्तरे विद्यमानं प्रतिभाति अतः तत्रापि सत्त्वम् अङ्गीक्रियते. शुक्तिरजतत्वयोः यः संसर्गः प्रतिभाति सोऽपि संसर्गः सन्नेव. ततश्च सर्वेऽपि ज्ञानविषयाः सन्तः इति कृत्वा असतो ज्ञानं नास्ति इति नैयायिकाः वदन्ति. एवं तर्हि शुक्तिरजतसंसर्गाः इति समूहालम्बनात्मकस्य ज्ञानस्य ''इदं रजतम्'' इति ज्ञानस्य च को व्यत्यासः ? ''इदं रजतम्'' इति ज्ञानं यज् जायते तत्रापि शुक्तिः विषयः, रजतं विषयः, संसर्गो विषयः सर्वे विषयाः. शुक्ति - रजत - संसर्गाः इति अपरं समूहालम्बनात्मकं ज्ञानम्. अस्मिन्नपि ज्ञाने सर्वे विषयाः. एवञ्च विषयानां समानत्वेऽपि इदं ज्ञानम् अन्यादृशं, तज्ज्ञानम् अन्यादृशम् इत्यत्र न कापि उपपत्तिः. अतः संसर्गः सत्यः भाति इति उक्तौ तत्र किञ्चन वैलक्षण्यं प्रतिपादनीयम्. शुक्त्यनुयोगिकत्वेन रजतत्वप्रतियोगिकत्वेन भासमानः संसर्गः सन् वा असन् वा इति विचार्यताम्. यद्यपि रजतत्वसंसर्गो रजते विद्यमानः सन् परन्तु स संसर्गो रजतानुयोगिको रजतत्वप्रतियोगिकः संसर्गः. ''इदं रजतम्'' इति अत्र भासमानस्तु संसर्गो न हि सः. अत्र हि शुक्त्यनुयोगिकत्वं

रजतत्वप्रतियोगिकत्वं संसर्गे भासते. तत्र रजतत्वप्रतियोगिको यः संसर्गो वस्तुतो रजते वर्तते सएव अत्र शुक्तौ भाति इति वदेयुः परन्तु शुक्त्यनुयोगिकत्वेन सो भासते. शुक्त्यनुयोगिकत्वविशिष्टो रजतत्वप्रतियोगिकत्वविशिष्टः च यः संसर्गो भवति स च संसर्गो न रजते भासमानो रजतत्वसंसर्गः. अयं विशिष्टसंसर्गः अन्यएव स्वीकर्तव्यः. अस्यच अत्यन्तासत्त्वम् अवश्यं वक्तव्यम्.

प्राचीनास्तु नैयायिकाः संसर्गस्य असत्त्वं स्वयमेव वदन्ति. नव्यास्तु नैयायिकाः केचन एवं वदन्ति तत्र संसर्गो यो भासते सोऽपि सन् इति वस्तुतस्तु जरन्नैयायिकाः संसर्गस्य अत्यन्तासतः भानं स्वीकर्तुं शक्यते इति अङ्गीकृत्य प्रकारस्य विशेष्यस्य च सत्त्वम् अस्माभिः प्रतिपाद्यते इत्येव स्पष्टं वदन्ति. एवं मतद्वयं वर्तते. आस्तां तावत् परन्तु तत्र नैयायिकमतविशेषे संसर्गस्य अत्यन्तासतो भानं सर्वथा स्वीकृतम् अस्ति. संसर्गस्य अत्यन्तासतो भानं स्वीक्रियते चेत्, प्रकारेण किम् अपराद्धम्? प्रकारोऽपि अत्यन्तासन् भासतां नाम! अतो अत्यन्तासतो भानं नैयायिकैः स्वीकृतम्. नव्यनैयायिकैः तदपि न स्वीक्रियते इति उक्तिरपि न युक्ता. तत्र शुक्त्यनुयोगिकत्वविशिष्टो रजतत्वप्रतियोगिकत्वविशिष्टः च यः संसर्गः सो अत्र भासमानः सः अन्यत्र सन् इति सर्वथा न वक्तुं शक्यते. तस्माद् अत्यन्तासतो भानं नवीननैयायिकैः अङ्गीकरणीयम्.

**अनिर्वचनीयख्यातिवादविमर्शः :**

अनन्तरम् अद्वैतवेदान्तिभिः अनिर्वचनीयख्यातिः अङ्गीक्रियते. तत्र द्वैतिनो वदन्ति यद् अद्वैतिभिरपि अत्यन्तासतः ख्यातिः अवश्यम् अङ्गीकरणीया भवति. यदा ''इदं रजतम्'' इत्यत्र रजतं प्रतिभासते तत्र भासमानं हि रजतं, वस्तुतः प्रातिभासिकं तत्सिद्धान्ते; परन्तु भ्रमकाले ''इदं रजतं प्रातिभासिकम्'' इति अनुभवो न भवति. यदि भ्रान्तिकालेऽपि तथैव अनुभवः स्यात् तदा प्रवृत्तिः न स्यात्. अतः तस्मिन् काले ''इदं रजतं सद्'' इति वा ''इदं रजतम् अनिर्वचनीयम्'' इति वा ''व्यावहारिकम्'' इति वा तस्य प्रतीतिः अवश्यम् अङ्गीकरणीया. तत्र रजते यद् व्यावहारिकत्वं

सत्त्वं प्रतीयते तत् किं सद् अङ्गीक्रियते असद् अङ्गीक्रियते? इति प्रश्नो भवति. भासमानं हि रजतं प्रातिभासिकम्. भ्रमकाले यत् सत्त्वं भासते तत् सत्त्वं व्यावहारिकं चेत् रजतस्य व्यावहारिकत्वापत्तिः. अतः तत्र भासमानं सत्त्वं प्रातिभासिकम् इत्येव वक्तव्यम्. प्रातिभासिकं सत्त्वं यत् प्रतीयते तत् प्रातिभासिकत्वेन प्रतिभाति चेत् पुनः प्रवृत्तिः न स्यात्. अतः प्रातिभासिकत्वेन तस्याः प्रतीतिः नास्ति किन्तु तत्र भासमानं सत्त्वं वस्तुतो अत्यन्तासदेव भवति. 'अत्यन्तासत्त्वं' नाम सार्वकालिक - सार्वदेशिक - निषेधप्रतियोगित्वम्. रजते यत् सत्त्वं भासते तत् तादृशं भवति. तस्माद् अत्यन्तासदेव सत्त्वं रजते भासते इति अवश्यम् अङ्गीकरणीयम्. अतो अत्यन्तासतो भानाङ्गीकारे प्रवृत्तिरेव न स्याद् इति हेतोः तन्मतेऽपि अत्यन्तासतः भानम् अङ्गीकरणीयं भवति.

<u>सत्ख्यातिवादविमर्शः</u> :

विशिष्टाद्वैतसिद्धान्तेतु तैः सत्ख्यातिः अङ्गीकृता वर्तते. असतो भानम् न आवश्यकम् इति ते वदन्ति. शुक्तौ अल्पसङ्ख्याकाः रजतांशाः वर्तन्ते. अतो यदा अस्माकम् इन्द्रियदोषो नास्ति तदानीं ते अल्पांशाः नैव भान्ति किन्तु बह्वंशाः शुक्त्यंशाएव तदानीं भान्ति. अतः कदाचित् ''इयं शुक्तिः'' इति ज्ञानं कदाचित् ''इदं रजतम्'' इति ज्ञानम्. एवञ्च सतएव वस्तुनो भानं भवति इति तेषां सिद्धान्तः परन्तु द्वैतिनाम् अयं प्रश्नो : अल्पाः ते रजतांशाः किम् अल्पत्वेन भान्ति उत बहुत्वेन भान्ति? यदि अल्पत्वेन भानं भवति, तत्तु केनाऽपि अङ्गीकर्तुं न शक्यते. ''अल्पाः रजतांशाः अत्र वर्तन्ते'' इति भानं कस्यापि नास्ति. यथा सत्यरजतं दृष्ट्वा यथा रजतांशाः भान्ति तथैव अत्रापि भानं भवति. एवञ्च बाहुल्येनैव रजतांशानां भानम् अङ्गीकरणीयम्. बाहुल्यन्तु न अङ्गीकृतम्. तत्र अल्पाः अंशाः सन्ति इत्येव अङ्गीकृतम् अस्ति. एवञ्च बहुत्वस्य अत्यन्तासतो भानं तैः अङ्गीक्रियते. अत्यन्तासतो भानं न अङ्गीक्रियते चेत् कथं प्रवृत्तिः भवति? अतो अत्यन्तासतो भानं नास्ति इति केनापि वक्तुं न शक्यते.

<u>अन्यख्यातिवादविमर्शः</u> :

परमात्मनो 'माया'ख्यया शक्त्या रजताकारा वृत्तिः बहिः निक्षिप्ता भवति. इदानीं सत्यरजतस्य दर्शने यादृशो अनुभवो अत्रापि तादृशएव अनुभवो वर्तते. विषयतैव रजतम् इति कथं वक्तुं शक्यते? विषयता किं चक्षुःगोचरो भवति? तत्र रजतस्य कश्चन आकारः किञ्चन रूपं सर्वं दृश्यते. एतत् सर्वं चक्षुषा साक्षात्क्रियते. एतत् सर्वं केवलं वृत्तिरूपम् इति वक्तुं नैव शक्येत. वृत्तेः अचाक्षुषत्वात्. एवञ्च चाक्षुषः कश्चन पदार्थो वर्तते. सच पदार्थः किंस्वभावः इति प्रश्नः. तस्यच सत्तातु न अङ्गीक्रियते इति मन्ये. अत्यन्तासत्त्वम् अङ्गीकृत्यैव निर्वाहः करणीयः.

<u>उपसंहारः</u> :

एवं रीत्या अत्यन्तासतो भानं सर्वथा अङ्गीकर्तव्यम्. ''असदेव रजतं प्रत्यभाद्'' इति अबाधितात् सार्वजनीनाद् अनुभवात् भासमानस्य रजतस्य अत्यन्तासत्त्वम् अङ्गीकरणीयम्.

--------

## संगोष्ठ्युत्तरलेखनम्

**गो.श्या.म.**

सुहृद्वर्याणां श्रीमतां प्रह्लादाचारमहोदयानाम् अलिखिते मौखिके अस्मिन् वक्तव्ये द्वैतवेदान्ताभिमतायाः ख्यातेः स्वरूपविवेचनं तदुपपत्तयः च तुलनात्मकम् अन्यमतालोचनं च तादृगप्रयाससिद्धं स्फीतं च निरूपितमस्ति यस्य श्रवणमात्रेण झटिति अभिनवान्यथाख्यातिवादो सर्वथा बुद्ध्यारूढो भवतीति तदर्थं निजां बहुकृतज्ञतां विज्ञापयन्नेव अन्यख्यातिविमर्शतया विद्वदग्रगण्यानां तेषां वक्तव्यविषये कामपि स्पष्टतां कर्तुं समीहे.

तत्र यदेभिः **''इदानीं सत्यरजतस्य दर्शने यादृशो अनुभवो, अत्रापि तादृशएव अनुभवो वर्तते''** इति यद् उक्तं तत्र एतस्मिन् विषये अन्यख्यातिवादम् अवलम्ब्य काचित् स्पष्टता एवं तावद् भवितुम् अर्हति यत् सत्यरजतस्थले

रजतप्रतीतिः तावद् विषयजन्या इतितु ''**निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षं... स्मृत्यनुवादयोः न अप्रामाण्यं यथार्थत्वानुभवात्... न प्रमासाधनं प्रमाणं, ज्ञानव्यतिरिक्तायां प्रमायां प्रमाणाभावात्. नच** अज्ञातपरिच्छित्तिरेव **प्रमा** इत्यत्र **किञ्चिद् मानं, याथार्थ्यमेव प्रामाण्यम् इति** अङ्गीकाराद्'' (प्रमा.लक्ष.) इति श्रीमदानन्दतीर्थभगवत्पादानां निरूपणात् सिध्यत्येव. तेन भ्रमज्ञानं तावद् द्वैतवेदान्तेऽपि न यथार्थज्ञानम् इत्यत्र न कश्चन विवादः. भ्रमभातविषयणां सत्त्वं वा असत्त्वं वा इति एकः प्रश्नो अवशिष्यते. तत्र चाक्षुषत्वासत्त्वेतु नैव समकालिके एकानुभूतिगोचरे वा, यतोहि असत्त्वं तावद् न भ्रमकालिकानुभवगोचरम् अन्यथा रजतस्य तत्र अविद्यमानत्वेन तज्ज्ञानस्य प्रमात्वापत्तेः. ततोहि ''इदं रजतम्'' इत्येवमादिषु निरुपाधिकेषु भ्रमेषु चाक्षुषत्वन्तु आरोप्यमाणे विषये न भ्रमकालावच्छेदेनैव प्रतीयते तदसत्त्वन्तु पुनः उत्तरत्र बाधज्ञानेनैव निश्चीयते. तस्माद् यदा चाक्षुषत्वं न तदा असत्त्वनिश्चयः यदाच पुनः असत्त्वनिश्चयः न तदा चाक्षुषत्वम्. तेन बाधोत्तरनिश्चितेन असत्त्वेन हि तथाविधभानस्य भ्रमत्वसिद्धिः. तदेतद् असत्त्वञ्च न रजतस्य स्वभावः किन्तु बाधज्ञाने तद्देश-तत्काल-विशिष्टे रजते भासमानं बौद्धमेव असत्त्वम्. तेन सत्यरजतस्थलेतु निर्दोषार्थेन्द्रियसन्निकर्षजनिता नाम रजतसत्त्वजनिता रजतचाक्षुषत्वप्रतीतिः भवति. भ्रमस्थलेतु इन्द्रियदोषाणां बुद्धिदोषाणां विषयदोषाणामिव अन्येषामपि उपाधिरूपाणां दोषाणां वा हेतुतया तज्जनिता अरजतदेशकालयोः रजतसत्त्वप्रतीतिः. तस्मात् ''सत्यरजतस्थले यादृशो अनुभवो तादृशो भ्रमस्थलेऽपि'' इत्यस्मिन् वाक्ये यादृग्घेतुजनितो अनुभवः सत्यरजतस्थले तादृग्घेतुजनितो भ्रमस्थलेऽपि इति अर्थस्तु स्वीकर्तुं न शक्यते. अथ यादृगैन्द्रियत्वप्रकारको अनुभवः सत्यरजतस्थले तादृगैन्द्रियत्वप्रकारस्यतु अनुभवस्य स्वविषयस्वरूपनिर्धारकत्वे रजतस्य सत्त्वमेव भवेत् सर्वासामपि प्रमाणां स्वतःप्रामाण्याभ्युपगमात्. बाधोज्ञानोत्तरं परतः प्रतिभातं रजतज्ञानस्य अप्रमाण्यन्तु तद्देशकालोपहितरजतासत्त्वबोधकमपि न तदनुपहितरजतासत्त्वबोधनाय अलम्. तस्मात् निर्दोषेन्द्रियसन्निकर्षेण असतो रजजस्य चाक्षुषप्रतिभासो न सम्भवतीति हेतोः इन्द्रियार्थसंनिकर्षव्यतिरिक्तहेत्वन्वेषणे क्रियमाणे रजतस्य असत्त्वं न भ्रमोत्पादकहेतुतया किमुत भ्रमत्वज्ञापकहेतुतयैव पुरतो अवतरति. एषा हि निरुपाधिकभ्रमव्यवस्था सोपाधिकेतु भ्रमे तदधिष्ठाने न असतो धर्मिणः आरोपः किन्तु धर्मारोपएव यथा स्फटिके जपाकुसुमलौहित्यारोपः शुभ्रे शङ्खे पीतिमारोपः तटस्थितेषु वृक्षेषु चलायमानत्वारोपः इत्येवम्. सोऽयमारोप्यमाणो धर्मो नैव असन् भवितुम् अर्हति तत्तदुपाधिषु तेषां धर्माणां सद्भावादेव. स्वधर्मिभूतोपाधिसम्बन्धेन

अधिष्ठानेनापि तेषां सम्बन्धो न असन् किमुत सन्नेव अवधार्यते. तस्मादेव अधिष्ठानतत्त्वज्ञानेनापि सोपाधिकभ्रमारोपनिवृत्तिः न जायते. तत्र हेतुभूतदोषसंख्यायां विवादस्य शक्यत्वेऽपि नैकेन केवलेन अर्थदोषेण, इन्द्रियदोषेण वा, बुद्धिदोषेण वा, अपितु अन्येषामपि आगन्तुकेन उपाधिरूपेण वा भ्रमज्ञानजननं भवतीति सर्वैरपि विचारकैः अनेकेषां दोषाणां सम्भूयकारित्वरूपं कारणसामग्रीतया अभ्युपगमनीयमेव.

तत्र "**तमस्त्वज्ञानजं विद्धि**" (भग.गीता.१४।८) "**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च**" (भग.गीता.१४।१७) इत्येतयोः वचनयोः अज्ञानतमसोः परस्परजन्यजनकभावत्वोपगमात् "**ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि तद् विद्यादात्मनो मायां यथाभासो यथा तमः**" (भाग.पुरा.२।९।३३) इत्यत्र मायायाः चापि अज्ञानान्यथाज्ञानहेतुतायाः श्रावणाद् "**द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः संशयोऽविपर्यासो... बुद्धेर्लक्षणं वृत्तितः पृथग्**" (भाग.पुरा.३।२६।२९-३९) इति वचनात् च भ्रमभातपदार्थानां मायामोहितबुद्धिवृत्तितया अभ्युपगमो वाल्लभे वेदान्ते.

तथा अभ्युगतेतु बाधज्ञानोत्तरं निश्चीयमानं भ्रमभातविषयाणाम् असत्त्वं न तेषां स्वाभाविकं स्वरूपं किन्तु मायया आरोपितं तद्देश-तत्काल-तद्भान-वैशिष्ट्यावगाह्न्युनुव्यवसायरूपस्मृतिविषयीभूतमिति मायायाएव अपरिहार्यतया असाधारणहेतुत्वे सिद्धे कृतम् अन्तर्गडुना भ्रमभातविषयाणाम् असत्त्वेन इति वाल्लभो अभिप्रायः.

तस्मात् श्रीप्रह्लादाचारमहोदयाः यद् :

> "**विषयतैव रजतम् इति कथं वक्तुं शक्यते? विषयता किं चक्षुःगोचरा भवति? तत्र रजतस्य कश्चन आकारः किञ्चन रूपं सर्वं दृश्यते. एतत् सर्वं चक्षुषा साक्षात्क्रियते. एतत् सर्वं केवलं वृत्तिरूपम् इति वक्तुं नैव शक्येत. वृत्तेः अचाक्षुषत्वात्.**"
>
> इति वदन्ति.

तदत्र यस्मिन्नंशे द्वैतवेदान्तेन समं शुद्धाद्वैतवेदान्तस्य मतैक्यं सम्भवति

तत् पूर्वं हि चिन्तनीयं चेद् भगवत्पादश्रीमदानन्दतीर्थानां तावद् भागवततात्पर्यनिरूपणे इमे अंशाः सावधानतया मननीयाएव —

> ''**मनोबुद्धिरहंकारश्चित्तमित्यन्तरात्मनः** चतुर्धा लक्ष्यते भेदो वृत्त्या **लक्षणरूपया**(भा.का.) — **बुद्धिरध्यवसानाय संशयं कुरुते मनः अभिमानो ह्यहंकारः चित्तं स्मरणकारणम्**(भा.ता.)... **द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहात् संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च स्वाप इत्युच्यते बुद्धेः लक्षणं वृत्तितः पृथक्**(भा.का.) — **द्रव्यस्फुरणे यद् विशेषज्ञानम्. सामान्यं मनसा जातं विशेषाद् बुद्धिजं भवेत्**(भा.ता.).''
>
> ( भाग.तात्प.३।२७।१५,३१ ).

अत्र भगवत्पादैरपि सामान्यज्ञानस्य मनोजन्यत्वं विशेषज्ञानस्य बुद्धिजन्यत्वम् अङ्गीकृतमेव. ''इदं रजतम्'' इत्यादिभ्रमज्ञानानितु विशेषज्ञानान्येवेति नच अधिष्ठानसामान्यज्ञानं विना विशेषज्ञानोत्पत्तिरिति प्रमारूपं भवतु भ्रमरूपं वा भवतु उभेअपि बुद्धिवृत्तिरूपे स्तः इत्यत्र विवादस्तु न प्रतिभाति. ततश्च ''**विषयतैव रजतम् इति कथं वक्तुं शक्यते?**'' इति प्रश्ने ''असच्च तद् रजतञ्च'' इत्यपि वक्तुं नैव शक्येत केनापि. अथ ''भ्रमानुभूतिदेशकालयोः रजतं न विद्यते'' इत्येव 'असद्रजत'पदस्य अभिप्रायः इति अङ्गीक्रियमाणेतु अन्यत्र तस्य रजतस्य सत्त्वमपि नूनं बुद्धिगोचरं भवेदेव. तस्माद् ''**विषयता किं चक्षुःगोचरा भवति?**'' इत्यस्य प्रश्नस्य उत्तरे विपर्यासरूपबुद्धिवृत्तौ विवादाभावादेव इन्द्रियार्थसंनिकर्षस्य असद्रजतजननाशक्तत्वेन प्राकृततमोगुणविद्धायाः बुद्धेरेव सकाशाद् असद्रजतभानजननं द्वैतवेदान्तेऽपि न अनभिमतमिव लक्ष्यते. इह 'विषयता' नाम चाक्षुषभ्रमविषयता साच भ्रमाधिष्ठानसंसृष्टेन समनस्कचक्षुरिन्द्रियेण जायमाने ज्ञाने तदननुग्राहिकया मायामोहितबुद्ध्या बुद्ध्यननुगृहीततादृज्ज्ञानविषयतारूपैव. भ्रमभातस्य रजतस्यापि पश्चान्निश्चीयमानम् असत्त्वं निरुपाधिकं किन्तु तद्देशोपधिकं तत्कालोपाधिकं विकल्पवृत्तिगोचरम् ''**अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि**'' इतिवद् प्रतीयते.

तस्माद् अस्मदाचार्यचरणाः निरूपयन्ति —

> ''**यद् वस्तु स्वरूपे अन्यथा प्रतिभासते तद् आत्मनां जीवानां**

व्यामोहिका या माया... तस्याः कार्यम्. साहि जीवं व्यामोहयित्वा तत्सम्बन्धिनम् अन्तःकरणबुद्ध्यादिकमपि व्यामोहयति. तया व्यामोहिता बुद्धिः पदार्थान् अन्यथा मन्यते नतु पदार्थाः अन्यथा भवन्ति... मायाच द्विधा भ्रमं जनयति : विद्यमानं न प्रकाशयति; अविद्यमानं च प्रकाशयति देशकालव्यत्यासेन... भ्रान्तप्रतीतेस्तु न अर्थनियामकत्वम् अन्यथा भ्रमदृष्ट्या गृहीतं जगद् भ्रमद्रूपमेव स्यात्. अतो विषये विषयता काचित् स्वीकर्तव्या यया दृष्टिः सविषया स्यात्. अन्यथा पदार्थानां स्थिरत्वाद् भ्रमदृष्टिः निर्विषया स्याद्. अतो अन्यत्रैव सिद्धो भ्रमिः मायया पुरःस्थिते विषये समानीयते, दृष्ट्यनुरोधित्वात् तस्याः... विषयता मायाजन्या विषयो भगवान्. मायायामेव विषयतारूपं भगवतः स्वरूपं प्रकटितं तदपि न निःस्वभावम्, आत्मशक्तित्वाद् मायापि न निःस्वभावा. चिद्विलासत्वाद् बुद्धेः परं तामेव व्यामोहयति, यावन्न ब्रह्मभावः.''
(सुबो.२।९।३३).

तेनेदं सिद्ध्यति यद्वत् प्रमाज्ञाने सामान्यज्ञानं मनोजन्यं विशेषज्ञानं च बुद्धिजन्यं, तद्वदेव भ्रमज्ञानेऽपि अधिष्ठानसामान्यज्ञानं मनोजन्यम् आरोप्यमाणविशेषज्ञानं बुद्धिवृत्तिरूपमेव इति. चाक्षुषत्वादिनिर्वाहस्तु समनस्केन्द्रियार्थसंनिकर्षजन्यं यादृक्सामान्यज्ञानं तन्नियतोत्तरभावि यद् विशेषज्ञानं तद् तादृगैन्द्रियकत्वभानोपरक्तमेव जन्यते इति प्रमाभ्रमसंशयादिज्ञानसाधारणो नियमः. तेन प्रह्लादाचारिमहोदयैः पृष्टं **''तत्र रजतस्य कश्चन आकारः किञ्चन रूपं सर्वं दृश्यते. एतत् सर्वं चक्षुषा साक्षात्क्रियते. एतत् सर्वं केवलं वृत्तिरूपम् इति वक्तुं नैव शक्येत. वृत्तेः अचाक्षुषत्वात्''** इति तत्समाधानमपि सुकरमेव. यतोहि उदाहृतयोः भगवत्पादश्रीमदानन्दतीर्थानाम् अस्मदाचार्यचरणानां च एतद्विषयकनिरूपणयोः नातीव पार्थक्यम् उपलभ्यते. तस्माद् यथा विष्णुतत्त्वनिर्णये **''पदार्थस्वरूपत्वाद् भेदस्य. नच धर्मिप्रतियोग्यपेक्षया भेदस्य अस्वरूपत्वम्, ऐक्यवत् स्वरूपस्यैव तथात्वाद्''** (विष्णुत.विनि.१) इति भेदवादसमाश्रयणादेव सर्वेषामपि वस्तूनां प्रमाज्ञानेऽपि स्वरूपतः सत्त्वं पररूपतो असत्त्वम् इति अङ्गीक्रियतएव. तथा सति रजतत्वेन असतो अधिष्ठानस्य असत्त्वाद् व्यतिरिक्तं शुक्तित्वेन वा असतो रजतस्य असत्त्वाद् वापि व्यतिरिक्तं तृतीयं भ्रमज्ञानविषयीभूते असत्त्वे अङ्गीक्रियमाणे सुस्पष्टैव कल्पनागौरवइति असतः ख्यानम्

अनावश्यकमेव भवति. शुक्तिशकलस्यापि रजतरूपेण असत्त्वात् तदेव शुक्तिगतं रजतप्रतियोगिकम् असत्त्वं भ्रमभातरजतविषयकासत्त्वभानभारं वोढुम् अलम्. ततश्च अन्यत्र अन्यस्य ख्यानमेव तद् भवतु इति अङ्गीकर्तव्यम्.

तस्माद् यदप्युक्तं ''**एवञ्च चाक्षुषः कश्चन पदार्थो वर्तते. सच पदार्थः किंस्वभावः इति प्रश्नः. तस्यच सत्तातु न अङ्गीक्रियते इति मन्ये. (तस्माद्) अत्यन्तासत्त्वम् अङ्गीकृत्यैव निर्वाहः करणीयः**'' इति तदपि प्रमात्मके विशेषज्ञानेऽपि चाक्षुषः पदार्थो बुद्धिगोचरएवेति भ्रमप्रमाध्यवसाययोः साधारणः प्रश्नइति तदुत्तरमपि साधारणमेव दातुं शक्येत.



## चर्चा

### अभिनवान्यथाख्यातिः

प्रॉ. श्री डी. प्रह्लादाचार

**बलिराम शुक्ल :** न्यायशिखामणौ "ननु तत्र तादृशवैशिष्ट्यप्रतियोगित्वेन भासमानत्वं प्रकारत्वं तादृशवैशिष्ट्यानुयोगित्वेन भासमानत्वं विशेष्यत्वं ... तदुभयसत्त्वेऽपि विशिष्टज्ञानप्रतियोगित्वं समूहालम्बने च अनुयोगित्वं भासते इति चेद्, हन्त, रजतत्त्ववैशिष्ट्यानुयोगित्वं यद् रजते प्रसिद्धं तद् दोषवशात् शुक्तौ भासतइति क्व असद्भानवार्तावकाशः" इत्यस्य विषये भवतां को अभिप्रायः ?

**प्रह्लादाचार :** एवं तर्हि "इयं शुक्तिः" — "रजतत्व-शुक्ति-संसर्गाः" इत्यनयोः ज्ञानयोः किं वा वैलक्षण्यम् ?

**बलिराम शुक्ल :** ... वैशिष्ट्यानुयोगित्वेन भासमानत्वं विशेष्यत्वं रजतत्वादेश्च उभयसत्त्वेऽपि विशिष्टज्ञाने प्रतियोगित्वं समूहालम्बने च अनुयोगित्वं भासते.

**प्रह्लादाचार :** रजतत्वप्रकारकसंसर्गानुयोगित्वं शुक्तौ भासते. 'रजतत्वप्रकार-त्वं' नाम न भासमानवैशिष्ट्यप्रतियोगित्वम्. प्रकारत्वं स्वरूपसम्बन्धिविशेषः इति सिद्धान्तः क्रियते. तत्र शुक्तौ रजतत्वप्रतियोगिकसंसर्गानुयोगित्वं भासते इति उच्यते. अनुयोगित्वं शुक्तौ भासते इत्यस्य को अर्थः ?

**के. ई. देवनाथन् :** दोषवशाद् भासते.

**प्रह्लादाचार :** एवम्. परन्तु अनुयोगित्वस्य सम्बन्धः भासते न वा ?

**के. ई. देवनाथन् :** अनुयोगित्वस्याऽपि सम्बन्धान्तरं नास्ति. स्वरूपसम्बन्धएव.

**प्रह्लादाचार :** कश्चन सम्बन्धो न भासते इति अङ्गीकारे असम्बद्धयोः

ज्ञानम् अङ्गीकृतं स्यात्.

**बलिराम शुक्ल :** सम्बन्धस्य भानं किमर्थम् अङ्गीकरणीयम् ? सम्बन्धो अस्ति.

**प्र ह्ला दा चा र :** सम्बन्धो अस्ति चेत् सम्बन्धस्य सत्ता स्यात्.

**के. ई. देवनाथन् :** ''असदेव इदं रजतं प्रत्यभात्''इति प्रतीत्या असद्रजतं भासते इति भवन्तो वदन्ति. परन्तु नैयायिकैः उच्यते, अन्यत्र वर्तमानं भासते. शुक्तौतु अत्यन्तासद् नास्ति.

**वशिष्ठनारायण झा :** अलीकं भासते वा !

**के. ई. देवनाथन् :** अनुयोगित्वं यद् अस्ति... परन्तु भवद्भिः एवम् उच्यते, यद् अनुयोगित्वं भवति वस्तुतो रजतनिष्ठं तत् शुक्तौ भासते चेत् तयोः संसर्गः असन् किल इति.

**प्रह्लादाचार :** नहि. वदामि. अलीकं रजतं भासते इति एतत्सिद्धान्तः. न्यायसिद्धान्तस्तु ...

**के. ई. देवनाथन् :** अलीकः संसर्गः भासते इति...

**प्र ह्ला दा चा र :** अलीकः संसर्गो भासते इति नैयायिकैः स्वीकृतं वर्तते. अलीकः संसर्गः भासते इति असतो भानन्तु अङ्गीकृतम् !

**बलिराम शुक्ल :** तैः एवम् उक्तं सदुपरक्तस्य अत्यन्तासतः ख्यात्युपगमात्.

**प्र ह्ला दा चा र :** सत्यम्. अत्रापि एवमेव. अस्माभिरपि तथैव.

**के. ई. देवनाथन् :** ममतु अन्यो अंशो जिज्ञासितो अस्ति. इन्द्रियसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणम्. तत्र 'इन्द्रिय'शब्देन तत्तन्मतानुसारिभिः इन्द्रियाणि. प्रथमतो भवद्भिः उक्तं, दोषविशिष्टेन्द्रियसन्निकर्षस्य भ्रमप्रत्यक्षं प्रति हेतुत्वं भवद्भिः उक्तम्. तत्र प्रश्नः एवं भवति, अयं प्रश्नो मया न कृतः, कुत्रचिद् ग्रन्थे दृष्टः : दोषसहितस्य इन्द्रियस्य प्रत्यक्षं प्रति हेतुत्वं कुत्रापि अन्यत्र सिद्धं वा, भ्रमस्थले उच्यते चेत्, तत्र अन्यः आक्षेपो भवति, विशिष्टाद्वैतिनां न अयम् आक्षेपः, दोषः किं करोति ? कार्यं विघटयति. कार्यकरत्वं कुत्रापि दोषस्य न अस्ति.

**प्र ह्ला दा चा र :** शृण्वन्तु. दोषाः कार्यं विघटयन्ति इति अत्रापि उदाहरणानि

सन्ति. दोषाः काञ्चना शक्तिं जनयन्ति इति अत्रापि उदाहरणानि सन्ति. कदलीकाण्डस्य अथवा जाठराग्निस्थलेऽपि दोषवशाद् काचन शक्तिविशेषो जायते. भस्मकदोषदुष्टः पुरुषः बह्वन्नं खादति. अन्ये दृष्टान्ताअपि सन्ति.

**के. ई. देवनाथन्:** परन्तु दोषसहितस्य सन्निकर्षस्य प्रत्यक्षं प्रति हेतुत्वम् इति तत्र किमपि हेतुः अस्ति वा?

**प्रह्लादाचार :** दोषस्य सहकारिकारणत्वविषये विवादो न अस्ति. सहकारित्वं कया विधया इतितु एवं निरूप्यते. इदानीं, भासमानस्य रजतस्य अत्यन्तासत्त्वम् अस्ति नवा? इति एको विषयः. अत्यन्तासत्त्वं न अङ्गीक्रियते चेद्, भवतु. अत्यन्तासत्त्वम् अङ्गीक्रियते चेत् तदानीं यद् भासमानं तद् अत्यन्तासत्. अपिच तस्य अबाधितः चाक्षुषत्वानुभवः च वर्तते. अनयोः उपपादनं करणीयं भवति.

**के. ई. देवनाथन्:** समीचीनं परन्तु तत्र ''असदेव इदं रजतं प्रत्यभाद्'' इति या प्रतीतिः अस्ति, भवद्भिः अन्यापि प्रतीतिः उक्ता, तत्र ''एतद्देशकालसम्बन्धितया रजतं मया अनुभूतम्''. तत्तु आपणस्थरजतस्य न सम्भवति इति भवद्भिः उपपादितम्. एतद् उभयमपि नैयायिकैः यदि सम्यक् समाधीयते तर्हि दोषस्य कल्पना नास्ति.

**प्रह्लादाचार :** सत्यम्.

**के. ई. देवनाथन्:** कथम् इति वदामि : नैयायिकाः आपणस्थरजतम् अत्र भाति इति न वदन्ति. आपणस्थं रजतं स्मृत्यारूढम् अत्र भाति. ज्ञानलक्षणया उपनीतम् अत्र भाति इति वदन्ति.

**प्रह्लादाचार :** शृण्वन्तु. ''इदं रजतम्'' इति चाक्षुषप्रत्यक्षन्तु नैयायिकेन द्वैतिनापि उभाभ्याम् अङ्गीक्रियते. अस्मिन् देशे अस्मिन् काले किञ्चिद् रजतं दृश्यते अस्माभिः तत्र या विषयता वर्तते सा लौकिकसन्निकर्षप्रयोज्या विषयता वा अलौकिकसन्निकर्षप्रयोज्या विषयता वा इति चर्चा. तत्र

रजते लौकिकसन्निर्षप्रयोज्या विषयता वर्तते इति वदन्ति द्वैतिन:.

**के. ई. देवनाथन्:** नैयायिकैस्तु 'रजतत्वे' इति उच्यते.

**प्रह्लादाचार :** भवतु. तत्र रजतत्वारोप: इति कश्चन पक्ष:...

**के. ई. देवनाथन्:** यत: ''इदं रजतम्''इति अभिलापो यद्यपि... भवति...

**प्रह्लादाचार :** एवं शाब्दानुभवएव तादात्म्यं संसर्ग:. प्रत्यक्षस्थलेतु सर्वैरपि वेदान्तिभि: तादात्म्येन रजतभानम् अङ्गीक्रियते. समवायसम्बन्धेन रजतत्वस्य आरोप: इति नैयायिका: वदन्ति. भवतु नाम. रजतत्वस्य आरोप: इति पक्षेऽपि रजतत्वं देशान्तरे कालान्तरे...

**के. ई. देवनाथन्:** रजतस्य आरोप: इति पक्षे एतद्देशकालसम्बन्धित्वन्तु इदमंशएव भाति.

**प्रह्लादाचार :** सत्यम्.

**के. ई. देवनाथन्:** अत: इदमंशे पुरोवर्तिनि एतद्देशकालवर्तित्वम् अस्ति.

**प्रह्लादाचार :** नहि, ''इदं रजतम्'' इत्यत्र रजतस्य भानम् अस्ति न वा नैयायिकानाम्?

**के. ई. देवनाथन्:** रजतत्वविशिष्टं ज्ञानम् अस्ति. रजतस्य भानं नास्ति.

**प्रह्लादाचार :** अहम् अनुवदामि. इदं विशेष्यकं रजतत्वप्रकारकं समवायसंसर्गकं ज्ञानं जायते. तत्र रजतत्वं प्रकारो अन्यत्र विद्यमानमेव अत्र भासते इति तेषां पक्ष:. परन्तु रजतत्वं प्रकार: इत्यत्र न कापि विप्रतिपत्ति:.

**के. ई. देवनाथन्:** परन्तु यो अनुव्यवसायो भवति ''रजतं पश्यामि'' इति मते ''इह रजतत्वं पश्यामि'' इत्यपि अनुभवो वर्तते. उभयसाधारणतया अस्माभि: ...

**प्रह्लादाचार :** तथैव ''इदं रजतं पश्यामि'' ''इदं रजतम् अपश्यम्'' इत्यादयो अनुभवाअपि सन्ति. अनुभवो यदि प्रमाणीक्रियते तर्हि ''रजतम् अपश्यम्'' इत्यपि अनुभवो वर्तते.

**के. ई. देवनाथन्:** देशकालवर्तित्वं रजतत्वेतु न...

प्रह्लादाचार : रजतस्यैव भानम्. रजतस्य निषेधः क्रियते "न इदं रजतं" "न अत्र रजतम् आसीद्" इत्येवं सर्वानुभवसिद्धो रजतस्य अनुभवो नैयायिकैः न अङ्गीक्रियते तत्तु विलक्षणम्.

यज्ञेश्वर शास्त्री : मेरी समझके अनुसार माध्व भारतीयदर्शनमें *रियलिस्ट्* हैं. अब आप यह कहते हैं कि अत्यन्तासद्का भान होता है तो वह कैसे सम्भव है? यह एक बात. और यदि आप अत्यन्तासद्का भान स्वीकारते हैं तो आपका *रियलिज़म्* नहीं रहता है. दूसरी बात यह कि हर एक आदमी मानता है कि यहां जो शुक्ति है वह रजत नहीं है फिर भी रजतका ज्ञान होता है. जो नहीं है उसका ज्ञान हो रहा है. किं नवीनं भवद्भिः उक्तम् अत्र?

प्रह्लादाचार : Dvaitins are realist. But what is realism that we have to define. Realism does not mean whatever is cognized it is always real. Realism can be explained in many ways. Whatever is grasped is unreal is one theory. That is opposed. The world experience is true. The content of this experience is real thing, normally. In exceptional cases, something non-existent, but non-existent not in Advaitin's sense i.e. Anirvacanīya. Something absolutely non-existent also is cognized but not without seeing any real thing. Saduparāga is always there.

**वशिष्ठनारायण झा :** What he wanted to say that whether we can see Ākāś-kusuma.

**यज्ञेश्वर शास्त्री :** नहीं नहीं. मैं यह नहीं कह रहा हुं. मैं यह पूछ

रहा हुं कि जो उन्होंने कहा कि ''असदेव रजतं प्रत्यभात्''. एतद्देशकालकालसम्बन्धी रजतका अनुभव मुझको हुवा कैसे? एतद्देशकालमें तो शुक्ति है. रजत तो वहां है ही नहीं.

**के. ई. देवनाथन्:** इसीलिये वो असत्पदार्थ स्वीकारते हैं.

**यज्ञेश्वर शास्त्री:** असत्पदार्थका *पर्सेप्शन्* होगा कैसे?

**प्रह्लादाचार:** You analyze your experience, it will become clear. You can not deny that something is being cognized here and that is Rajata. Whether it is existent or absolutely non-existent? What is its nature that we have to examine. I explained, it can not be existent because it is not there. Afterwards I experience that "I saw here which was not at all existent" "I saw something non-existent". This is our experience.

**वशिष्ठनारायण झा:** Suppose had there been no silver in the world. Had we known silver here?

**प्रह्लादाचार:** Not at all.

**वशिष्ठनारायण झा:** So how can Asat become the object of our knowledge?

**प्रह्लादाचार:** See, what is being seen here if it is real, if it is not Alīka then how is it... cognition? That is another question.

**वशिष्ठनारायण झा:** Even a fictitious knowledge is not possible unless the content of it somewhere present.

**प्रह्लादाचार:** Similar one should be existent somewhere it is not at all denied.

के. ई. देवनाथन् : What kind of similarity ... ?

प्रह्लादाचार : रजतत्वेन भासमानत्वम्. This is similarity. रजतत्वेन भासमानत्वम् अत्रापि अस्ति रजतत्वेन भासमानत्वं तत्रापि अस्ति. That is similarity. It need not be Rajatatvam itself.

गो. श्या. म. : This problem troubled Bertrand Russell too much. And he came up with the solution, and perhaps it would be interesting for us to consider that. He says that we must divide the concept in to Being, Existent and Subsistent. Likewise, non-subsistent, non-existent and non-being. He says that where there is logical contradiction like round-square, it is a non-being phenomena. But Khapuṣpa or Śaśasṛṅga are not logically contradictory. They are empirically contradictory. In his support I would like to site my experience of white crow. In Calcutta museum I myself have seen white crow. So, those who have not experienced white crow will treat white crow as Khapuṣpa or Śaśasṛṅga. So, according Russell white crow may not exist but it can have some being, conceptual being. Because it is not contradictory conceptually. Similarly, he says that there can be Subsistence. For instance, as Naiyāyika says Rajatatva. Rajatatva subsists in Rajat according to Russell. But

it does not subsist in Śukti. That is why it can be said that Rajatatva is non-subsistent in Śukti but it has subsistence in Rajat. Thus he has made a classification of Being, Existence and Subsistence. Likewise, Non-being, Non-existence and Non-subsistence. I think, it may help us to certain extent in solving this problem.

प्रह्लादाचार : Yes. I have heard this argument. The round-square is non-being because it is logically contradictory. Whatever logically contradictory is non-being. OK. But when we experience ''इदं रजतम्'' we do not experience ''शुक्तिरजत''. This is the form of our cognition. But later when we analyze the cognition, we turn it as ''शुक्तिरजत''. What do we mean by the term ''शुक्तिरजत''? And what does he mean when he talks about round-square? Round-square is logically non-being because it means the round which is identical with the square. Such a thing is non-being because it can never exist. It is like वन्ध्यापुत्र.

गो. श्या. म. : यथा न्यायामृतकारैः परस्परविरहरूपता परस्परविरहव्यापकता परस्परविरहव्याप्यता उक्ता so that sort of classification must be brought in to consideration while discussing object of illusion.

प्रह्लादाचार : My point is that when we say "शुक्तिरजतम्", what we mean here is शुक्तितादात्म्यापन्नत्वेन भासमानं रजतम्. शुक्तितादात्म्यापन्नरजतम् is as non-being as round-square is. शुक्तितादात्म्यापन्नरजत is logically non-existent.

गो. श्या. म. : Not logically, empirically.

प्रह्लादाचार : Because as per our concept...

गो. श्या. म. : There is empirical contradiction and not logical contradiction.

प्रह्लादाचार : So, Śukti can sometimes become Rajat. Do you want to say that?

गो. श्या. म. : Yes. Logically it is possible. We are denying it only because we do not have such experience. But tomorrow there can be an object ...

प्रह्लादाचार : Now, the point of difference is this much: we are sure that the round thing can never be the square thing. This is the logical contradiction.

गो. श्या. म. : Such logical contradiction is not involved in the cases of Śaśaśṛṅga and Śukti-rajat.

प्रह्लादाचार : But, for a person who thinks that the Śukti can never be Rajata, logical contradiction is there.

गो. श्या. म. : Empirical contradiction is there, not logical contradiction. Because what we can define as Śukti and what we can define as Rajata do not involve any contradiction as such.

So there is no परस्परविरहरूपता as Nyāyāmṛtakāra says.

प्रह्लादाचार : OK. This argument depends upon our belief. But, actually what it is. Suppose, Śukti can never become Rajata, as a mater of fact ...

गो. श्या. म. : Empirically, not logically.

प्रह्लादाचार : OK.If Śukti can never become Rajata factually ...

गो. श्या. म. : यथा भर्तृहरिः ''कदाचिदपि पर्यटन् शशविषाणम् आसादयेत्, लभेत सिकतासु तैलमपि यत्नतः पीडयन्'' What these Gulf countries are doing today.

प्रह्लादाचार : It is all our imaginations. But, suppose, factually if Śukti never becomes Rajata then what is the difference between the nature of Round-square and also Śukti-Rajata ? We may think that sometimes Śukti may become Rajata. How can you deny ? If not in this Yuga it may become like that. Suppose, factually if Śukti can never become Rajata if this is the fact what is the difference between these two things, Round-square and also Śukti-rajata ?

पारसनाथ द्विवेदी : क्वचिदपि उपाधौ प्रतीयमानत्वमेव भेदः. ... शशशृङ्गस्य क्वचिदपि आश्रये...

प्रह्लादाचार : मया तत् पूर्वम् उक्तम्. शशः तत्र वर्तते. तस्य कर्णौ दृष्ट्वा शृङ्गौ इमे इति भ्रान्तिः...

बलिराम शुक्ल : तत्र शशे शृङ्गस्य भ्रान्तिः नतु शशशृङ्गस्य भ्रान्तिः.

**प्रह्लादाचार :** ''शशे शृङ्गं'' नाम शशसम्बन्धिशृङ्गम्...( कोलाहलः )

**बलिराम शुक्ल :** न. एवं न. शशोऽपि प्रसिद्धः शृङ्गमपि प्रसिद्धम्. अतएव शशे शृङ्गस्य भ्रान्तिः भवितुम् अर्हति.

**के. ई. देवनाथन् :** एवं भवति वा? शशशृङ्गं नाम कदाचिद् भवदुक्तरीत्या शशसम्बन्धितया भ्रमः. कदाचिद् एकं शृङ्गम् आनीतम्. एतद् शशशृङ्गम् इति तु भ्रमो नास्ति किल!

**प्रह्लादाचार :** यथा किञ्चिद् रजतम् आनीतम्, ''इदं शुक्तिरजतम्''इति कस्यापि भ्रमो जायते वा?

**बलिराम शुक्ल :** तत्रापि तावत् शृङ्गे शशीयत्वस्य भ्रमो भवितुम् अर्हति. परन्तु शशशृङ्गस्य भ्रमः कुत्रापि न भवति.

**पारसनाथ द्विवेदी :** क्वचिदपि उपाधौ सत्त्वेन प्रतीयमानत्वम् इति प्रमाप्रतीतिः यत्र यस्य भवेत् तादृशं शशशृङ्गं नास्ति... भवता उच्यते शशशृङ्गे 'शशशृङ्गम्' इत्याकारकं ज्ञानं यदि भवति तर्हि भ्रमः किन्तु मया उच्यते, क्वचिदपि उपाधौ आश्रये सत्त्वेन प्रतीयमानत्वं यत्र तद् अप्रतीयमानत्वं यादृशं तद् असत्त्वं शशशृङ्गे. शुक्तिरजते च तादृशं नास्ति.

**प्रह्लादाचार :** शृण्वन्तु. ''इदं शशशृङ्गम्'' इति अपरोक्षज्ञानं कस्यापि न जायते इति भवताम् अभिप्रायः. एवं खलु! ''इदं शुक्तिरजतम्''इति कस्यापि अपरोक्षज्ञानं जायते वा?

**अज्ञातनामा :** एवम्.

**के. ई. देवनाथन् :** ''इदं रजतम्''इति भवति.

**प्रह्लादाचार :** अहो. एवं खलु? तत्रैव वैलक्षण्यम्. अस्माभिरपि न उच्यते ''इदं शुक्तिरजतम्'' इति प्रत्यक्षं जायते इति. वस्तुतः तद् रजतं शुक्तिरजतम्.

**के. ई. देवनाथन् :** ''शुक्तिरजतम्''इत्यस्य को अर्थः?

**प्रह्लादाचार :** शुक्तौ आरोपितं रजतं खलु शुक्तिरजतम्.

**बलिराम शुक्ल :** शुक्तौ आरोपितम् इदं ज्ञानं यदि कस्यचिद् भवेत् तदा कथं तत् ज्ञानं भ्रमरूपम्?

**प्रह्लादाचार :** शुक्तिरजतम् इत्यस्य किं रजतम् ?

**बलिराम शुक्ल :** शुक्तिस्थले भासमानं रजतम् इति अर्थः क्रियते.

**प्रह्लादाचार :** एवं खलु !

**बलिराम शुक्ल :** शुक्तौ रजतम् इति यज् ज्ञानं जायते तज्ज्ञानस्य विषयो भ्रमः.

**प्रह्लादाचार :** ज्ञानं भ्रमः.

**बलिराम शुक्ल :** ज्ञानं भ्रमः वा ज्ञानस्य विषयो भ्रमः. तत्र ...

**प्रह्लादाचार :** भ्रमो ज्ञानं भवति विषयः च.

**के. ई. देवनाथन् :** मम तु मुख्यसन्देहो वर्तते. तस्यतु विचारो भवत्येव. श्रीमद्भिः प्रतिपादितम् यत् शाब्दबोधो भवति असतः पदार्थः भवति इति. तत्र तर्कताण्डवकारैः उपपादितम् अस्ति ''**अयोग्यतानिश्चयो न प्रतिबन्धकः, तथा सति वादकाले प्रतिवादिनो वाक्यात् शाब्दबोधो अनुपपन्नार्थविषयकोऽपि भवति**'' इति. परन्तु मणिकारेणतु तादृशस्थले तावद् एवमेव स्वीक्रियते ''**पदार्थोपस्थितिमूलको मानसः आहार्यज्ञानविशेषः**'' इति. नैयायिकमतम् एवम् अस्ति इति मया उक्तं तावदेव मम मुख्यविषयः इदं भवति. विशिष्टाद्वैतिनां विषये भवद्भिः उक्तं किल ! तत्र मया वक्तव्यं : तत्रतु अयं प्रश्नएव न उदेति. यतो, अस्माभिः अल्पत्वग्रहणं भूयस्त्वग्रहणम् इतितु न उच्यते. यद्यपि सुधाग्रन्थे अयं प्रश्नः कृतो वर्तते. कार्याक्षमत्वाग्रहविशिष्टं रजतज्ञानं प्रवर्तकम्. तत्तु अल्पत्वेन रजतग्रहणं वा भूयस्त्वेन रजतग्रहणं वा ? यदा भूयस्त्वेन रजतग्रहणं चेद् अन्यथाख्यातिः भवति. अल्पत्वेन रजतग्रहणं भवति चेत् प्रवृत्तिरेव न भवति. अतः...

**पारसनाथ द्विवेदी :** कार्याक्षमत्वे हेतुः कः ?

**के. ई. देवनाथन् :** अनुभवः.

**यज्ञेश्वर शास्त्री :** अल्पत्वेन यदि तत्र स्वीक्रियते चेत् शुक्तेः ज्ञानमेव स्यात्.

**के. ई. देवनाथन् :** ...अतो अल्पत्वग्रहणं वा भूयस्त्वग्रहणं वा इति प्रश्नो अस्माकं मते नास्ति. कार्याक्षमत्वाग्रहणविशिष्टं रजतग्रहणं वा शुक्तिग्रहणं वा तत्तदंशे प्रवर्तकम् इति स्वीक्रियते.

**प्रह्लादाचार :** वस्तुत: कार्याक्षमत्वम् अस्ति. कार्याक्षमत्वं न गृह्यते. कुतो न गृह्यते?

**के. ई. देवनाथन् :** दोषवाशाद् न गृह्यते, अदृष्टवशाद् न गृह्यते. अग्रहणे तावद् बहवो अंशा: सन्ति. तत्र अज्ञाने किल अस्माभि: साक्षाद् दोषस्य कारणत्वं न उक्तम्.

**प्रह्लादाचार :** इदानीम् अत्र पुरतो ध्वनिवर्धकानि यन्त्राणि बहूनि वर्तन्ते. सर्वाणि पश्याम: परन्तु बहुत्वम् अस्माभि: न प्रत्यक्षीक्रियते इतितु विचित्रं भाति.

**के. ई. देवनाथन् :** विचारवर्धनार्थं भवद्भि: उच्यते. प्रात: मया उक्तम् अस्ति. सूक्ष्मा: स्थूला: च अंशा: भवन्ति. एते मिलित्वा 'रजत'शब्दार्थतां 'शुक्ति'शब्दार्थतां भजन्ते. एते सर्वएव अस्माभि: गृहीतुं शक्यन्ते इतितु नास्ति. तर्हितु वयं योगिनो भवाम:. अत्रतु बहवो अंशा: सन्ति.

(कोलाहल:)



# JAINA THEORY OF ERROR

Bata Kishore Dalai

In the present paper, an attempt is made to present the Jaina theory of error. Keeping in view the Jaina theory of Anekānta, and following its spirit, no attempt is made to refute or oppose any of the theory for, nothing is absolutely correct or wrong in the house of a Jaina philosopher.

I have even refrain myself from comparison of the Jaina theory with that of others, except of course some remarks at the end. It is argued that in order to understand Jaina theory of error, one must have a fair acquaintance with their theory of knowledge. Thus as an introductory, I have discussed in some detail the theory of knowledge as propounded by the Jainas.

The Jaina Philosophers do not differentiate between Pramāṇa and Jñāna. According to them Pramāṇa is valid knowledge of itself and of things not proved before[1]. This view of the Jainas is in great contrast with the view as laid down by the Naiyāyikas. In Tarkasaṁgraha we find, of whatever description anything is, when our

idea of that thing is of that same description, it is called a right knowledge as in the case of silver, the knowledge of its being silver. This is called 'Pramā'. The supposing a thing to be, as the thing is not, is called wrong knowledge, as in the case of shell, the notion of its being silver. This is called Apramā.

''तद्वति तत्प्रकारको अनुभवो यथार्थो यथा रजते ''इदं रजतम्'' इति ज्ञानम्. सैव 'प्रमा' इति उच्यते. तदभाववति तत्प्रकारको अनुभवो अयथार्थो यथा शुक्तौ ''इदं रजतम्'' इति ज्ञानम्. सैव 'अप्रमा' इति उच्यते'' (Tarkasaṁgraha). This is acceptable to all Naiyāyikas[2]. On the contrary, according to Jainism Pramāṇa is not the cause of right knowledge but right knowledge itself[3].

The subject of Pramāṇa is treated in the older Jaina works like the Tattvārthādhigama Sūtra in the context of knowledge. Umāsvāmī writes: Mati, Śruta, Avadhi, Manaḥparyāya and Kevala are Right knowledge[4]. With these five kinds of knowledge, Kumati, Ku-śruta and Vibhaṅgāvadhi are added to make up eight kinds of knowledge. These later three namely: Kumati, Kuśruta and Vibhaṅgāvadhi are nothing but false knowledge of Mati, Śruta and Avadhi. Thus, 'Kumati' is the false knowledge of Mati, 'Kuśruta' is the false knowledge of Śruta, and 'Vibhaṅgāvadhi' is the false knowledge of Avadhi. Kundakundācārya has mentioned all these eight varieties of Jñāna in Pañcāstikāya-samaya-sāra. He writes: Abhinibodhika5, Śruta, Avadhi, Manaḥparyāya

and Kevala these are the five varieties of knowledge. Kumati, Ku-śruta and Vibhaṇga - these three also are connected with it[6]. Now let us see and try to understand these eight varieties of Jñāna.

## Mati Jñāna :

Mati Jñāna is knowledge derived through the senses including the knowledge which arises from the activity of mind. By nature Ātman is devoid of touch, taste and smell etc., due to contact with body due to bondage from beginning-less time ( Anādi ) it fails to grasp the object directly and thus takes the support of Dravyendriya or material sense-organs[7]. The commentary on Nāndi-sūtra gives stress on Bhāva-indriya or psychic sensory organs. The Jainas have developed a sophisticated classifications of sense organs which is presented as follows :

Indriya ( Organs of Knowledge )

Dravyendriya ( Material organs ) Bhāvendriya ( Psychic organs )

Nirvṛtti ( Shape of the organ ) Upakaraṇa ( Power of organ to acquire knowledge ) Labdhi Upayoga

Bāhya ( External ) Ābhyantara ( Internal )

As shown in the classification, Bhāvendriya is of two types, namely : Labdhi and Upayoga.

'Labdhi' is the capacity to grasp knowledge due to Kṣayopasama of Jñānāvaraṇīya karma and 'Upayoga' is the inclination or the activity of consciousness to know[8].

The knowledge which require the Nirvṛtti and Upakaraṇa are Parokṣa Jñāna and the knowledge which is derived due to Labdhi and Upayoga do not require any assistance of sensory organs and is known as no-indriya-pratyakṣa. It is directly grasped by Ātman.

There is no scope of Bhrānti or Ābhāsa in case of this knowledge.

Let us see little more on Mati Jñāna which is most important for the discussion of erroneous cognition.

In Jaina psychology four stages of which follow an inexpressible contact of an object with sense consciousness have been introduced. They are: (I) Avagraha (II) Īhā (III) Avāya (IV) Dhāraṇā[9].

When an object is brought in contact with a sense organ there arises a general knowledge of an object. There is an excitation in the sense organ by the object followed by an excitation in the consciousness. Thus, in the first stage, a person is barely concern or conscious of the existence of an object. This is Avagraha[10].

सर्वथाच अनया रीत्या अन्यस्य अन्यथाप्रतिभासनाद् अन्यथाख्याति: सङ्गता भवति.

**वाल्लभमतानुसारेण अन्यख्याते: स्वरूपम् :**

अन्यस्य ख्याति: अन्यख्याति:. अस्या: स्वरूपं प्रमेयरत्नार्णवे प्रतिपाद्यते यत् पूर्वोत्पन्नो अनुभव: संस्कारात्मना स्थितो भवति यतोहि जातस्य ज्ञानस्य सूक्ष्मावस्था संस्कार:[८]. उद्बोधकै: संस्कारात्मना संस्थितस्य अनुभवस्य प्राबल्ये मायिकार्थाकारवती बुद्धिवृत्ति: मायया बहि: क्षिप्यते तदा सा पुरोवर्तिनं सर्वतो अंशतो वा आवृत्य बहि: अवभासतइति मायिकस्य पुरोवर्तिनो अन्यस्यैव ख्यानाद् 'अन्यख्याति' पदेन व्यवहारो भवति. किन्तु प्रश्नो अयं भवति यत् पुरोवर्तिनो अन्यस्य रजतादेरेव ख्यानं कुतो भवति? सुवर्णादिरपि ख्यानं स्यात्? किन्तु नैवं प्रष्टुं शक्यते. ख्यातिवादे प्रोच्यते यत् **'' 'अन्य'पदस्य सदृशवाचकत्वेन अनुभूतसदृशधर्माणामेव ख्यानात्''** रजतादावेव पुरोवर्तिशुक्त्यादे: सादृश्यं विद्यते नतु सुवर्णादाविति रजतादेरेव ख्यानं भवति. सङ्क्षेपेण वक्तुं शक्यते ''इन्द्रियेण गृह्यमाणाद् विषयात् शुक्त्यादिरूपाद् अन्यस्य रजतादे: ख्याति: 'अन्यख्याति:' उच्यते[९].

वाल्लभमतानुसारं मन:संयुक्तेन चक्षुरादीन्द्रियेण शुक्त्यादे: संयोगे जाते तज्जन्यं सामान्यज्ञानम् उत्पद्यते. इदं निर्विकल्पात्मकं ज्ञानं भवति. तदनन्तरं यदि बुद्धिरुद्भूतसत्त्वगुणस्य साहित्यम् अवाप्नोति तदा प्रमात्मकं ज्ञानं निश्चयापरपर्यायं समुद्भवति. यदातु चक्षु:शुक्तिसंयोगे सति सामान्यज्ञानोत्तरं (निर्विकल्पकोत्तरं) भगवत: शक्ति: त्रिगुणात्मिका माया तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदा ''इयं शुक्ति:'' इति बोधो न जायते. अनया रीत्या पदार्थयाथात्म्यस्फुरणाभावात् मायया मोहिता बुद्धि: रजतसंस्कारस्य प्रबलतया चाकचिक्यादिधर्मसादृश्यम् आदाय बुद्धावेव रजतं निर्माति. सामान्यज्ञानेतु न इदं रजतं विषयीभूतम् अस्ति तदनन्तरमेव बुद्ध्या रजतोत्पादनात्. ''इदं रजतम्'' इति विशिष्टज्ञाने बौद्धमेव इदं रजतं भासते. अत: इन्द्रियेण गृह्यमाणाद् विषयाद् अन्यस्य रजतादे: ख्यानम् अत्र भवति, सङ्गताच

इयम् अन्यख्याति:.

अत्रच बौद्धं रजतादिकं बुद्धिवृत्त्या नैव भिद्यते यतोहि बुद्धिवृत्ति: मायिका( बौद्धा )र्थाकारवती भवति. बुद्धिवृत्तिश्च बुद्ध्या नैव भिद्यते यतोहि 'वृत्तिर्'नाम बुद्धितत्त्वस्य कालक्षुब्धसत्त्वादिगुणकृतो अवस्थाविशेषएव[१०]. मायागुणस्य रजस: चञ्चलत्वेन विक्षेपकत्वेन तद्द्वारा बहि:क्षिप्तबुद्धिवृत्तिरूपं ज्ञानमेव अर्थाकारेण रजताद्याकारेण ख्यायते. बुद्धिस्तु अहङ्कारभेद:. मन्ये ''बुद्धिर् बहिर्वद् अवभासते'' इत्यपि वक्तुं शक्यते. अतएव **''यन् मायया बहि:क्षिप्ता ख्यायते बुद्धिर् अर्थवत्''** इति उच्यते[११].

**अन्यथाख्यातौ वाल्लभै: समुपस्थिपिता: आपत्तय: :**

प्रश्नो अयं विधीयते वाल्लभै: यत् भवता यद् अन्यस्या: अन्यथाख्याति: इति रीत्या अन्यथाख्याते: व्याख्या क्रियते तत्र अन्यस्य = विषयस्य अन्यथात्वं भवता अपेक्षितं ख्याते: वा अन्यथात्वं भवता अपेक्षितम् ?

यदि तावत् प्रथम: कल्प: तर्हि कीदृशं विषयस्य अन्यथात्वं विवक्षितं श्रीमता ? अत्रापि त्रयो: विकल्पा: प्रस्तुता: आरम्भ:, विपरिणाम:, तादात्म्यविशेषो वा. त्रिष्वपि विकल्पेषु रजतादीनां भ्रमभातपदार्थानां यथार्थतापत्ति: गले पतिता भवति. अतो विषयान्यथात्वपक्षो हेय:.

पुनरपि विषयस्य अन्यथात्वपक्षे दूषणदानाय परिष्कारान्तरं कल्प्यते दूष्यते च — यदि नाम अन्यत्र सत: तत्र अलब्धसत्ताकत्वे सत्यपि तस्य रजतत्वादे: धर्मस्य प्रकारीभावो हि शुक्त्यादे: विषयस्य अन्यथात्वम् इति भवतां मतं विद्यते, तर्हि नैतदपि साधु. यतोहि तत्र अलब्धसत्ताकेन रजतत्वादिना तत्र लब्धसत्ताकस्य शुक्तित्वादे: तिरस्कारो वक्तुम् अशक्य:. अनयैव रीत्या च पटत्वादिनापि घटत्वादितिरस्कारेण पटत्वादिप्रकारकं ज्ञानञ्च प्रसज्यते. यदिच अन्यत्र सत: तत्र अर्थस्मृत्या अपनयोत्तरं लब्धसत्ताकस्य रजतत्वादे: प्रकारीभावएव शुक्ते: अन्यथात्वम् इति मतं तर्हि न एतदपि

साधुताम् अञ्चति. यतोहि एवमपि रजतत्वेन शुक्तित्वतिरस्कार: स्वीकार्यएव, तथाच युगपद्व्यक्तिभेदेन भ्रम-प्रमयो: अनुपपत्ति:. अतिरस्कारे उभयो: भ्रम-प्रमोभयमपि स्यादेव. अथवा एकत्र द्वयम् इति रीत्या रजतत्व-शुक्तित्वोभयविशिष्ट-शुक्तिज्ञानमेव भवेत्. गुणदोषयोरपि न सम्भवति नियामकत्वम् अत्र. रजतभेदाभावस्य प्रकारीभावोऽपि नैव अन्यथात्वं सम्भवति इत्यपि निरस्यते.

यदि नाम ख्याते: अन्यथात्वम् इति पक्ष: तर्हि नैतदपि साधुताम् आवहति मतम्. यतोहि पक्षे अस्मिन् स्वीकार्यम् एतद् अवश्यं भविष्यति यद् आलम्बनं शुक्ति: इति. यदि शुक्ति: आलम्बनं तर्हि शुक्त्या स्वाकारसमर्पणम् अवश्यमेव कर्तव्यम्. शुक्त्या स्वाकारसमर्पणे ''रजतम् अहम् अनुभवामि'' इति अनुव्यवसायो न स्यात् ''शुक्तिं रजतत्वेन जानामि'' इति च अनुव्यवसायो भवेत्. यदिच स्वाकारो नैव समर्प्यते तदा शुक्ते: रजतभ्रमालम्बनतायामेव प्रमाणविरह:. अत्रच पक्षे शुक्ते: आलम्बकत्वं पारिभाषिकमपि नैव भवितुम् अर्हति इत्यादिकमपि कल्पान्तरान् उपस्थाप्य खण्ड्यते. मुख्यत: एतत् सर्वं ख्यादिवादे विचारितम्.

**आसाम् आपत्तीनाम् औचित्यम् अस्ति किम् ? :**

अत्र इदं विचार्यं यद् आसाम् आपत्तीनां कियद् औचित्यं विद्यते? जयन्तभट्टेन अन्यदेशकालस्थरजतादे:, निगूहितनिजाकाराया: परिगृहीतरजताकाराया: शुक्तिकादे:, शुक्तिकादे: च आलम्बकत्वं सम्भवति इति त्रय: पक्षा: समुपस्थापिता:. एतेषु यदि द्वितीय: पक्ष: आश्रीयते तदा यथाकथञ्चिद् विषयस्य अन्यथात्वं कीदृशम् इति प्रश्न: सम्भवति, नतु प्रथमतृतीयकल्पयो:. तत्रापि आरम्भविपरिणामतादात्म्यविशेषादिरूपम् अन्यथात्वन्तु अनभ्युपगमादेव निराकृतमिति जयन्तभट्टशब्दान् आश्रित्य उच्यते तर्हि ''अस्थाने खलु कण्ठशोषो अनुभूत: आयुष्मता'' सति वक्तुं शक्यते.

अन्यत्र सत: तत्र अलब्धसत्ताकत्वेऽपि प्रकारीभावो अन्यथात्वम्

एतदेव च निगूहितनिजाकाराया: शुक्ते: परिगृहीतरजताकारत्वम्. एतादृशमेव वस्तुन: शुक्तिकादे: अन्यथात्वम् इति पक्षो धर्तुं परिष्कर्तुं च शक्य:. प्रदर्शितदोषवारणा वक्तुं शक्यते यत् शुक्तित्वादे: अतिरस्कारेऽपि गुणदोषबलेन एतादृशं वस्तुनो अन्यथात्वं सम्भवति. दुष्टम् इन्द्रियं सम्यज्ज्ञानजनने असमर्थं भवति, विपर्ययज्ञानजननेतु तदेव कारणं भवति. अत: शुक्तित्वादे: अतिरस्कारेऽपि रजतत्वादिकस्य प्रकारीभावो शुक्त्यादौ सम्भवति.

यद्यपि अत्र वाल्लभानाम् अयम् आक्षेप: प्रायशो असमाहितएव भवति यत् गुणदोषयो: विषयनिष्ठत्वे पुरुषभेदेन युगपद् भ्रम-प्रमयो: अनुपपत्ति: स्यात्? गुणदोषयो: उभयं प्रति साधारण्येन एकस्य प्रमात्मकम् अपरस्य भ्रमात्मकं ज्ञानम् इति अनुपपन्नं भवति. यस्य भ्रमात्मकं ज्ञानं भवति तत्र इन्द्रियदोषोऽपि कल्पनीय: इति उत्तरदाने किं वा अदृष्टाश्रयणे कृते भूयान् सन्तोषो न भवति.

तथापि न अस्मिन् पक्षे जयन्तभट्टानाम् आदर: किन्तु ''अन्यद् आलम्बनम् अन्यच्च प्रतिभाति'' इति तृतीये पक्षएव आदर:. अस्मिंश्च पक्षे नहि विषयस्य अन्यथात्वशङ्कापीति- ज्ञानस्यैव अन्यथात्वं स्वीकरणीयम. तत्रच ये प्रश्ना: समुपस्थापिता: ते सरलतया समाधातुं शक्यन्ते.

अत्र प्रथमा आपत्ति: आसीत् ''रजतम् अहं जानामि'' इति अनुव्यवसायो न स्यात् ''शुक्तिं रजतत्वेन जानामि'' इति च अनुव्यवसायो भवेत्. अत्र अयम् अभिसन्धि: अस्ति यत् शुक्ति: यदि स्वाकारं नैव समर्पयति तदैव ''रजतम् अहम् अनुभवामि'' इति अनुव्यवसाय: सम्भवति. शुक्त्या स्वाकारसमर्पणे शुक्तेरपि भानम् आवश्यकम्. अत्र ब्रूमो यत् शुक्तेरपि भानं भवत्येव किन्तु नहि शुक्तित्वादिधर्मपुरस्कारेण किन्तु इदन्तया शुक्ते: भानं भवति. ''रजतम् अहम् अनुभवामि'' इत्येव नास्ति ज्ञानाकार: किन्तु ''इदं रजतइति अहम् अनुभवामि'' इति विद्यते ज्ञानाकार:. इदम्पदार्थभूतया शुक्त्या स्वाकारसमर्पणादेव ''इदं रजतत्वेन जानामि'' इति भवति अनुव्यवसाय:.

यदिच शुक्त्या स्वाकारो नैव समर्प्यते अयमेव पक्षः स्वीक्रियते तर्हि दोषो दर्शितः शुक्त्यालम्बने प्रमाणविरहः. अत्रापि शुक्तेः आलम्बनत्वं जयन्तभट्टोक्त्या **''इदम् इति अङ्गुल्या निर्दिश्यमानं कर्मतया यज् ज्ञानस्य जनकं तद् 'आलम्बनम्' इति उच्यमाने न कश्चिद् दोषः''**[१२] इति रीत्या व्यवस्थापयितुं शक्यते. ''न इदं रजतम्'' इति अनुव्यवसायोऽपि शुक्तेः आलम्बनतामेव ब्रवीति. अतो न इमे आक्षेपा अन्यथाख्यातिं स्पृष्टुमपि शक्नुवन्ति.

**अन्यख्यातौ सम्भाविता: दोषाः :**

जयन्तभट्टमहोदयाः वल्लभाचार्यादपि पूर्ववर्तिनइति न्यायमञ्जर्याम् अन्यख्यातेः नास्ति काचिद् विचारचर्चा नच कश्चिदपि दोषएव अस्यां ख्यातौ प्रदर्शितः किन्तु आत्मख्यातिरसत्ख्यातिपक्षयोः अख्यातिपक्षे च ये दोषा उपदर्शिताः तेषु केचन अत्रापि शक्यन्ते उपस्थापयितुम्. केचनच शक्यन्ते नवीना आहितुम्. तथाहि अन्यख्यातौ ''बुद्धिः अर्थवत् ख्यायते'' इति स्वीकार्यम्. आत्मख्यातौ तावत् ''तदन्तर्ज्ञेयरूपं बहिर्वद् अवभासते'' इति स्वीक्रियते. अत्र जयन्तेन दोषः आक्षिप्तो यद् अस्याम् आत्मख्यातौ ''इदं रजतम्'' इतिवत् ''अहं रजतम्'' इत्यपि ज्ञानं भवेत्. अयं दोषस्तु नैव आक्षिप्तुं शक्यते किन्तु ग्राहकाद् विच्छिन्नमेव ग्राह्यम् अवभासते, आत्मख्यातौ अन्यख्यातौ च उभयत्रापि ग्राहकाद् आत्मनो ग्राहिकायाः बुद्धेः च विच्छिन्नं ग्राह्यं नैव अवभासेत इति उभयत्र समानो दोषः.

यदिच बौद्धं रजतमेव ख्यायते तर्हि प्रष्टुं शक्यते अत्रापि यद् इदं बौद्धं रजतं सद् वा असद् वा भवति? यदि सद् इति चेत् तर्हि इदन्त्वावच्छिन्नेन सह तस्य बौद्धस्य रजतस्य कश्चित् सम्बन्धो अवभासते नवा? यदि इदमा साकं मायिकस्य रजतस्य अभेदो भासते तर्हि अन्यथाख्यातिरेव स्याद् इयम्, अन्यस्य इदमो रजताभेदेन रूपेण अन्यथाभानात्. यदिच इदमा रजतस्य कश्चित् सम्बन्धो न अवभासते चेत् तर्हि इयम् अख्यातिरेव स्यात्, बुद्ध्या गृहीतस्य मायिकस्य रजतस्य

चक्षुर्गृहीतस्य इदमः च सम्बन्धाग्रहात्. अपिच अस्मिन् कल्पे पुरोऽवस्थिते लोकानां रजतोपादानार्थं प्रवृत्तिः न स्यात्. बौद्धस्य रजतस्य असत्त्वेतु सदसत्ख्यातिरेव इति. तस्य रजतस्य अनिर्वचनीयत्वेतु अनिर्वचनीयख्यातिरेव स्याद् इयम् अन्यख्यातिः, नतु आभिः ख्यातिभिः इयं भिद्यते.

अपिच अन्यख्यातौ औपाधिकस्य भ्रमस्य अन्तर्भावो नैव कर्तुं शक्यते, यथा निरुपाधिको भ्रमो अन्यख्यातौ अन्तर्भवति. तथाहि ''घटो भ्रमति'' ''शङ्खः पीतः'' ''सिता कट्वी'' इत्यादिकानाम् औपाधिकानां भ्रमाणां नैव अन्यख्यातिरूपं सम्भवति, अन्यस्य सदृशस्य ख्यानाभावात्. निरुपाधिके भ्रमे ''इदं रजतम्'' इत्यादौ इन्द्रियसम्प्रयुक्तशुक्तिसदृशस्य बौद्धस्य रजतस्य ख्यातिः भवति, सोपाधिकेषु उपर्युक्तेषु भ्रमेषु इन्द्रियसम्प्रयुक्ताद् अन्यस्य ख्यातिर् नैव भवति. अतएव सोपाधिकभ्रमस्य ''शङ्खः पीतः'' इत्यादेः **''अन्यथाज्ञानन्तु संशय-विपर्यासादिभ्यो भिन्नं मायिकं ज्ञानान्तरमेव नतु भ्रमः''**[१३] इति वदद्भिः बालकृष्णभट्टमहोदयैः सोपाधिकभ्रमाणां भ्रमत्वमेव निवारितम्. किन्तु विचित्रो विरोधः प्रमेयरत्नार्णवग्रन्थेन सह अत्र समुपस्थितो भवति. प्रमेयरत्नार्णवे ''शङ्खः पीतः'' ''घटो भ्रमति'' इत्यादीनामपि विपर्यासएव परिगणनं कृतम् अस्ति. तथाच प्रोक्तम् **''अयञ्च विषयदोषात् करणदोषात् च भवति यथा 'इदं रजतम्'इति, 'शङ्खः पीतः' इति, 'घटो भ्रमति' इति बहवः.''**[१४]

अपिच **''सम्प्रयुक्तभिन्नार्थमात्रप्रतिपादकं बाह्यं ज्ञानम्''** इति विपर्यासलक्षणं प्रस्तूयते. अत्र सुविचार्यम् एतद् यत् किं भ्रमात्मकज्ञानेन सम्प्रयुक्ताद् भिन्नएव अर्थः प्रतिपाद्यते ? यदि स्याद् एवं तर्हि अन्यख्यातिः साधीयसी भवेत्. सम्प्रयुक्तशुक्तिभिन्नं रजतादिकमेव केवलं भ्रमेण प्रतिपाद्यते नतु शुक्तिः इति आशयेन इदं लक्षणं क्रियते. किन्तु सम्प्रयुक्ता शुक्तिरपि इदन्तया भासते इति अनुभवसिद्धं, फलतो न इदं लक्षणं साधु सम्भवति. इदमोऽपि भाने सुस्पष्टमेव अन्यथाख्यातिः आपन्ना भवति.

**निष्कर्षः :**

अनया विवेचनया अन्यख्यातिपक्षे ख्यातिसङ्करो अन्यथाज्ञानस्य

अन्यथाज्ञानस्य अन्यख्यातौ अनुगमाभावादयः च नैके दोषाः आपतन्ति. अन्यथाख्यातिपक्षे च दोषाणां नास्ति सम्भावना. ज्ञानलक्षणसन्निकर्षस्वीकारः प्रमाणशून्य इति वक्तुं शक्यते किन्तु वाल्लभानां 'माया'नामको अलौकिकसन्निकर्षोऽपि तत्स्थानीयएवेति नहि अनयोः पक्षयोः इमां दृष्टिम् आश्रित्य सम्भवति गुणदोषपरीक्षा. अन्यथाज्ञानस्यापि भ्रमत्वम् अनुभवानुरोधेन स्वीकरणीयमेव. यतोहि न इदं प्रमात्मकं ज्ञानम् अस्ति, सतिच एवम् अन्यथाख्यातिरेव स्यात् साधीयसी. अतएव उक्तं बालकृष्णभट्टेन **''ननु अन्यथाज्ञानं न प्रमात्मकम् अतो भ्रमरूपं मन्तव्यम्. तथा सति अन्यथाख्यातिरेव स्यात्.''**[१५] अस्याः आशङ्कायाः समाधानं यद् दीयते तत् साम्प्रदायिकानामेव शोभते नतु तार्किकाणाम्. तत्रहि सुबोधिन्यादिग्रन्थानुसार-मेव अन्यथाज्ञानस्य मायिकज्ञानान्तरत्वव्यपदेशो विद्यते. सच नैव विचारपदवीम् अधिरोहति.

एवं प्रकारेण अन्यथाख्यातिविशेषो अन्यख्यातिः अन्यथाख्यातिविशेषश्च अन्यथाज्ञानम् इति साधु वक्तुं शक्यते. 'अन्यख्यातिः' अन्यथाख्यातेरेव सञ्ज्ञान्तरम् अस्ति, अन्यथाख्यातिश्च निरुपप्लवा.

-----------

**सन्दर्भाः :**

१. अन्यथाख्यातिन्तु वृद्धाः. पृ.१६० तात्पर्यटीका.

२. पृ.१५२-१५३ न्यायवार्तिकम्.

३. पृ.२५८ न्यायमञ्जरी प्रथमखण्डः.

४. तदेव

५. तस्येन्द्रियार्थजन्यत्वं सिद्धं तद्भावभावतः न ह्यनुन्मीलिताक्षस्य मरौ सलिलवेदनम्. अर्थोऽपि जनकस्तस्य विद्यते नासतः प्रथा. तत्रैव पृ.१३५.

६. तत्र बाह्येन्द्रियजे भ्रमज्ञाने न क्वचिन् निरालम्बनता दृश्यते... अन्तःकरणदोषेण विभ्रमो यस्तु जायते, असत्यपि महेलादौ ..., अनपेक्षिततत्तुल्यपदार्थस्यैव या पुनः, मानसी मन्मथोन्मादमहिम्ना मानिनीमतिः'' पृ.५५, न्यायमञ्जरी तृ.खण्ड.

७. पृ.२५१ तत्रैव.

८. ''संस्कारस्तु जातस्य ज्ञानस्य सूक्ष्मावस्था इति उक्तम्'' पृ.१४५ प्रस्थानरत्नाकरः.

९. पृ.८५ बालकृष्णग्रन्थावली, प्रमेयरत्नार्णवान्तर्गतख्यातिविवेकः.

१०. पृ.१४५ प्रस्थानरत्नाकरः.

११. ख्यातिवादीयमङ्गलाचरणम्.

१२. पृ.२६२ न्या.म. प्रथमखण्ड.

१३. पृ.१८४ बालकृग्रन्थावली, निर्णयार्णवः.

१४. पृ.२५ प्र.र.

१५. पृ.१८३ बाल.ग्र.निर्णयार्णवः.

**सन्दर्भग्रन्थाः :**


१. ख्यातिवादः, श्रीपुरुषोत्तमचरणविरचितः.

२. न्यायदर्शनम्, भाष्य - वार्तिक - तात्पर्यटीका - परिशुद्धियुक्तम्, गोतमविरचितम्. सम्पादक : प्रो. अनन्तलालठाकुर, मिथिलाविद्यापीठग्रन्थमाला, १९६७.

३. न्यायमञ्जरी, ग्रन्थिभङ्गव्याख्यासंवलिता, जयन्तभट्टविरचिता खण्डत्रयात्मिका, सं.सं.वि.वि., वाराणसी १९८२.

४. प्रस्थानरत्नाकरः, श्रीपुरुषोत्तमचरणविरचितः, श्रीवल्लभविद्यापीठ-श्रीविट्ठलेशप्रभुचरण आ.हो.ट्रस्ट, वैभव को. ओपरेटिव सोसाइटी, कोल्हापुर, महाराष्ट्र, वि.सं.२०५६.

५. श्रीबालकृष्णग्रन्थावली, प्रमेयरत्नार्णव, निर्णयार्णव, सेवाकौमुदी. श्रीबालकृष्णभट्टविरचिता. श्रीवल्लभविद्यापीठ-श्रीविट्ठलेशप्रभुचरण आ.हो.ट्रस्ट, वैभव कॉओपरेटिव सोसाइटी, कोल्हापुर, महाराष्ट्र, वि.सं.२०५६.


--------

## संगोष्ठ्युत्तरलेखन


**गो.श्या.म.**


अत्र श्रीमत्सच्चिदानन्दमिश्रमहाभागानां प्राचीनन्यायविषये सम्प्रेषितेऽस्मिन् वैदुष्यपूर्णनिबन्धे अन्यख्यातिविषये यत् समालोचनं सम्प्राप्तं तेन मिश्रमहाभागानां

प्रति नैजं भृशं कार्तज्ञ्यं विज्ञापयन्नेव वाल्लभवेदान्तदृष्ट्या विवक्षितं किमपि तदत्र योजयामि.

१.तत्र प्रथमं तावद् मिश्रमहाभागाः ''**अन्यत्र सतः तत्र अलब्धसत्ताकत्वेऽपि**इ-त्यादिना ''**अतः शुक्तित्वादेः अतिरस्कारेऽपि रजतत्वादिकस्य प्रकारीभावो शुक्त्यादौ सम्भवति**'' इत्यन्तेन भागेन यत् निरूपयन्ति तत्र अन्यत्रान्यदा सतो रजतस्य पुरोवस्थिते इदमास्पदीभूते विषये अलब्धसत्ताकेन प्रकारीभूतेन रजतत्वेन यद् भ्रान्तिः उपपाद्यते तद् अन्यत्रान्यदा सतोऽपि भ्रान्तिदेशकालयोः असत्त्वेनैव अजागलस्तनरूपत्वा-देव अकिञ्चित्करम् इति प्रतिभाति. अथ भ्रान्तिदेशकालयोः असत्त्वेऽपि अन्यत्रान्यदा सत्त्वादेव किञ्चित्करत्वे उपपानीयेतु भ्रान्तौ सतो रजतस्य सतएव रजतत्वस्य चापि भानात् सत्ख्यातिवादापत्तिः. तत्र इदमास्पदीभूते शुक्तिशकले रजतत्वस्य असत्त्वेन सत्ख्यातिवादप्रवेशपरिहारप्रयासेतु असतख्यातिवादे प्रवेशो दुर्वारः. अथ भ्रान्तिदेशकालयोः असत्त्वेऽपि अन्यत्र सत्त्वेन उभयविधख्यातिवादप्रवेशपरिहारेतु सदसत्ख्यातिवादे प्रवेशः कुतो न ? सत्त्वासत्त्वयोश्च एकतरानिधरितु अनिर्वचनीयख्याति-वादसांकर्यञ्चापि. यदितु सर्वेभ्योऽपि एतेभ्यः ख्यातिवादेभ्यः स्मृत्युपनीतरजतत्वभाने ज्ञानलक्षणादिप्रत्यासत्त्यादिप्रक्रियायाः वैलक्षण्याङ्गीकारादेव न गतार्थतेति कुशकाशावल-म्बने अन्यख्यातिवादिनामपि प्रक्रियान्तराभ्युगमेन स्ववैलक्षण्यस्य निरूपयितुं शक्यत्वेन न तत्रापि ख्यात्यन्तसांकर्यम् इति समः समाधिः.

२.यत्पुनः ''**यस्य भ्रमात्मकं ज्ञानं भवति तत्र इन्द्रियदोषोऽपि कल्पनीयः**'' इति उत्तरदानं न तत्र सन्तोषावहा प्रश्नसमाहतिः जातेति मन्ये. यस्माद् दोषवशात् निगूहितनिजशुक्तिरूपाकृतिना अनिगूहितेदन्त्वाकृतिना शुक्तिशकलेन रजताकारपरिग्रहे अङ्गीक्रियमाणे तेनैव दोषेण तयैव च ज्ञानलक्षणप्रत्यसत्त्या अन्यदेशकालावस्थितरजतवि-शेष्यकः इदन्त्वप्रकारको भ्रमः कुतो न जायते ? नचेष्टापत्तिः इदमास्पदीभूतशुक्तिशकल-विषयकप्रवृत्तिव्याघातापत्तेः. नच इदन्त्वभ्रमादेव पुरोवस्थिते देशे प्रवृत्तिः इति वाच्यं, विनिगमकाभावाद्.

३.अथ तृतीयेस्मिन् पक्षे ''**अन्यद् आलम्बनम् अन्यच्च प्रतिभाति**'' **इति तत्र तावत् शुक्तेः न शुक्तित्वादिधर्मपुरस्कारेण किन्तु इदन्तया भाने अङ्गीक्रियमाणे** विनिगमकाभावात् कुतो रजतविशेष्यताकः इदन्त्वप्रकारको भ्रमो न भवति इति

एकः प्रश्नो असमाहितएव विद्यते. अपरश्चापि इदन्त्वस्य न केवलेन रजतेन सादृश्यं किमुत रजतेतरेष्वपि अनेकेषु विषयेष्विति कुतो न अन्येषामपि विषयाणां भ्रमः इदमास्पदीभूते विषये? अथ चाकचक्यादीनामपि इदन्त्वेन सहैव ग्रहणात् तत्सादृश्यस्य रजते विद्यमानत्वेन रजतस्यैव स्मृत्युपनीतस्य ज्ञानलक्षणप्रत्यासत्त्या बुद्धौ उपस्थापनं यदि कल्प्येत कृतं तदा अन्यथाख्यात्या इदमास्पदीभूतात् शुक्तिशकलाद् अन्यस्य तत्सदृशस्य स्मृत्युपनीतस्यैव भानाङ्गीकाराद् अन्यख्यातिवादे प्रवेशः आपन्नः. अन्योपस्थितिं विना अन्यथात्वस्य उपस्थितेः असम्भवात् च किम् अन्तर्गडुना अन्यथात्वेन?

४.तत्र यद् मिश्रमहाभागैः **''आत्मख्यातौ अन्यख्यातौ च उभयत्रापि ग्राहकाद् आत्मनो ग्राहिकायाः बुद्धेः च विच्छिन्नं ग्राह्यं नैव अवभासेत इति उभयत्र समानो दोषः''** इति उक्तं तत्र मन्ये न्यायमतेऽपि यदि तावद् ज्ञानलक्षणाप्रत्यासत्त्यैव भ्रमभातविषयस्य उपस्थापनं, न पुनः ज्ञेयात्मिकया कयाचित् प्रत्यासत्त्या, तदा अन्यथाख्यातावपि ग्राहकसम्बन्धाद् भिन्नस्य ग्राह्यस्य सम्बन्धस्य अभावादेव विच्छिन्नं ग्राह्यम् अन्यथाख्यातिवादेऽपि नैव अवभासेतइति त्रयाणामपि अस्माकं समानो दोषः स्यात्.

५.यच्चाप्युक्तं **''बौद्धं रजतं सद् वा असद् वा भवति?''** अत्र वाल्लभानाम् अभिप्रायस्तु एवं भवति रजतात्मिका बुद्धिवृत्तिस्तावत् सदेव तस्यां च इन्द्रियेण विषयोपस्थापनं विनैव व्यामोहकमायामोहितत्वेन रजताकारग्रस्तता ततएव इन्द्रियसम्प्रयुक्तार्थविषयदेशस्थतया यद् रजतस्य यद् बुद्धिकरणकं प्रदर्शनं तद् रजतं तत्र पुरोवस्थितदेशे तदा न आविर्भूतमिति असत्त्वम् उच्यते. अन्यथा बुद्धिवृत्तित्वेनतु सत्त्वमेव. तस्माद् **''यदि सद् इति चेत् तर्हि इदन्त्वावच्छिन्नेन सह तस्य बौद्धस्य रजतस्य कश्चित् सम्बन्धो अवभासते नवा?''** इति यत् पृच्छ्यते तत्र अन्यख्यातिवादानुसारेण एवं समाधानं भवितुमर्हति यत् निर्विकल्पकसामान्यज्ञान-सविकल्पकविशेषज्ञानयोः हि इतरेतरापेक्षित्वम् उभयाभिमतम्. तत्र सामान्यज्ञानेन अवभातस्य इदमास्पदीभूतस्य विशेषविकल्पाकांक्षायां मायामोहितबु-द्ध्युपस्थापितस्य रजतत्वरूपविकल्पस्य च सामान्यज्ञानविषयिभूतेदमः आकांक्षेति उभयोः इतरेतरापेक्षित्वं प्रमाज्ञानेऽपि यथा वर्तते तथैव भ्रमज्ञानेऽपि इति अङ्गीकरणीयमेव. उभयोरपि सामान्यविशेषज्ञानयोः कारणकार्यभावोऽपि भ्रमप्रमाज्ञानयोः वादिप्रतिवाद्युभय-

साधारणएव अभ्युपगमइति तेनैव सता सम्बन्धेन इदन्त्वावच्छिन्नेन सह बौद्धस्य रजतस्य सम्बन्धोऽपि सन्नेव असत्त्वन्तु तस्य बहिष्ठत्वांशएव आरोपितः इति न काचित् क्षतिः. सामान्यज्ञान-विशेषज्ञानविषयिभूतयोः सम्बन्धः प्रमात्मके ज्ञाने अभेदरूपो भवति भ्रमात्मके ज्ञाने च अभेदारोपपुरस्सरएव भवति. तदेतद् न्यायवाल्लभमताभ्याम् उभाभ्यामपि अवश्यम् अङ्गीकरणीयमेव. तत्रैतत् स्याद् ''**यदि इदमा साकं मायिकस्य रजतस्य अभेदो भासते तर्हि अन्यथाख्यातिरेव स्याद् इयम्, अन्यस्य इदमो रजताभेदेन रूपेण अन्यथाभानात्**'' इति तत्र ब्रूमः नैवं स्याद् इति, यस्माद् भासमानोऽपि अभेदः आरोपितएव भासते. अन्यथा अभेदस्य अनारोपित्वे न्यायमतेऽपि भ्रमत्वोच्छेदापत्तेः. प्रकारताभानस्य प्रकारिभाननैयत्येन न्यायमतेऽपि न केवलं इदमास्पदीभूते रजतत्वप्रतिभासः अपितु रजतप्रतिभासोऽपि अकामतया गलेपतितएव. अतएव बाधज्ञाने ''नेदं रजतं शुक्तिरियम्'' इति यथा सर्वैः अनुभूयते न तथा ''इदमास्पदीभूते विशेष्ये रजतत्वं प्रकारो न भवति'' इति सर्वैः अनुभूयते. नैयायिकानान्तु या तथाविधप्रतीतिः सा स्वशिष्यैकोपदेशार्हा. ततश्च ''**इदमा रजतस्य कश्चित् सम्बन्धो न अवभासते चेत् तर्हि इयम् अख्यातिरेव स्यात्, बुद्ध्या गृहीतस्य मायिकस्य रजतस्य चक्षुर्गृहीतस्य इदमः च सम्बन्धाग्रहाद्. अपिच अस्मिन् कल्पे पुरोऽवस्थिते लोकानां रजतोपादानार्थं प्रवृत्तिः न स्यात्.**'' इत्यपि खलु अस्थानएव भवतां कण्ठशोषाद् जायमाना तृट्, तथाविधसम्बन्धावभासाभावानभ्युपगमादेव. ''**बौद्धस्य रजतस्य असत्त्वेतु सदसत्ख्यातिरेव... अनिर्वचनीयत्वेतु अनिर्वचनीयख्यातिरेव इयम् अन्यख्यातिः**'' इति तु प्रामादिकमेव आक्षेपौत्सुक्यं प्रतिभाति. अन्यथा अन्यत्र सतोऽपि रजतत्वस्य शुक्तिशकलेतु सत्त्वानभ्युपगमादेव न्यायमतेऽपि सदसत्ख्यातिः दुष्परिहरा स्याद्, सदसतोः एकतरानिर्धारितु अन्यथाख्यातेरपि तत्रैव अनिर्वचनीयख्यातावन्तर्भावः इति समःसमाधिरिति किं केन सम्बद्ध्यते ?

६.मिश्रमहाभागानां ''**सोपाधिकेषु भ्रमेषु इन्द्रियसम्प्रयुक्ताद् अन्यस्य ख्यातिः नैव सम्भवति**'' इति वाचोयुक्तिस्तु अविचारितरमणीयैव. यस्माद् यत्र भ्रमाधिष्ठानयाथार्थ्याज्ञानपूर्वकः सोपाधिको भ्रमः तत्रतु इन्द्रियसम्प्रयुक्तात् स्थिरघटरूपाद्, श्वेतशङ्खरूपाद्, स्वच्छस्फटिकरूपाद् वा अधिष्ठानाद् अन्यस्यैव आरोप्यमाणस्य भ्रमद्घटस्य, अन्यस्यैव च पीतशङ्खस्य, अन्यस्यैव रक्तस्फटिकस्य वा; द्रष्टृभ्रमणरूपोपाधेः, नेत्रगतपित्तजन्यकामलरोगरूपोपाधेः, जपाकुसुमगतलौहित्यवर्ण-

रूपोपाधेः वा प्रयुक्तो ह्यौपाधिको भ्रमो भवत्येव. क्वचिद् अधिष्ठानयाथार्थ्यज्ञानेऽपि भासमाना भ्रमिः पीतिमा रक्तिमा तु इन्द्रियसम्प्रयुक्तायां घटस्थिरतायां शङ्खश्वेततायां स्फटिकस्वच्छतायां वा अन्यासां भ्रमिपीतिमारक्तिमाणां ख्यानादेव अन्यख्यातिरूपाः इति केयम् आशङ्का! विषयस्यास्य अस्मदाचार्यचरणैः श्रीबालकृष्णभट्टैः च ख्यातिविवेके सम्यक्तयोपादितत्वादेव न तत्र कुचोद्यावसरः कश्चित्. यत् पुनः निर्णयार्णवे श्रीबालकृष्णभट्टैः स्वमतस्यैव संशोधनं कृतं तत्तु एकदेशिमतत्वेन नास्माभिरपि यथोक्तमाद्रियते. ग्रन्थकर्तुः वदतोव्याघातदोषस्तु न्यायमतेऽपि बहुशः **''कर्तृजन्यं कार्यत्वाद्''** इति उक्त्वा तत्र गौरवदोषापत्त्या **''कृतिजन्यत्वं प्रागभावप्रतियोगित्वाद्''** सांकर्यस्य क्वचिद् जातिबाधकत्वं क्वचित्पुनः अबाधकत्वमपि अभ्युगतम् इत्यादिकमिव बहुशः स्वमतपरिष्काराणां समुपलभ्यमानत्वाद् तन्नीत्यैव उन्नेयम्.

७.अतो यत् निष्कर्षे मिश्रमहाभागाः निरूपयन्ति '' **'सम्प्रयुक्तभिन्नार्थमात्रप्रतिपादकं बाह्यं ज्ञानम्' इति विपर्यासलक्षणं प्रस्तूयते. अत्र सुविचार्यम् एतद् यत् किं भ्रमात्मकज्ञानेन सम्प्रयुक्ताद् भिन्नएव अर्थः प्रतिपाद्यते? यदि स्याद् एवं तर्हि अन्यख्यातिः साधीयसी भवेत्. सम्प्रयुक्तशुक्तिभिन्नं रजतादिकमेव केवलं भ्रमेण प्रतिपाद्यते नतु शुक्तिः इति आशयेन इदं लक्षणं क्रियते. किन्तु सम्प्रयुक्ता शुक्तिरपि इदन्तया भासते इति अनुभवसिद्धं, फलतो न इदं लक्षणं साधु सम्भवति. इदमोऽपि भाने सुस्पष्टमेव अन्यथाख्यातिः आपन्ना भवति''** इत्यत्र वस्तुतस्तु इदमेव ज्ञातव्यं भवति यद् निर्विकल्पक-सविकल्पक-ज्ञानयोः यत्र एकार्थावलम्बित्वं ''इयं शुक्तिः'' इत्यत्र शुक्तिविषयकं ज्ञानमिव तत्र इन्द्रियसम्प्रयुक्ताद् अर्थाद् भिन्नार्थप्रतिपादकत्वं न भवति. भ्रमज्ञानोदाहरणेतु निर्विकल्पकं सामान्यं ज्ञानं हि इन्द्रियसम्प्रयुक्तार्थविषयकं, सविकल्पकन्तु तेन जायमानं न इन्द्रियसम्प्रयुक्तार्थविषयकं किन्तु ततो अन्यद्-मायामोहितबुद्ध्युपस्थापित-धर्मिधर्मान्यतर-विषयकम्. तत्र इदमो निर्विकल्पकभानविषयता आरोप्यमाणविषयस्यतु सविकल्पकभानविषयता इति व्यवस्था. तस्मात् तस्यैव सम्प्रयुक्तार्थभिन्नविषयकत्वं प्रतिपाद्यते. तत्र निर्विकल्पकज्ञानविषयीभूता एका इदन्ता शुक्तिविषयिका सविकल्पकज्ञानविषयीभूता अपरातु इदन्ता रजतविषयिका इति इदन्ताद्वैविध्यं जनकज्ञान-जन्यज्ञान-निरूपितविषयताद्वैविध्यहेतुकम् अङ्गीक्रियते. तद् आहुः अस्मदाचार्यचरणाः **''अतः इदमंशेऽपि 'इदं रजतम्' इति ज्ञानम् अप्रमाणं, नहि ज्ञाने अंशो अस्ति''**( सुबो.३।२६।३० ) एतद्व्याख्याने श्रीपुरुषोत्तमाअपि अस्याशयं

विवृण्वन्ति **''वृत्तिगणनया भ्रमस्यापि वृत्त्यन्तरत्वेन निश्चयात्. तथाच संस्कारप्राबल्येन बर्हिजायमानेऽपि विपर्यासे अनुभवसामग्रीदौर्बल्याद् इदमंशोऽपि विपर्यस्तएव भासते''** (तत्रैव प्रकाशे) एतेन भ्रमज्ञानात् पूर्वं जायमानम् भ्रमजनकं च इदंविषयकं निर्विकल्पकं सामान्यज्ञानं पुरोवर्तिवस्तुविषयकं, तदुत्तरं तेन जन्यं सविकल्पकं मायामोहितबुद्धिकल्पितवस्तुविषयकं सविकल्पकं भ्रमज्ञानं, तत्र भासमानम् इदन्त्वन्तु रजतविषयकतयैव पर्यवस्यति इति फलितम्.

८.तथैव **''अन्यख्यातिपक्षे ख्यातिसङ्करो अन्यथाज्ञानस्य अन्यख्यातौ अनुगमाभावादयः च नैके दोषाः आपतन्ति. अन्यथाख्यातिपक्षे च दोषाणां नास्ति सम्भावना. ज्ञानलक्षणसन्निकर्षस्वीकारः प्रमाणशून्य इति वक्तुं शक्यते किन्तु वाल्लभानां 'माया'नामको अलौकिकसन्निकर्षोऽपि तत्स्थानीयएवेति नहि अनयोः पक्षयोः इमां दृष्टिम् आश्रित्य सम्भवति गुणदोषपरीक्षा''** इति यद् उक्तं तत्तु वाल्लभवेदान्ते व्यामोहकमायास्वीकारः शास्त्रप्रामाण्यसिद्धः न कल्पितइति न तत्र कल्पनालाघवगौरवदोषचिन्तनावसरः साम्प्रतिकः. नैयायिकमतेतु ज्ञानलक्षणाप्रत्यासत्तिः तावत् कल्पितैवेति तत्र कल्पनागौरवदोषस्य अवकाशोऽपि वर्ततएवेति गुणदोषपरीक्षा तत्रतु कर्तव्यैव, प्रमाणसिद्धे अर्थे गौरवस्य अदुष्टत्वादेवेति वाल्लभानां मतम्.



# SOME REFLECTION ON NIMBĀRK'S THEORY OF PERCEPTUAL ERROR

M. M. Agrawal

The term Khyāti is derived from the root Khyā meaning 'to appear', 'to manifest' and 'to perceive', and hence stands for 'perceiving' in the sense of 'perception'[1]. In this way 'Khyātiषda' may mean theory of 'perception'. But then how can the theory of perception turn out to be the theory of error? It may be said that since perception includes definite cognition includes definite as well as indefinite cognition[2] and the Khyāativāda is discussed only in the context of bhrama or bhrānti or error, an indefinite cognition; each theory, therefore, turns out to be a view about the nature of cognitive content of the so called erroneous perception. There are many speculations about this cognitive content. If for Satkhyāti this becomes real; for Asatkhyāti it is unreal; for Sad-asat-khyāti both real and unreal; for Anirvacanīyakhyāti indeterminable and so on. Here, the dispute seems to be purely centering around the specific determination of an epistemic concept, viz. the cognitive content. Hence error is an epistemological concept.

Philosophers, while dealing with the concept of error, have analysed it from logical, metaphysical, psychological and physiological points of view. In the West Errors obtain interpretations which are mostly psycho-physiological and logical, in the Indian Philosophy, however, emphasis is laid on metaphysical consideration and also on epistemological analysis. According to Indian philosophy, psychology is an appendage of metaphysics and that man being essentially a spirit, his body and mind are only artificial and invariable additions to his spiritual being due to Avidyā and Karma. He will, however, have to remain under the influences of body and mind in the ordinary conditions of worldly existence. Naturally, therefore, the Indian thinkers had recourse to a psychological analysis of error only so far as it is helpful to anybody for understanding its ontological status. Physiological explanation of error also does not figure prominently in Indian Philosophy. In Nimbāraka's account of error, however, we find treatment from the points of views of ontology, logic, psychology and physiology. He has also made an attempt to distinguish between illusion and dream - hallucination in his theory of error.

The Nimbārka theory of error is discussed by many exponents of the Nimbārka school of Vedānta and all of them, in common, hold that "all cognitions of all objects are valid" "*Sarvaṁ vijñānaṁ yathārthakam nikhilasya vastunaḥ*"[3]. The very first writer, in this regard,

is Nimbārkācārya himself. Puruṣottamācārya, the third Ācārya after Nimbārka, a well-known exponent of the sect of Nimbārka, in his Vedānta-ratna-mañjuṣā, a copious commentary on Nimbārka's Daśaślokī, contributes further to the theory of error known as Yathārtha-Khyāti as developed by Nimbārka. Sundarabhatta, the thirteenth teacher after Nimbārka, in his Siddhānta-Setukā, an elaborate commentary on the Brahmasūtras prepared in elucidation of Devācārya's Siddhānta-jāhnavī, follows Puruṣottamācārya exactly. Keśavakāśmīribhatta (14th century), the twenty-ninth teacher after Nimbārka, the well-known scholar and commentator of the Nimbārka--school, is the next important Nimbārkist who, defending the Yathārthakhyāti in his Vedānta-kaustubha-prabhā, a copious commentator of the Nimbārka-school, is the next Nimbārkist who, defending the Yathārthakhyāti in his Vedānta-kaustubha-prabhā, a copious commentator on the Brahmasūtras prepared in elucidation of Śrinivasācārya's Vedāntakaustubhā which itself is a commentary of the Vedānta-pārijāta-saurabha of Nimbārka or Brahmasūtra-Nimbārka-bhāṣya, develops the theory with a name Satkhyāti along with a thorough criticism of other rival theories of error. Keśavakāśmīri's account of error is further defended and elaborated by Puruṣottama Prasāda Vaiṣaṇava I, the thirtysecond teacher after Nimbārka, in his Srutyanta-kalpavalli, a copious commentary on Nimbārka's Saviśeṣa-nirviśeṣa-Śrīkṛṣṇa-stavarāja, and also by Puruṣottama

Prasāda Vaiṣṇava II (1623 A.D.) in his Śrutyanta-sura-druma, an elaborate commentary on Nimbārka's SNKS. Mādhava Mukunda of seventeenth century is another famous Nimbārkaite who, in his Para-pakṣagiri-vajra, discusses Satkhyāti along with rival theories of error on the steps of Keśavakāśmīrin. Anantarāma Devācārya (17th century) error in his Vedānta-tattvabodha and Vedānta-ratna-mālā.

Keśava-kāśmīrin and Mādhava-Mukunda, the Nimbārkists define Bhrama as "एकत्र सतो अन्यत्र आरोपत्वं भ्रमत्वम्"[4] i.e. illusion or error means perceiving a thing existing at one place superimposed upon another, for example perceiving a snake in place of a rope. The fact that for Nimbārkists not only the rope but also the snake perceived in it are real. They hold that an erroneous perception has a real object for its objective substrate[5]. This is the Satkhyāti.

But Vallabhācārya defines Bhrama quite differently as "विपर्यासो भिन्नार्थप्रतिपादकः"[6] i.e. error means perceiving an object other than that with which the sense-organ is in contact. In the case of the nacre-silver-error, the definite cognition consists in the perception of nacre, but the indefinite cognition consists in the further attribution of silver to it, this additional element constitutes error or Bhrama. This is the Anyakhyāti[7]. The fact that for Vallabhāites, perception arises from a real contact

of the sense-organ and its objects[8]. Here it is Buddhi-vṛtti[9] through which both the definite and the indefinite cognitions are apprehended. It is roused through the category of time existing in the Buddhi. In the definite cognition it manifests a preponderance of Sattva-guṇa by which the perception of an object, a real object, nacre and not of an unreal object, silver, product of the Buddhi, becomes valid. In that definite cognition it is supposed that by Rajas the impression of silver, an unreal object experienced before is projected on the real object of perception and by Tamas the nature of nacre, the real object as such is obscured, in this manner a nacre is perceived silver. Hence an erroneous cognition becomes cognition becomes invalid.

It may be noted that the definition of Bhrama is very similar in N and in V. They both say that the erroneous object is projected on the real object, whose true nature is thereby hidden and presented as something else. But for V the erroneous object is unreal object, a product of the Buddhi; while N holds that an erroneous perception also has a real object. In fact, the basic difference between two is regarding the manner in which perceptual cognition of things is possible. According to N, perceptual cognition is gained immediately through sense-object-contact[10]. The sense organs manifest objects only when they are in contact with them. In the case of visual perception, the visual organ comes in contact

with the object through Vṛtti. Vṛtti is a peculiar modification of the sense-organ which connects it with the objects. Such a modification can stream out of a sense-organ and can connect the latter with distant objects for the purpose of apprehension. All sense-organs are thus described as Prāpya-prakāśakāri[11]. Here N does not admit the Buddhi-vṛtti at all through which an unreal object is produced. N is thus near to modern science where the light waves are reflected from the object to the eye. But V takes the opposite course and emphasizes the Buddhi-vṛtti through which the definite and the indefinite cognitions are apprehended. According to V, an organ of knowledge when explained in the western light, is the sensory psycho-physical impulse that goes out the body and like the photographic process receives an immediate impression of the object. V's manner is more scientific than of N. According to N, there seems to be no difference between definite perception and indefinite perception, when considered logically. Truth means agreement of our thoughts with facts accompanied by a belief in their agreement. In N's theory of Khyāti or error, the object of erroneous thinking is in agreement between the actual fact. Difference arises only when one proceeds to apply pragmatic test. Pragmatically, the object of definite cognition is useful, but the object of indefinite cognition fails to be of any service to human beings. That is, the silver in the shop is useful for making ornaments, whereas the silver perceived is

nacre is of no practical value. On the final analysis, error is due to the non-apprehension of the difference between the silver which has practical utility and the one which does not have it. It is similar to Akhyāti or non-apprehension of the difference between the two. So even in theory of Satkhyāti, Akhyāti is involved as one of factors for causing error. In view of this fact, the Nimbārkāites' theory of error may be called as Akhyāti-cum-Satkhyāti.

Besides, when considered psychologically, erroneous experience is for Nimbārkists as factual as the so-called true experience. Both the forms of experience are directly received from the real stimuli in the same process, only with this difference that while the content of one is practically useful, the content of the other is not. In erroneous experience, the subject does not introduce anything from his imagination which is objectively unreal. The thing noticed by him is there. The external stimulus, operative in error, is not understood as unreal. The object is in the external world in the same form in which it is perceived. The silver-portion, which is the object of the erroneous experience, is in the object and is stimulating the sense-organs of the subject. The result is that the subject perceives silver on the occasion and not the nacre. The question, therefore, arises here: Is error psychologically on a par with the so-called true experience? The very fact that in error the mind of

the perceiver fails to select the dominant and determinant character of the object and selects only a subdued one, proves that psychologically, there is some difference between error and true experience. The cause for the inability of the perceiver to perceive the prominent character of the object lies in the psychological make up of the perceiver only and not the percept itself. It is due to the presence of a particular type of the mental inclination of the perceiver that he perceives a character which is only subdued one in the object. A person, who is greedy for silver will have such a bent of mind that as soon as he comes across any object, in which though silver is not the major element, yet in relation to other existing elements is more prominent, his eyes will immediately catch the silver portion, and he will perceive it as silver. The real Doṣas are due to his inability to receive the impression of nacre, and this inability is due to the mental inclinations he has developed due to his past impressions. So, although error is factual, yet there is difference between erroneous experience and true experience, so far as selection of parts of the real object is concerned. While in true experience, the selection has universal approval, it is not so in error.

Keśavakāśmīrī, a Nimbārkist holds that everything being of the nature of Brahman-brahmātmaka, the cognition of animate and inanimate objects is always

valid beyond doubt and there is no erroneous cognition at all[12]. In the nacre-silver-error, the silver that is manifested to consciousness is real object, for an unreal object can never be apprehended. Otherwise, why is it that only silver is apprehended in a nacre and not jar, or cloth, or some other thing? It can not be argued that silver is apprehended owing to its similarity of the nacre, in as much as the similarity of the nacre with silver will revive the subconscious impression of silver and thus produce the recollection of silver, but will never produce the perception of silver. It is real silver that is the object of the erroneous perception of silver. It is real silver that is the object of the perceptual consciousness of an unreal object which is absurd. The sky-flower, for example, is unreal and it can never become an object even of erroneous perception. When perception is erroneous it is not because the element perceived in error is a subdued one and is not, therefore, the determinant character of that particular object. Due to this, the object perceived in error also fails to satisfy the practical needs of human beings. When silver is perceived in a nacre, the silver perceived does exist in the nacre, but as it exists there in very small quantity, the object is not called silver by anybody[13].

Two questions arise here: How can the so-called erroneous perception, an indefinite cognition, be valid as a perception, a definite cognition? And, how can

the silver, the object, the content of erroneous perception be a real silver? In response to the queries, the Nimbārkāites resort to what is known as the famous doctrine of Trivṛt-karaṇa[14] or Pañcīkaraṇa[15] as a result of which all elements get mixed up in different proportions in different objects. It, therefore, follows that since all elements in different proportions are present in all objects, the diverse objects of the world are not rigidly distinct and different from one another. On the contrary, each object in some respect or another resembles every other object of the universe. The elements present in a piece of rope are the same as those present in a snake. Only quantity is different in these two cases. Therefore, when a man perceives a snake in a piece of rope, he is actually perceiving the snake-portion of the rope, which are small in quantity, the rope-portions which are greater in quantity and more prominent in the object are not revealed for him due to some unavoidable causes - such as distance, absence of proper light, defective eyesight etc. When those causes are removed, the rope-portion becomes more prominent and we say that man is perceiving the object correctly. The snake, the object, the content of the erroneous perception is not, therefore, imaginary. It is real, it is in the object, though in a subdued condition[16]. The Nimbārkaites' theory is thus known as Satkhyāti or Yathārtha-khyāti. But it may be styled as a combination of Satkhyāti and Anyathā-khyāti, because here the snake,

the object, the content of the erroneous perception is real, and the rope is perceived as a snake.

Similarly the perception of water in the mirage is also real according to the process of Pañcīkaraṇa of the five elements. It is not visible, because earthly elements predominate in the mirage. Hence, it is not of any practical value either[17].

It may be noted that a belief in the ontological existence of the object of error is very similar in V and in N. They both believe that the Jagat and its objects are nothing but Brahman, which is the ultimate reality[18]. Hence, the Jagat and its objects are real. But for V, an erroneous object being a product of the Buddhi is unreal, while N holds that erroneous object also being of the nature of Brahman-Brahmātmaka is real. In this regard, V gives a reason why an erroneous object is unreal: It is Maya which confuses the Buddhi and gives rise to an unreal object, similar to the real worldly object, on which the former is superimposed. The Buddhi confused by Māyā sees the object as different from what they really are, but the objects do not become different thereby. Exactly here V presents a new and very interesting term in this regard and says that the unreal object produced by Māyā or manifested by Buddhi is called Viṣayatā, while Brahman is said to be the

Viṣaya[19]. Viṣayatā may refer to the agents as also to attributes. It is of two types: The first one conceals the real nature of object, and the other one is the cause of perception or apprehension of one object as another, - Anyakhyāti. It is cognition which is faulty, not the essence or the form of the object in question. Hence, says V, the Jagat is real, it is only our perception and our judgment of it as different from Brahman and as having an independent existence that is unreal.

While Nimbārkists believe that errors are primarily at the same level as other physical appearances, which are considered as real. The silver perceived in a nacre, is as much non-metal and objective as the nacre. Error consists simply in the selection of the silver-portion of the nacre, which is very small in quantity and is not, therefore, of any practical use. N, being staunch believer in the reality of both Cit and Acit, is earnest to establish that whatever object the individual soul contemplates, exists independently of it. Even an object of error does not depend for its being upon mind of the subject. The erroneous character is as much a part of the stimulus as the real one, and only experience shows that the former is not practically useful and has not obtained the necessary approval of everybody's experience. Since all objects are composed of the same elements, every thing posses the character of every other thing, the perçeiver only selects one or the other

under a particular set of conditions. An error is as much a part of the world as a real fact. Ontological status of the two is not, therefore different. What we perceive in true experience is not more real than what we perceive in error. The Nimbārkists have not recognized any difference in the degree of reality belonging to the objects of definite and indefinite perceptions. This Nimbārkāities' hypothesis is rooted in the doctrine of Pañcīkaraṇa, which is very significant for them to explain all kinds of error. Either directly or indirectly the object of erroneous perception is said to be constituted of any of the five elements. All this shows that N does not feel hesitant to make any metaphysical assumption for holding the doctrine of Satkhyāti.

Moreover, the Nimbārkāites present a different example[20] from above mentioned examples: When a person is suffering from jaundice, he happens to see the white conch as yellow. This is due to the influence of the bile over the rays emanation from the eyes that the white colour is suppressed and the yellow is manifested in its place. This biliary influence is not perceived by others. Hence, those who do not see the yellow colour think him to be wrong, while, in fact, he is not so. Due to suffering from jaundice he adequately perceives a yellow conch in place of white. He is correct. This is the Satkhyāti. This error is purely physiological.

V also quotes this example. According to him, Bhrama is of two types: Nirupādhika-bhrama and Aupādhika-bharma. The above-mentioned examples come under the first type, V gives another interesting example ' 'bhrmadghataḥ'. A person is a moving vehicle feels that the object 'jar' he passes by is moving, but in reality, movement does not belong to 'jar'. This is aupādhika Bhrama. In the Nirupādhika-bhrama, a real rope is perceived by eyes, there being absence of the snake. But, in the Aupādhika-bhrama, both the real jar as well as moving-ness of jar are perceived by eyes, then by Buddhi it is established that "jar is moving". Note that in regard of the reality of the Jagat, according to V, only "Bhrmad ghataḥ" example is scientific: Just as the jar is real and its movement is erroneous or Māyika hence is unreal; so the Jagat is also real, but the difference or plurality experienced in the Jagat is Māyika or erroneous.[21]. This is a fundamental tenet of V. N does not give such division, as he holds that everything being the nature of Brahman is real and says that Maya is nothing at all. It shows that V has a psychophysical approach, while N has only metaphysical view. As regards the dream experiences, a different explanation is offered by the Nimbārkāites. Taking their stand on the authority of the Upniṣad, they explain that the dream objects are created by Īśvara to provide suitable means for the individual to experience pain or pleasure according to his past deeds[22]. The objects

thus experienced in the dream are also real, although they last only as long as they are experienced by the particular individual. The reality of the objective content in all these cases is justified on the basis of a metaphysical stand taken on the strength of the Upniṣadic teaching. But V takes the opposite course and holds that dream-world is just Māyā, since it does not manifest the Again, the Nimbārkāites real nature of an entity in its entirety in relation to time, place and matter[23].

Again, the Nimbārkāites hold that in all the above-mentioned cases of so called erroneous cognitions, both the sources of perception, and the perception itself are always present; and through cause-effect relation one comes to have the cognition of the effect. In every case, the cognition should be present, for if it were not so, and even if the object were present, there would be no effect. In the rope-snake-error, the cognition of the real snake is the cause of fear, trembling etc. A man, who has this cognition, fears and trembles. Sometimes a child, who has no such cognition due to the absence of proper light, catches EVEN THE REAL SNAKE. Note that an unreal object can never be the cause of anything, for the cause must be possessed of certain powers of producing the particular effect. The unreal snake is not the cause of fear, trembling etc., but the real cognition of the snake. And the unreal snake is not also the cause of this cognition of snake,

but the real Doṣas-such as distance, absence of proper light, defective eyesight etc., are the cause of that cognition.[24] Anantarāma Devācārya says that all the cognition which have the real causes are valid[25].

But this is not a proper definition of Satkhyāti. If it is admitted that 'there being real causes, if the effect or the cognition-whether definite or indefinite arises then this fact alone makes the cognition valid, if this is the way Satkhyāti' is characterised'; then all the philosophers maintain that erroneous perceptions are produced by causes such as - Doṣa etc. in the conditions of perceptions. This characterization of Satkhyāti, however, is not acceptable. Different Khyātis have to be explained and distinguished, not in terms of causal-effect relation, but in terms of whether the erroneous object is real or unreal or indeterminable and so on.

The Nimbārkāites thus offer varying explanations to account for these above mentioned different types pf error[26]. But in all these cases they maintain that what is perceived is real, and as such they assert that all cognitions, whether definite or indefinite, are valid in the waking state as well as in the dreaming state on the basis of the doctrines of Brahmatmakatva and Pañcīkaraṇa, or on the basis of causal formula: "There being the real cause, the effect arises." This according

to N is Satkhyāti. But this view can also be described as Anyathākhyāti, since in all these cases of erroneous perception every one has got to admit that one thing is always experienced as another. In view of these observations and arguments, the N's theory of error May be said to consist in a combination of Akhyāti, Anyathākhyāti and Satkhyāti. This doctrine is definitely not scientific. As in that case it is either to be confirmed or confuted by facts. But by any scientific measure it is at least not yet possible to bring out the silvery elements from nacre. This doctrine, therefore, is taken to be a metaphysical one. As metaphysical, however, its justification in terms of empirical facts does not arise. Comparatively, V's theory of error-Anyakhyāti is more scientific, though it is metaphysically similar to Satkhyāti and consequently may be called Akhyati. I personally like V's approach: "Go through the life naturally, don't impose the Buddhi confused by Māyā. Everything is Bhagavān Śrī kṛṣṇa. Puṣṭi[27] is there. You will always enjoy your life with bliss".

I acknowledge, with thanks, my indebtedness to professor V.K. Bhāradwāja (Delhi University) for his suggestions on different aspects of the paper including the general form.

------------

Note :

1 (a)"The Problem of error", Studies in Indian Logic and Metaphycs, by Prof. R.V.Joshi, P.23.

(b) Professor Daisetz Teitaroo Suzuki, in his Work "Studies in Lankāvatārarsūtra, on page 130, observes that "the function Khyativijñāna is to pereive or to reflect things that appear before it just as the mirror reflects all forms before it."

2 Indian Psychology : Cognition, by Jadunath Sinha, vol.I, p.263.

3 Daśaślokī of Nimbārka, Śloka 7.

4 (a)Vednta-Kaustubha-prabhā, 1.1.1, p.33.

(b)Parapakṣagirivajra, p.59.

5 (a)Sarvam vijñānamato yathārthakam śrutismṛtibhyo nikhilasya vastuno brahmātmakatvād iti vedavinmatam, trirūpatāpi śrutismṛtisādhitā—Daśaślokī of Nimbārka,Śloka7.

"All cognitions of all objects are valid, since they, as declared by Śruti and Smṛti, have Brahman for their essence. This is a fundamental tenet of the Nimbārka epistemology which is traced back to the ancient teachings of the Vedas."

(b)This is also the view of the Prābhākara School of Mīmāṁsā and the Viśiṣṭādvaita-Vedānta.

6 (a)Subodhinī 2.26.30.

(b)"Viparyāsastu bhinnārthapratipādakam bāhyam jñānam." —Prasthānaratnākara, p.16.

7 "Indriyeṇa gṛhyamāṇād viṣyād arthāt śuktirūpād anyasya rajatādeh khyātih anyakhyātih"—Prameyaratnārṇava, Khya-tiviveka, p.84; Nirṇayrṇava Taraṅga 4,pp.183-1184.

8 "Indriyārthasatsamprayogajanyam jñānam pratyakṣam"—Prasthānaratnākara, pp.20.

9 "Vṛttih vicāryate... buddhivṛttih sanskārādhādyartham janyate... buddhitattvasy kālakṣubdhasattvādiguṇakṛtovasthāviśe-

ṣaeva..." —Prasthāaratnākara, pp.123-125.

10"pratyakṣendriyārthasannikarṣajanyatvāt" —Vedānta-Kaustubha-Prabhā, 1.1.1.p.60.

11"Yatrendriyasnnikarṣh tasyaiva anubhavo na anyasya" —Vedānta-Kaustubha- Prabhā,2.3.23.p.504.

12Sarvasya jagatah... ityādiśrutismṛtipramāṇen brahmjanytayā ajñānajanyatvābhāvāt satyatvameva" —Vedānta-Kaustubha-Prabhā,2.1.14.p.328.

13Vedānta-Kaustubha-Prabhā,1.1.1.p.33-35.

14Triplication; intermixture of three visible elements, viz. fire, water and earth: the three elements are divided into halves, and then each half is divided into half again. Thus we have of the fire Three divisions-half, one-fourth, and one-fourth, and so of waer and earth. The compound fire is made up of half fire, onefourth water and one-fourth earth. The compound eatrh is in the same way a mixture of half earth, one-fourth fire and one-fourth water. —Chāndogyopaniḍ 6.3.3.

15Quintuplication; intermixture of five elements are divided into halves each, and then each half is divided into four parts. The one eighth part of each of the four element is added to the half of the remaining element and thus the gross element is produced. - Pañcadaśī of Vidyāranya, 1.27.

16(a) Vedānta-Kaustubha-prabhā, 1.1.1, pp. 32-33

(b)"sarvajñānānāṁ yathārthatvasya śāstra-drṣṭayā satkhyātiva-¯dināmasmākamiṣṭatvāt, trivṛtaṁ trivṛtaṁ karavāṇīti śruteḥ... —Śrutyanta-suradruma, p.20.

